REPRODUCTION OF EARLIE EDITION OF THE
SABDARTHACINTAMANIH

# शब्दार्थचिन्तामणिः

# SABDARTHACINTĀMANIH

तृतीय खण्ड

भाग - ब

ब्राह्मावधूत श्रीसुखानन्दनाथः

प्रिन्टवैल

जयपुर- 302 004

Published by
**PRINTWELL**
S-12 Shopping Complex
Tilak Nagar Jaipur 302 004

Distributed by
RUPA BOOKS PVT LTD
H O S-12 Shopping Complex Tilak Nagar Jaipur 302 004
B O 295-B Bharti Nagar P N Pudur Coimbatore 641 041

ISBN 81 7044-369 5 (Set)

**SABADARTH CHINTAMANI**

First Published 1860
Reprint 1992

*Printed at*

**Efficient Offset Printers**
**215, Shahzada Bagh Indl Complex,**
**Phase-II Phone 533736, 533762**
**Delhi - 110035**

आबालस्यरुदितबलम् । बलमूर्खस्य मौनस्तुतस्करस्याऽनृतबलम् । अ-पिच० ब्र० । क्षत्रियाणांबलयुद्ध व्यापारस्यबलंविशाम् । भिक्षाबलभिक्षुकाणांशूद्राणाविप्रसेवनम् ॥ हरी भक्तिर्हरेर्दासि वैष्णवानांबलहरि । हिंसाबलखलानांच तपस्याचतपस्विनाम् ॥ बलवेशश्चवेश्यानांयोषितायौवनंबलम् । बलप्रतापोभूपानां बालानांरुदितबलम् ॥ सतांसत्यबलमिथ्याबलमेवासतांसदा । अनुगानामनुगम स्वल्पस्वानाञ्चसञ्चय ॥ विद्याबलपण्डितानांवाणिज्य वणिजांबलम् । शश्वत्सुक्रमशीलानांगाश्चौर्यसाहसंबलम् ॥ धनबलञ्चधनिनांशुचीनाञ्चविशेषत । बलविवेक शान्तानांगुणिनांबलमेकता ॥ गुणोबलञ्चगुणिनांचौराणांचौर्यमेवच । विप्रवाक्यञ्चकापथ्यमधर्मसृणिनांबलम् ॥ हिंसाचहिंस्रजन्तूनासतीनांपतिसेवनम् । वर-शापौसुराणाञ्चशिष्याणांगुरुसेवनम् ॥ बलधर्मोगृहस्थानांभृत्यानांराजसेवनम् । बलस्तव स्तावकानांब्रह्मचब्रह्मचारिणाम् ॥ यतीनाञ्चसदाचारोन्यास सन्न्यासिनांबलम । पापबलंपातकिनांसुभक्तानांहरिर्बलम् ॥ पुण्यं बलपुण्यवतांप्रजानांनृपतिर्बलम् । फलबलञ्चवृक्षाणांजलधीनांज-लबलम् ॥ जलबलञ्चमत्स्यानामव्यानाचजलबलम् । शान्तिर्बलञ्चभूपानांविप्राणाञ्चविशेषत ॥ ब्र० ॥

बलच । पुं० शुक्लवर्णे ॥ चि० तद्वति॥

बलचगु । पु० चन्द्रे ॥

बलजम् । न० गोपुरे ॥ क्षेत्रे ॥ सस्ये । सङ्गरे ॥ धान्यराशौ ॥ बलेजातम् । जनौ० । ड ॥ चि० भद्राकृतौ । सदाकारे ॥ बलजन्ये ॥

बलजा । स्त्री० बल्ज्,दर्शनायाम् । वरयोषायाम् ॥ यूथ्याम् ॥ पृथिव्याम् ॥

बलद । पुं० जीवके ॥ पौष्टिककर्माङ्गहोमाग्नौ ॥ चि० बलदातरि ॥

बलदा । स्त्री० अश्वगन्धायाम् ॥

बलदीनता । स्त्री० म्लानौ ॥

बलदेव । पु० बलभद्रे । प्रलम्बघ्ने । अच्युताग्रजे ॥ अस्यध्यानयथा । बलदेवद्विबाहुञ्चशङ्खकुन्देन्दुसन्निभम् । वामेहलायुधधरदक्षिणेमुसलकरे ॥ हालालोलनीलवस्त्रं हेलावन्त स्मरेत्परमिति ॥ वाते । वायौ ॥ बलेनदीव्यति । दिवु० । अच् ॥

बलदेवा । स्त्री० त्रायमाणायामोषधौ॥

बलप्रसू । स्त्री० रोहिण्याम् । बलरामप्रातरि ॥ बलस्यप्रसू ॥

बलभद्र । पुं० सीरिणि । हलायुधे ॥ बलशालिनि ॥ लोध्रे ॥ गवये ॥ बलंभद्र श्रेष्ठमस्य । बलेनभद्रइतिवा

॥ भगणे ॥
बलभद्रा । स्त्री० त्रायमाणौषधौ ॥ कु मार्याम् ॥ बलेनभद्रा ॥
बलभद्रिका । स्त्री० त्रायमाणौषधौ ॥ बलेनभद्रा । स्वार्थेकन् ॥ माषरोटि कायाम् ॥ यमस्मैरचितारोटी क-थ्यतेबलभद्रिका । रुक्नोष्मावातला बल्यादीप्ताग्नीनांप्रपूजिता ॥
बलभित् । पु० इन्द्रे ॥ बलदैत्यविशे षभिनत्ति । भिदिर्० । क्विप् ॥
बलभी । स्त्री० वडभ्याम् ॥ कूटागारे ॥
बलराम : । पुं० बलदेवे ॥
बलल . । पुं० बलदेवे ॥ बललाति । ला० । क ॥
बलवत् । अ० अतिशये । निर्भरे ॥ ब लमस्यास्ति । मतुप् ॥
बलवान् । त्रि० मांसले । असले । ब लयुक्ते । बलमस्यास्ति । मतुप ॥ प्रबले ॥
बलवर्द्धिनी । स्त्री० जीवकौषधौ ॥
बलवल्लभा । स्त्री० वारुण्याम् ॥
बलविन्यास . । पु० व्यूहे ॥ बलस्य सेनायायुद्धार्थ देशविशेषे०विन्यासो दुर्लङ्घ्यत्वनिमित्त विभज्यस्थापन म् ॥
बलसूदन ' । पु० इन्द्रे ॥ बलनामा नमसुरसूदितवान्० सूदयति । सूद क्षरणे । नन्द्यादित्वाल्ल्यु ॥
बलस्थिति । स्त्री० शिविरे ॥ बलस्य स्थिति . । बलस्यस्थितिर्यस्मिन्वा ॥
बलहा । पुं० श्लेष्मणि । कफे ॥
बला । स्त्री० वाट्यालके । वाडिया ला० हृ० गौ० भा० ॥ बलाचतु-ष्टयस्यनामादिर्यथा । बलावाट्यालि कावाट्याशैववाट्यालकोपिच । म-हाबलापीतपुष्पासहदेवीचसास्मृता ॥ ततोन्यातिबलाऋष्यप्रोक्ताकङ्कति कासहा । गाङ्गेरुकीनागबलाझषा ह्रस्वगवेधुका ॥ बलाचतुष्टयशीत-मधुरबलकान्तिकृत् । स्निग्ध याहि समीरास्रपित्तास्रक्षतनाशनम् ॥ बला मूलत्वचश्चूर्णं पीतसक्षीरशर्करम् । मूत्रातिसारंहरतिदृष्टमेतन्नसंशय . ॥ हरेन्महाबलाकृच्छ्र०भवेद्वातानु लोमिनी । हन्यादतिबलामेहपय सासितयासह ॥ अपिच । वाट्याल कोत्राट्यपुष्पीसंमांसाविलवाबला । श्वेतवाडियाला० हृ० गौ० भा० ऋष्यप्रोक्तात्वतिबला पीतपुष्पीमहा बला । पीतवाडियाला० हृ०गौ० भा० ॥ स्निग्धायुष्याबल्यावृष्याग्रा हिणीवातपित्तजित् ॥ बलति । बलसवरणे । पचाद्यच् । बलमस्य स्या : अर्शआद्यच् ॥ रामायविश्वा मित्रेणदत्तायाविद्यायाम् ॥ यथा । क्षुत्पिपासेनतेरामभविष्येते नरो-त्तम । बलामतिबलाञ्चैवपठत ' प थिराघवेत्यार्षरामायणम् ॥ शारीर

बलाधिक्यञ्चबलाया फलम् । अतिबलायास्तुफलमन सङ्कल्प मात्रेणालौकिकार्थसाधनमित्यन योविशेष ।।

बलाका । स्त्री० बकजातिविशेषे । बिसकण्ठिकायाम् । बगुली० इ० भा० । जातिवाच्यायास्त्रियामेव सर्वदानियत ।। ब.ले । बलसव रणेसचरणेच । बलाकादयश्चे तिसा धु ।। वलिनबकतिवा । बक कु टिलायागती । अच् । बला का३कादयस्तीस्याद्वलाकाशक्लकीषु च । सारसहसबलाकाचक्रकी चा दयोजलेप्लवनात् । प्लवसञ्ज्ञा कथितास्तेतन्मास गुरुषा चबलदा यि ।। अन्येबकबलाकाद्यागुरव प्राणिभक्षणात् ।।

बलाकी । त्रि० बलाकावति ।। बलाका अस्तिअस्यअस्मिन्वा । ब्री०इनि ।।

बलाचिता । स्त्री० रामवीणायाम् ।।

बलाट । पु० मुद्गे ।।

बलात् । अ० हठादर्थे । यथा । बला त्सन्दूषयेद्यस्तुपरभार्यानर क्व चित् । वधदण्डोभवेत्तस्यनापराधो भवेत्स्त्रिया ।।

बलात्कार । पु० प्रसभे । हठे ।। बलादितिनिपातोहठे० इ० स्वामी ।। बलात करणम् । भावेघञ् ।। बद्ध्वाखगृहमानीयताडनाद्यैरुप क्रमै । ऋणिकोदाप्यते यत्रबला त्कार प्रकीर्तित ।।

बलात्मिका । स्त्री० हस्तिशुण्डाम् ।।

बलाद्या । स्त्री० बलायाम् ।

बलाध्यक्ष । पु० सेनापतिदशकस्ये कस्मिन्सेनानायके ।।

बलानुज । पु० श्रीकृष्णे ।।

बलामोटा । स्त्री० नागदमन्याम् । वि षापहायाम् ।। बलामोटाकटुस्ति क्तालघुपित्तकफापहा । मूत्रकृच्छ्र व्रणान्रक्षोनाशयेज्जालगर्दभान् ।। सर्वग्रहप्रशमनीनि शेषविषनाशि नी । जयंसर्वत्रकुरुतेधनदासुमति प्रदा ।।

बलाय । पु० वरुणद्रुमे ।।

बलाराति । पु० शचीपतौ । इन्द्रे ।। बलस्यासुरस्यअराति शत्रु ।।

बलालक । पु० पानीयामलके ।।

बलाश । पु० ) श्लेष्मणि ।।

बलाशक । पु० ) इतिहेमचन्द्र ।।

बलास । पु० कफे ।।

बलाहक । पु० मेघे । अम्बुदे ।। वारिवाहकोबलाहक । पृषोदरा दित्वात्पूर्वपदस्यब उत्तरपदादे श्चलत्वम् ।। बलाकाभिर्हीयतेगम्य ते । ओहाङ्० गतौ० पृ० ।। बल नहीयतेवा । क्वुन् ।। गिरौ ।। दैत्य विशेषे ।। नागविशेषे ।। मुस्तके ।। श्रीकृष्णस्यन्दनाश्वे ।। रमागर्भोश्व

कल्किदेवपुत्रे ॥

वलाह्वकन्द । पु॰ गुलञ्चकन्दे ॥

वलि पु॰ दैत्यप्रभेदे । विरोचनात्मजे ॥ करे । राजग्राह्यभागे ॥ चामरदण्डे ॥ उपहारे । उपायने । भेंट॰ इ॰ भा॰ ॥ पूजासामग्राम् ॥ नियोज्योपजीव्ये ॥ पञ्चमहायज्ञान्तर्गतभूतयज्ञे ॥ तिर्यग्भिक्षुकादिदाने ॥ ययातिवंशोद्भवसुतपोराजपुत्रे ॥ वलिर्वैश्वनामकपचयज्ञान्तर्गतयज्ञविशेषे ॥ वलते॰ वल्यते वा । वलप्राणने॰ वलसंवरणे सञ्चरणे च । सर्वधातुभ्यइन् ॥ वलनम् । वलदाने । वलते वा । खनिकषीति॰ इर्वा ॥ यद्वा । वणि सौत्र । अस्य॰ वर्णो वलिश्चाहिरण्ये॰ इतिवलिरादेशः ॥

वलि । स्त्री॰ जरयाश्लथचर्मणि ॥ चर्मतरङ्गे ॥ गृहदारुप्रभेदे ॥ जठरावयवे ॥ यथा । एकवलिर्भवन्त्यु स्त्रीभोगीद्विवलि स्मृत. । त्रिभिराचार्यइत्याहुश्चतुर्भि र्थाहहुप्रज ॥ अवलिस्तुन्टप प्रोक्तोयज्ञादानैक तत्पर' । विषमावलयोयेषु ते चागम्याभिगामिन ॥ ऋजव्यस्तुवलयोयेषु ते नरा' सुखभागिन ॥ इति । गन्धर्के ॥ गृहाङ्कुरे ॥

वलिकम् । न॰ पटलप्रान्ते ॥

वलिकर । त्रि॰ वलिकर्त्तरि । वलिकरोति । दिवाविभेतिट ॥

वलिका । स्त्री॰ अतिवलायाम ॥

वलिक्रिया । स्त्री॰ इष्टदेवतापूजाविधौ ॥

वलित । त्रि॰ वेष्टिते ॥

वलिदानम् । न॰ देवोद्देशेनयथाविधिपूजोपहारत्यागे ॥ देवतोद्देशेन सङ्कल्पपूर्वकच्छागादिपशुघातने ॥ वलिदानेनसततंजयेच्छत्रून्नृपान्नृप ॥

वलिध्वंसी । पुं॰ विष्णौ ॥ वलिमसुरविशेषध्वसितुशीलमस्य । ताच्छील्येणिनि ॥ वलिनापूजादिना॰ अविद्याध्वंसितुशीलमस्येतिवा ॥

वली । पु॰ वलदेवे ॥ माषे ॥ वृषभे ॥ महिषे ॥ उष्ट्रे ॥ शूकरे ॥ कर्फे ॥ कंदम्बे ॥ त्रि॰वलवति । उपचिते । मांसले ॥ वलमस्यास्ति । वलादिभ्योमतुवन्यतरस्यामितिपक्षेइनि : ॥

वलिन : । त्रि॰ वलिभे । श्लथचर्मवति ॥ वलिश्चर्मसङ्कोचोस्यास्ति । पामादित्वान्न' ॥

वलिनन्दन . । पु॰ वाणासुरे ॥

वलिनी । स्त्री॰ वलायाम् । वाट्यालके ॥ वलमस्त्यस्याम् । वलादिभ्योम

तुवन्यतरस्यामितिपच्चेद्नि ' ॥

वलिपुष्ट । पु॰ काके ॥ वलिनापुष्ट ॥

वलिपोद्की । स्त्री॰ उपोद्क्याम् ॥

वलिप्रिय । पुं॰ लोध्रवृक्षे ॥

वलिभ । त्रि॰ वलिने । जरयाश्लथचर्म्मणि ॥ वलिश्चर्मसङ्कोचोस्यास्ति । तुन्दिवलिवटेर्भः ॥

वलिभुक् । पु॰ वायसे ॥ वलिभुङ्क्ते । भुजपालनाभ्यवहारयो । क्विप् ॥

वलिमन्दिरम् । न॰ पाताले ॥ वलेर्मन्दिरमत्र ॥

वलिमुख । पुं॰ वलिमुखे ॥

वलिशम् । न॰ बडिशे । मत्स्यवेधने ॥ वलिनोमत्स्यान्॰ श्यति । शोतनूकरणे । आतोनुपेतिक ॥

वलिष्ठ । त्रि॰ बलवत्तमे ॥ अतिशयेनबलवान् । बलशब्दान्मतुबन्तादिष्ठन्प्रत्यय । विन्मतोर्लुगितिमतुपोलुक् ॥ प्रायश्चित्त बिनाप्ताश्च मेवशुद्धमानसा । अकामायावलिष्ठेननस्त्रीजारेणदुष्यति ॥

वलिष्णु ' । त्रि॰ अपमानिते ॥

वलिसद्म । न॰ रसातले । पाताले । वले ' सद्म ॥

वलिहा । पुं॰ विष्णौ ॥

वली । स्त्री॰ वलौ । त्वगूर्मौ । चर्मतरङ्गे ॥

वलीकम् । न॰ नीध्रे । पटलप्रान्ते । छाची॰हि॰गे॰भा॰ ॥ परावली॰हि॰भा॰ ॥ वलति । आवृणोतिभित्त्यादि । जलसवरणे । अलीकादयश्चेतिकीकन् ॥

वलीमुख । पुं॰ वानरे ॥ वलीयुक्तमुखमस्य ॥

वलीयान् । त्रि॰ अतिशयेनबलयुक्ते ॥

बलीवर्द्द । पुं॰ वृषे । वैल॰वरध॰वर्धा॰हि॰भा ॥ वरणम् । वरईप्सायाम् । सम्पदादित्वात्क्विप् । ईश्वरच॰ईवरी । तौददाति । आतइतिक ' । अतिशयितबलमस्य । अतइनि । वलीचासौ॰ईवर्द्दश्च ॥ तीर्थयाचायातदारूढस्यदोषोयथामात्स्ये । बलीवर्दसमारूढ शृणु तस्यापियत्फलम् । नरकेवसतेघोरेगवांक्रोधेहिदारुणे । सलिलञ्चनगृह्णन्तिपितरस्तस्यदेहिनइति ॥

वलु । स्त्री॰ हस्तिदन्तालिकायाम् ॥

वलूक : । पुं॰ पद्ममूले । पक्षिविशेषे ॥ वलते । वल॰ । वलेरूक ॥

वलूल त्रि॰ वलवति ॥ वलनसहते । वलादूल ॥

वल्मिक । पुं॰ न॰वल्मीके ॥

वल्मीकि । पु॰ न॰वल्मीके ॥

वल्मीक ' । पु॰ न॰वामलूरे । नाकौ । पिपीलिकादिकीटविशेषकृतेस्तृत्स्तूपे । वावी॰हि॰भा॰ ॥ न॰ रोग

निशिषे । यद्वलक्षण । यथा । श्री वाग्जन्माक्रपादं‌ शमस्योगनेवा चिभिरेवदोषे । ग्रन्थ मदल्मी- कवद्क्रियागाजात क्रमेण वगत- प्रदृत्ति ॥ मुखैरने‍को स्तुतिनोद वह्निर्निमर्पबतमपंतिदीप्ततायै । वल्मीकमाहुर्भिषजोविकारनिपप्र श्यनीकचिरजविशेपगत् ॥ वाल्मी निमुनी ॥ वलन्तिप्राणिनोऽत्र । अ- लीकादयश्चेति कीकन्नन्तोनिपाति त ॥

वल्मीकशीर्षम् । न० स्रोतोञ्जने ॥

वल्मीकि । पु० वल्मीके ॥

वल्मीकूटम् । न० वल्मीके ॥

वल्य । पु० बुद्धभिक्षुके । श्रमणे ॥ न० प्रधानधातौ । रेतसि ॥ त्रि० बलकरे ॥

वल्या । स्त्री० अतिबलायाम् ॥ अश्व गन्धायाम् ॥ शिमृडीक्षुपे ॥ प्रसा- रिण्याम् ॥

वल्ल । पुं० गुञ्जात्रयपरिमाणे । द्वि गुञ्जपरिमाणे ॥ सार्द्धगुञ्जायाम् ॥ वल्लते । वल्लसंवरणे सञ्चरणे च । प० अच् ।

वल्लक' । पुं० निष्पावे । राजशिम्ब्या म् ॥

वल्लकी । स्त्री० वीणायाम् । विपञ्च्या म् ॥ वल्लते । वल्ल० क्वुन् । गौरा दित्वान्ङीष् । सल्लकीवृक्षे ॥

वल्लभ । त्रि० दयिते । प्रिये ॥ अध्य क्षे ॥ न० कुलीनाश्वे । मल्लनगतु रङ्गमे ॥ अध्यक्षोऽश्वगवाध्यक्ष इति- स्वामी ॥ वल्लते० वल्ल्यतेवा । वल्ल० । रामिवल्लिभ्याचेत्यभच् ॥

वल्लभपाल । पु० ) उत्तमाश्व
वल्लभपालक ) पाले ॥ अश्व रक्षके ॥

वल्लभा । स्त्री० प्रियायाम् । प्रेयस्या म् ॥

वल्लरम् । न० वल्लूरे ॥

वल्लरि । स्त्री० मञ्जर्याम् ॥

वष्कय । पु० तरुणवत्से । बछिड़ा० हू० भा० ॥ वष्कते । वष्कगतौ । वा० अयन् ॥

वष्कयणी । स्त्री० वष्कयिण्याम् ॥

वष्कयिणी । स्त्री० तरुणवत्सायाङ्गवि० वाखडी० हू० भा० ॥ वष्कयस्तरु णवत्स० सोस्त्यस्या । अतइनि ठनाविताीनि । अट्कुप्वाङिति णत्वम् । ङीप् ॥

वह्नि । अ० वाह्ये ॥ वहति । वह० इस् ॥ बवयोरभेद ॥

वहु । त्रि० त्र्यादिसङ्ख्यासु ॥ विपुले । भूयसि ॥ वहते । वह्निवृद्धौ ॥ लङ्घिवह्योर्नलोपश्चेत्यु ॥ स्त्रियां० वह्वादित्वात् पाक्षिकोङीषभाव । ङीष्पक्षे० वह्वी ॥

वहुक । पु० कर्कटे ॥ अर्के ॥ दात्यू

हे ॥ जलखातके ॥ त्रि॰ बहुभिः क्री
ते ॥ सङ्ख्यायाअतिशदन्तायाः
कन् ॥

बहुकण्टक । पु॰ क्षुद्रगोक्षुरे ॥ यवा
से हिन्ताले ॥

बहुकण्टका । स्त्री॰ अग्निदमन्याम् ॥

बहुकण्टा । स्त्री॰ कण्टकायाम् ॥

बहुकन्द । पु॰ शूरणे ॥

बहुकन्दा । स्त्री॰ कर्कट्याम् ॥

बहुकर । पु॰ वक्रग्रीवे ॥ उष्ट्रे ॥
त्रि॰ खलपूः ॥ स्त्रियांबहुकरा ॥
बहुकार्यकर्त्तरि ॥ बहुकरोतिभुवस
मार्ष्टि । कियत्तद्बहुषुकृञोज्विधा
नमित्यच् ॥

बहुकरी । स्त्री॰ बहुकरभार्यायाम् ॥
पुयोगलक्षणोङीष् ॥ सम्मार्जन्या
म् ॥

बहुकर्णिका । स्त्री॰ आखुकर्ण्याम् ॥

बहुकूर्च्च । पु॰ मधुनालिकेरके ॥

बहुक्षम । पु॰ बुद्धे ॥ बहुक्षमते ।
क्षमूष्॰ । ईक्षिक्षमिभ्याञ्चेतिणः ॥

बहुगन्धम् । न॰ त्वचे ॥ पु॰ कुन्दुरुके ॥

बहुगन्धदा । स्त्री॰ कस्तूर्याम् ॥

बहुगन्धा । स्त्री॰ चम्पककलिकायाम् ॥
यूथिकायाम् ॥ कृष्णजीरके ॥

बहुगर्ह्यवाक् । त्रि॰ कुत्सितबहुवादि
नि ॥ जल्पाके ॥ बहुगर्ह्यावागस्य ॥

बहुग्रन्थि । पु॰ झाबुके ॥ बहवोग्र
न्थयोयस्मिन् ॥

बहुच् । पु॰ प्रत्ययविशेषे ॥ सचप्रकृ
ते पूर्वंभवति॰ प्रकृतेर्लिङ्गंचभज
ते । स्यादीषदसमाप्तौतुबहुच्प्रकृ
तिलिङ्गकः ॥

बहुच्छिन्ना । स्त्री॰ कन्दगुडूच्याम् ॥

बहुतन्त्री । त्रि॰ बहुतन्त्रीविशिष्टे ॥ यथा
। बहुतन्त्रीकाय । बहुतन्त्रीर्ग्रीवा ।
बहुतन्त्रिशरीरम् । बह्व्यस्तन्त्र्योयस्मि
न् । नाडीतन्त्र्यो स्वाङ्गे॰ इ॰ नकप् ॥

बहुतन्त्रीक । पु॰ बहुतन्त्रविशिष्टे ।
यथा । बहुतन्त्रीक पट । बहुत
न्त्रीकाग्रीवा ॥ बहुतन्त्रीकवास । बह्व्य
स्तन्त्र्योयस्मिन्कप् ॥

बहुतरकणिश । पु॰ राजधान्ये ॥

बहुता । स्त्री॰ बहुत्वे ॥

बहुतिक्ता । स्त्री॰ काकमाच्याम् ॥

बहुतिथ । त्रि॰ बहुसङ्ख्याके ॥
बहूनापूरण । तस्यपूरणेडट् । ब
हुपूगगणसङ्घस्यतिथुक् ॥

बहुतृणम् । न॰ तृणकल्पे ॥ ईषदस-
माप्तं तृणम् । विभाषासुपोबहुच
पुरस्तात् ॥

बहुत्वम् । न॰ बहुतायाम ॥ बहोर्भा
व । तस्यभावस्त्वतलौ ॥

बहुत्वक
बहुत्वच् पु॰ भूर्जद्रुमे ।

बहुदुग्ध । पु॰ गोधूमे ॥

बहुदुग्धा । स्त्री॰ वञ्जुलायाम् । बहु
क्षीरायांगवि ॥ बहुदुग्धंयस्याम् ॥

बहुदुग्धिका । स्त्री० स्नुहीवृक्षे ॥

बहुधा । अ० अनेकप्रकारे ॥ बहव प्रकारा । सङ्ख्यायाविधार्थेधाचा ॥ यद्वा । बहुवारान्०इति० क्रियाभ्या वृत्तिगणने०विभाषावक्षेधाऽविप्रकृष्टकालइतिधा । बहुधावहुकृत्वोवा दिवसस्यभुङ्क्ते ॥

बहुधान्य । पु० वत्सरविशेषे ॥ सुभिक्षक्षेममारोग्य प्रशान्ता पार्थिवा प्रिये । तस्करोपहतवित्त बहुधान्येवरानने ॥ १२ ॥ अतिशय धान्यविशिष्टे ॥

बहुधारम् । न० वज्रे ॥

बहुनाडि । त्रि० काये ॥ नाडीतन्त्र्यो स्वाङ्गइतिनकप् ॥

बहुनाडीक । त्रि० स्तम्भे ॥ दिवसे ॥ बह्वोनाड्योयस्मिन् । कप ॥

बहुनाद । पु० शङ्खे ॥

बहुनामा । पु० असङ्ख्यातनामनि परमेश्वरे ॥ बहूनिनामानियस्य ॥ सर्वाण्येतानिनामानिपरस्यब्रह्मणो हरेरितिपुराणोक्ते ॥

बहुपट् । त्रि० ईषदूनेपटौ ॥ बहुचर्मसुदृवे ॥

बहुपत्र । पु० पलाण्डौ न० अभ्रके ॥ त्रि० अनेकपत्रयुक्ते ॥

बहुपत्रा । स्त्री० तरुणीपुष्पे ॥

बहुपत्रिका । स्त्री० भूम्यामलक्याम् ॥ मेथिकायाम् ॥ महाशतावर्याम् ॥

बहुपत्री । स्त्री० खिङ्किन्याम् ॥ गृहकन्यायाम् ॥ तुलस्याम् ॥ जतुकाकायाम् ॥ बृहत्याम् ॥ गोरक्षदुग्धायाम् ॥

बहुपर्ण । पु० सप्तच्छदवृक्षे ॥ त्रि० अनेकपत्रयुक्ते ॥

बहुपर्णिका । स्त्री० आखुकर्ण्याम् ॥

बहुपर्णी । स्त्री० मेथिकायाम् ॥

बहुपात् । पु० वटवृक्षे ॥ ॥ बहव पादाअस्य । सङ्ख्यासुपूर्वस्य ॥

बहुपाद । पु० वटवृक्षे ॥

बहुपुत्र । त्रि० अनेकसुतविशिष्टे ॥

बहुपुत्रा । स्त्री० भूम्यामलक्याम् ॥

बहुपुत्री । स्त्री० शतमूल्याम् ॥

बहुपुष्प । पु० पारिभद्रवृक्षे ॥

बहुपुष्पिका । बहुपुष्पी । स्त्री० धातक्याम् ॥

बहुप्रज । पुं० मुञ्जतृणे ॥ शूकरे ॥ त्रि० अनेकसन्तानयुक्ते ॥

बहुप्रतिज्ञ । पु० अनेकपदसङ्कीर्णपूर्वपक्षविशिष्टव्यवहारे ॥ त्रि० अनेकप्रतिज्ञायुक्ते ॥

बहुप्रद । त्रि० अतिदातरि । वदान्ये । दानशौण्डे ॥ बहुप्रददाति । प्रेदाज्ञइतिक ॥

बहुप्रसू । स्त्री० शूमिलायाम् । बहुसन्तानप्रसवकारिण्याम् ॥

काहुते ॥ तैज फले ॥
बहुफला । स्त्री० भूम्यामलक्याम् ॥ क्षविकायाम् ॥ माषपर्ण्याम् ॥ काकमाच्याम् ॥ त्रपुष्याम् ॥
बहुफलिका । स्त्री० भूबदर्याम् ॥
बहुफली । स्त्री० आमलक्याम् ॥ मृगैर्वारौ ॥
बहुफेना । स्त्री० सातलायाम् ॥
बहुबल । पु० सिंहे ॥ त्रि० अतिशय बलयुक्ते ॥
बहुमञ्जरी । स्त्री० तुलस्याम् ॥
बहुमत । त्रि० बहूनांसम्मते॥ नात्म सस्कृतेनैवनात्यन्त देशभाषया । कथांगोष्ठीषुकथयँल्लोकेवहुमतोभवेत् ॥
बहुमल । पु० सीसके ॥ त्रि० अनेकमलयुक्ते ॥
बहुमार्ग । पु० न० चत्वरे ॥ बहूनामार्गं समाहारोवा । त्रि० अनेकपथयुक्ते ॥
बहुमूर्ति । स्त्री० वनकार्पासे ॥ त्रि० नानाकारे ॥
बहुमूर्द्धा । पु० विष्णौ ॥
बहुमूल । पु० शृकटे ॥ शिग्रौ ॥ स्थूलशरे ॥ त्रि० अनेकमूलयुक्ते ॥
बहुमूलक । पु० शृकटे ॥ न० उशीरे ॥
बहुमूला । स्त्री० शतावर्याम् ॥
बहुमूली । स्त्री० माकन्द्याम् ॥

बहुमूल्य । त्रि० महाधने । महार्घे वस्तुनि ॥
बहुयाज्य । पु० अनेकयजमाने ॥ बहवोभूयासोयाज्यायाजनीयायस्य ॥
बहुरश्मिका । स्त्री० मेदायाम् ॥
बहुरसा । स्त्री० महाज्योतिष्मत्याम् ॥
बहुरुहा । स्त्री० कन्दगुडूच्याम् ॥
बहुरूप । पु० शिवे ॥ विष्णौ ॥ धूनके । सर्जरसे ॥ सरटे ॥ स्मरे । कामदेवे ॥ ब्रह्मणि ॥ कुन्तले । केशे ॥ बुद्धप्रभेदे ॥ बालयुवादिरूपे देवनरादिरूपेजीवे ॥ बहुरूपइवभातिमाययाबहुरूपया । रममाणोगुणेष्वस्याममाहमितिमन्यते ॥ नानाकृतिगत्वात्० बहूनिरूपाण्यस्य ॥ त्रि० नानारूपयुक्ते ॥
बहुरूपक । पु० जाहकजन्तौ ॥
बहुरूपा । स्त्री० दुर्गायाम् ॥
बहुरेखा । स्त्री० प्रचुरदीर्घविस्तायाम् ॥ बहुरेखायुक्ताया स्त्रियादोषोयथा । रेखाभिर्बहुभिः क्लेशस्वल्पाभिर्धनहीनताम् । रक्ताभिः सुखमाप्नोतिकृष्णाभिः प्रेष्यतांव्रजेत् ॥
बहुरेता । पु० ब्रह्मणि ॥
बहुरोमा । पु० मेषे ॥ त्रि० लोमशे ॥
बहुल । पु० अग्नौ ॥ कृष्णपक्षे ॥ न० विहायसि । आकाशे ॥ सितमरिचे ॥ त्रि० प्राज्ये ॥ कृष्णवर्णे ॥ बहून्पर्यान्लाति । ला० । आतो

नुपेतिक ॥ बहूनिबीजानिलाति वा ॥

बहुलगन्धा । पु० एलायाम ॥

बहुलच्छद । पु० रक्तशिग्रौ ॥

बहुलवणम् । न० औषरके ।

बहुलवल्काल । पु० भूर्ज्जे ॥ चारे पियाले ॥

बहुला । स्त्री० नीलिकायाम् ॥ एलायाम् ॥ गवि । धेनौ ॥ देवीविशेषे ॥ टाप् ॥

बहुला । स्त्री० भूक्ति०कृत्तिकासु ॥

बहुलिमा । पु० । बहुलत्वे ॥ बहुलस्वभाव । इमनिच् ॥

बहुलीकृतम् त्रि० अपनीततुच्छधान्ये धान्यादौ । पूते ॥ अबहुलबहुलमकारि । अभूततद्भावेच्वि । अच्वौ ॥

बहुवचनम् । न० येनबहवोर्थाउच्यन्ते तस्मिन् ॥ बहूनामर्थानावचनम् । वचे करणेल्युट् । कर्मणिषष्ठ्या समास ॥

बहुवल्क । पु० प्रियाले ॥

बहुवल्ली । स्त्री० डोडिक्षुपे ॥

बहुवार । पु० उद्दाले । श्लेलौ । श्लेष्मातके । लसोडा० इ० भा० ॥ बहुवारोविषस्फोटव्रणवीसर्पकुष्ठनुत् । मधुरस्तुवरस्तिक्तः केश्यश्चकफपित्तहृत् ॥ फलमामन्तुविष्टम्भि रूक्षपित्तकफास्रजित् । तत्पक्वं मधुरस्निग्धं श्लेष्मलंशीतलंगुरु ॥

बहुवारक । पु० श्लेष्मातके । बहुवारे । बहून्वारयति । ण्वुल् । शिजन्त । आन्शिल्पिसञ्ज्ञयोरपूर्वस्यापि ॥

बहुविध । त्रि० विविधे । नानारूपे । पृथग्विधे ॥ बह्व्योविधायस्य ॥

बहुविस्तीर्णा । स्त्री० कुञ्चिताकाम् ॥

बहुबीजम् । न० गगडगात्रे । आढ्यौ ॥

बहुवीर्य । पु० बिभीतकी । तरुड, ग्मीयशाके । शाल्मलिवृक्षे ॥ मरुवे ॥

बहुवीर्या । स्त्री० भूम्यामलक्याम् ॥

बहुव्रीहि । पु० प्रायोन्यपदार्थप्रधानेसमासविशेषे ॥ सचसप्तधा । द्विपद । बहुपद सङ्ख्योत्तर सङ्ख्योभयपद दिगन्तरालक्षण व्यतिहारलक्षण सहपूर्वपदस्थेतिभेदात् ॥ त्रि० प्रचुरधान्ययुक्ते ॥

बहुशत्रु । पु० चटके ॥

बहुशल्य । पु० रक्तखदिरे ॥ त्रि० अनेकशल्ययुक्ते ॥

बहुश । अ० भूरिशइत्यर्थे ॥ बहूनि । बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ॥

बहुशाख । त्रि० अनेकभेदे ॥

बहुशाल । पु० स्नुह्याम् ॥

बहुशिखा । स्त्री० जलपिप्पल्याम् ॥

बहुश्रवा । स्त्री० शल्लकीतरौ ॥

बहुसन्तति । पु० त्वक्सारप्रभेदे ।

वेदव्यास० ३० गौ० भा० ॥ त्रि० अनेकसन्तानवति ॥
बहुसम्पुट । पु० विष्णुकन्दे ॥
बहुसार । पु० खदिरे ॥
बहुसुता । स्त्री० शतमूल्याम् ॥
बहुसू । स्त्री० शूकर्याम् ॥ बहुप्रसवायाम् ॥
बहुसूति स्त्री० परेष्टुकायाम् । बहुपत्यायागवि ॥ बह्वीसूतिर्यस्या ॥ बहुसन्तानप्रसवायाम् ॥
बहुस्रवा । स्त्री० शल्लकीवृक्षे ॥ नानाक्षरणशीलायाम् ॥
बहुस्वन । पु० पेचके ॥ त्रि० अनेकशब्दयुक्ते ॥
बह्वपत्य । पु० शूकरे ॥ मूषके ॥ त्रि० बहुसन्तानयुक्ते ॥
बह्वाशी । त्रि० बहुभोजनशीले ॥ वह्वाशाविशिष्टे ॥
बह्वी । स्त्री० बह्वर्थे । बह्वादित्वान् ङीष् ॥
बह्वृक् । स्त्री० ऋग्वेदे ॥ न० सूक्तविशेषे ॥
बह्वृच । पु० ऋग्वेदिब्राह्मणे ॥ बह्व्य ऋचोऽध्येतव्या येन । ऋक्पूरित्य० ॥
बह्वृची । स्त्री० अध्वर्य्याम् । अध्वर्युशाखाध्येत्र्याम् ॥ बह्व्य ऋचोऽध्येतव्या यया सेति विग्रहः । अनृच बह्वृचावध्येतर्य्येवेति वचनात् ० ऋक्पूरित्यप्रत्यय समासान्त । यद्यपि० स्त्रीणां स्वाध्यायाध्ययन प्रतिषिद्धम् ० तथापि पुराकल्पेष्वेतदासीत् । यथा । पुराकल्पेषु नारीणां मौञ्जीबन्धनमिष्यते । अध्यापनञ्च वेदानां सावित्रीवचनं तथेति यमवचनात् ॥ गोत्रञ्च चरणैः सहेति जातित्वान् ङीष् ॥
वा । स्त्री० गतौ ॥ गन्धने ॥ तन्तुसन्ताने ॥
वाढम् । न० दृढे ॥ प्रतिज्ञायाम् ॥ भृशे । अतिशये ॥ वाहृते । वाहृ प्रयत्ने । ओष्ठादि । गत्यर्थेति क्तप्रत्यये० क्षुब्धस्वान्तेति निपातितम् त्रि० अतिशायिनि ॥ क्रियाविशेषणेऽस्य क्लीबत्वम् । द्रव्यविशेषणत्वे तु वाच्यलिङ्गत्वम् ॥
वाण । पु० पञ्चशयवर्गे ॥
वाणि । स्त्री० वस्त्रादीनावपनक्रियायाम् । व्यूतौ ॥
वाणिज । पु० वणिजि ॥ वाडवाऽग्नौ ॥ पणते । पण० । पणेरिज्यादेश्चव । स्वार्थे प्रज्ञाद्यण् ॥
वाणिजक । पु० वणिजि । वाडवाग्नौ । धूर्त्ते ॥
वाणिज्यम् । न० सत्यानृताख्यवैश्यवृत्तौ । वणिज्यायाम् । क्रयविक्रयादिलक्षणे वणिजकर्म्मणि । वणिजां कर्म्म भावो वा । ब्राह्मणादित्वा

तथ्यम् ॥

बाणिनी । स्त्री० नर्त्तक्याम् ॥ छेकायाम् । मत्तयोषायाम ॥ विदग्धवनितायाम् । अवश्य वणति । वणशब्दे । आवश्यकेति० यद्यादित्वाद्वाणिनि ववयोरैक्य ॥

बाणी । स्त्री० वाण्याम् ॥

बाध । पु० प्रतिबन्धके । व्याघाते ॥ अन्वयानुपपत्तौ ॥ अतिदिष्टपदार्थनिवृत्तौ ॥ ज्ञानान्तरेणाविषयासत्त्वप्रतीतौ ॥ न्यायमते साध्याभाववत्पक्षे ॥ य० । ह्रदोवह्निमान् ॥

बाधक । पु० प्रतिबधके ॥ आधिक्यबाधकत्वे हेतु । बाधते । बाधृ० । ण्वुल् ॥ स्त्रीणांरोगविशेषे ॥ यथा । रक्तमाद्रीतथाषष्ठीचाङ्कुरी जलकुमारक । चतुर्विधोबाधकस्यात् स्त्रीणामुनिविभाषित ॥ तेषांस्वभावंवक्ष्यामियथाशास्त्र विधानत । एतेषाप्रजन कार्यं जनै सन्तानकाङ्क्षिभि ॥ निसारण स्थापनञ्चवलिदान जपस्तथा कर्त्तव्यो गुरुवाक्येन यथाशास्त्रविचक्षणै ॥ चतुर्विधोवाधकस्तुजायते ऋतुकालत ॥ तस्य लक्षणयथा । व्यथाकट्यातथानाभेरध पार्श्वेस्तनेऽपिच । रक्तमाद्री प्रदोषेणजायतेफलहीनता ॥ मासमेकद्वयवापिऋतुयोगोभवेद्यदि । रक्तमाद्रीप्रदोषेणफलहीनातदाभवेत् ॥ इतिरक्तमाद्या नेत्रेहस्ते भवेज्ज्वालायोनौचैवविशेषत । लालासयुतरक्तञ्चषष्ठीवाधकयोगत ॥ मासेकेनभवेद्यस्याऋतुस्नानद्वयतथा । मलिना रक्तयोनि स्यात् षष्ठीवाधकयोगत ॥ इतिषष्ठ्या ॥ उद्वेगोगुरुतादेहेरक्तस्रावोभवेद्बहु । नाभेरधोभवेच्छूलचाङ्कुर सतुवाधक ॥ ऋतुहीनाचतुर्मासत्रिमासवाभवेद्यदि । कृशाङ्गीकरपादेषुज्वालाचाङ्कुरयोगत ॥ इतिचाङ्कुर ॥ सशूलाचसगभाचशुष्कदेहाल्परक्तिका । जलकुमारस्यदोषेणजायते वलहीनता । याकृशाङ्गीभवेत्स्थूलावहुकालऋतुस्तथा । गुरुस्तनीस्वल्परक्ता जलकुमारस्यदूषणात् । इतिजलकुमारस्य ॥ इतिवैद्यकम् ॥ त्रि० बाधाजनके ॥

बाधनम् । न० पीडायाम् ॥ प्रतिबधके ॥

बाधा । स्त्री० दुखे । पीडायाम् ॥ निषेधे ॥ बाधृलोडने । गुरोश्चेत्य ॥

बाधित । पु० हेत्वाभासविशेषे ॥ यस्य साध्याभाव प्रमाणेननिश्चित स बाधित । यथा । वह्निरनुष्णोद्रव्यत्वादिति । अत्रानुष्णत्वसाध्याभाव । उष्णत्वस्पर्शनप्रत्यक्षेणगृह्यते० इ-

तिबाधितत्वम् ॥ त्रि० बाधायुक्ते ॥ पीडिते ॥ तारकादित्वादितच् । निवृत्ते ।

बाधिर्य्यम् । न० बधिरत्वे ॥ बधिरस्य भाव । ष्यञ ॥ कर्णरोगविशेषे । तस्यनिदानम् बधिरेऽवलोकनीयम् । औषधन्तु । शुष्कमूलकशुण्ठीना क्षारोहिङ्गुलनागरम् । शुक्त चतुर्गु णदद्यात्तैलमेतद्विपाचयेत् ॥ बाधिर्यकर्णशूलञ्चपूयस्रावश्चकर्णयो । क्रमयश्चविनश्यन्ति तैलस्यास्यप्रपूरणात् ॥

बाध्य । त्रि० निराकरणयोग्ये । बाधितव्ये । बाधनीये ॥ न्यूनत्व बाध्यत्वे हेतु ॥

बार्धकिनेय । पु० बधुले । असतीसुते ॥ कौलटेये ॥ वधक्याअपत्यम् । स्त्रीभ्योढकिकल्याण्यादित्वादिनङादेशश्च ॥

बाधव । पु० मित्रे । सुहृदि ॥ सगोत्रे । बधौ । ज्ञातौ । स्वजने ॥ बांधवास्त्रिविधा । आत्मबाधवा ०पितृबाधवा.०मातृबाधवाश्चेति । यथोक्तम् । आत्मपितृष्वसु पुत्राआत्ममातृष्वसु सुता । आत्ममातुलपुत्राश्चविज्ञेयाह्यात्मबाधवा ॥ पितु पितृष्वसु पुत्रा पितुर्मातृष्वसु . सुता । पितुर्मातुलपुत्राश्चविज्ञेया पितृबाधवा ॥ मातु पितृष्वसु पुत्रामातुर्मातृष्वसु सुता । मातुर्मातुलपुत्राश्चविज्ञेया मातृबाधवा ॥ इति ॥ बधुरेव । प्रज्ञाद्यण् ॥

बाभ्रवी । स्त्री० दुर्गायाम् ॥ पश्यबाभ्रवीम् ॥

बारक । पु० अश्वगतौ ॥ त्रि०निषेधके ॥

बारकी । पु० शत्रौ ॥ चित्राश्वे ॥ पर्णाजीविनि ॥ पयोधौ ॥

बारकीर । पु० द्वारयाष्टिषि ॥ बाडवे ॥ यूकायाम् ॥ वेणिवेधिन्याम् ॥ नीराजितहये ॥

बारण । पु० मतङ्गजे ॥ न० प्रतिषेधे ॥

बारबाण । पु० कञ्चुके ॥

बार्बटीर । पु० टङ्के । त्रपुणि ॥ आम्रास्थ्नि ॥ अङ्कुरे ॥ गणिकासुते ॥

बाल । पु० कुन्तले । चिकुरे । कचे ॥ ॥अश्वशावालके । किशोरे ॥ अश्वस्य बालधौ ॥ इभपुच्छे ॥ नारिकेले ॥ पञ्चवर्षीयहस्तिनि ॥ य० । पञ्चवर्षो गजोबाल . स्यात्पोतोदशवर्षक. । इति ॥ पुच्छे । मत्स्यविशेषे ॥ पु० न० ह्रीवेरे । बर्हिष्ठे । उदीच्ये । बाला० इ० प्र० गन्धद्रव्ये । सुगन्धिबाला० इ० च० भा० ॥ त्रि० मूर्खे ॥ अविवेकिनि । शास्त्रार्थविवेकज्ञानशून्ये । अल्पप्रज्ञे ॥ अर्भ

वी । माधवकी ॥ अप्राप्तव्यवहारे । पञ्चदशवर्षादनधिकवयस्के इतिकश्चित् । षोडशवर्षपर्यन्तप्रथमवयस्के ॥ यथा । आषोडशाद्भवेद्बालो यावत्क्षीरनिवर्त्तकः । इ० ॥ अथ सुश्रुत । ऊनषोडशवर्षस्तुनरोबालोनिगद्यते त्रिविध सोपिदुग्धाशी दुग्धान्नाशीतथान्नभुक् । दुग्धाशीवर्षपयन्तदुग्धान्नाशीशरद्वयम् । तदुत्तरस्यादन्नाशीएवबालस्त्रिधामतइति ॥ अन्यचाप्युक्तम् । आषोडशाद्भवेद्बालस्तरुणस्ततउच्यते वृद्धः स्यात् सप्ततेरूर्द्ध्ववर्षीयान्नवती परम् ॥ इ० ॥ अनाथबालवृद्धानारक्षिका सर्वदैवता ॥ अथबालपरिचर्याविधि । बालमङ्केसुखदद्यान्नचैनतर्जयेत्क्वचित् । सहसाबोधयेन्नैवनायोग्यमुपवेशयेत् ॥ अयोग्यमुपवेशनासमर्थम् । नाङ्गुष्ठस्थापयेत्क्रोडेनक्षिप्रशयनेक्षिपेत् । रोदयेन्नक्वचित्कार्ये विधिमावश्यकविना ॥ आवश्यकोविधिर्भेषजदानतैलाभ्यङ्गोद्वर्त्तनादि । तच्चित्तमनुवर्त्ततसदैवानुमोदयेत् । ससेवितमनाएवनित्यमेवाभिवर्द्धयेत् ॥ बालातपतडिद्वृष्टिधूमानलजलादित । निम्नोच्चस्थानतश्चापिरक्षेद्बालप्रयत्नत ॥ बालङ्गसभा । हितान्याह । अभ्यङ्गो वर्त्तनेस्नाननेत्रयोरञ्जनंतथा । वस्त्रमृदुयत्तच्चतथा मृद्वनुलेपनम् ॥ जन्मप्रभृतिपथ्यानिबालस्यैतानि सर्वथा ॥ बालस्यकवलादि समय माह । कवल पञ्चमाद्वर्षाद्विशते स्त्रैबमैथुनमिति ॥ बलति । बलप्राणने । ज्वलितीतिवा । बाडते । बाडृ आप्लाव्ये । पचाद्यच्वा ॥ यद्वा । बल्यते । बलसंवरणे । कर्मणिघञ् ॥ बाल्यति गद्गस्यात्प चाद्यच्वा ॥ अनेकादशवर्षस्यपञ्चव र्षाधिकस्यच । चरेद्गुरु सुहृद्वापि प्रायश्चित्तंविशुद्धये ॥ ततोन्यूनतर स्यास्यनापराधोनपातकम् । नचा स्यराजदण्डोपिप्रायश्चित्तनविद्यत इत्यङ्गिरा ॥

बालक । पु० शिशौ ॥ अश्वे ॥ हयबालधौ ॥ हस्तिपुच्छे ॥ अङ्गुरीयके ॥ ह्रीबेरे । सुगन्धिबाला० इ० प्र० ॥ बालकशीतलरूक्षलघुदीपनपाचनम् । हृल्लासारुचिवीसर्पहृद्रोगस्तलतिसारहृत् ॥ वलये । केशे ॥ निर्बले० ॥

बालकप्रिया । स्त्री० इन्द्रवारुण्याम् ॥ कदल्याम् ॥

बालकृमि । पु० केशकीटे ॥

बालक्रीडनम् । न० बालकखेलायाम् ॥

बालक्रीडनक । पुं० कपर्दके ॥

बालखिल्य । पु० तपोविशेषलब्ध-

सप्तर्षिर्तापसान्तरे । नवाम्नलब्धे पू र्वसञ्चितस्त्यागिनि ॥ मुनिविशेषेषु ॥ केशजातावालखिल्या ॥ येषां शास्त्रे बालखिल्या इतिश्रुतेः ॥

बालगर्भिणी । स्त्री॰ प्रथमगर्भेव-स्था नवि । प्रष्ठौह्याम् ॥ बालापा-सौगर्भिणीच ॥

बालगोपाल । पु॰ श्रीकृष्णमूर्त्ति विशेषे ॥

बालग्रह । पु॰ बालकग्रहण्यहविशेषे ॥ यथा बालग्रहाश्चनाचारात्पी डयन्तिशिशुयत । तस्मात्तदुप-सर्गेभ्योरक्षेद्बालप्रयत्नतः ॥ ग्रहते-षानामानि । स्कन्दग्रहस्तुप्रथम स्कन्दापस्मारएवच । शकुनीरेवती चैवपूतनागन्धपूतना । पूतनाशी-तपूर्वाचतथैवमुखमण्डिका । नव मोनैगमेयश्चप्रोक्तावालग्रहाश्चमी ॥

बालचर्य्य । पु॰ शिवसेने ॥ कार्त्ति केये ॥

बालजीवनम् । न॰ क्षीरे । दुग्धे ॥

बालतनय । पु॰ खदिरे ॥ बाला तनया पत्राण्यस्य ॥ बालकापुत्रे ॥

बालतन्त्रम् । न॰ कुमारभृत्यायाम् । ग र्भिण्यवेक्षणे । बालचिकित्सायाम् ॥

बालतृणम् । न॰ शष्पे । नवतृणे ॥ बालतृणम् ॥

बालधि । पु॰ केशयुते॰लाङ्गूले ॥ बाला धीयन्तेऽत्र । करणाधिकरणे तिक्ति ॥

बालपत्र । पु॰ खदिरे ॥ यवासे ॥ दुरालभायाम् ॥ न॰ नूतनपर्णे ॥

बालपत्रक । पु॰ खदिरवृक्षे ॥

बालपाश्या । स्त्री॰ पारितथ्यायाम् । सीमन्तस्थितायांस्वर्णादिपट्टिकाया म् ॥ यन्त्री॰ वेणी॰ चू॰ भा॰ । सिति॰ चू॰ गौ॰ भा॰ ॥ बालपाशे ॥ केशसमूहेसाधु । तत्रसाधुरिति यत् ॥ बालपाश्यापाशसमूहोवा ॥

बालपुष्पिका । बालपुष्पी । स्त्री॰ [illegible] यूथिकायाम् ॥

बालभद्र । बालभद्रक । पु॰ विषभेदे । शास्त्रे ॥

बालभैषज्यम् । न॰ रसाञ्जने ॥ बाल स्यौषधे ॥

बालभोज्य । पु॰ चणके ॥ त्रि॰ बा लकभक्षणीये ॥

बालमुकुन्द । पु॰ श्रीविष्णोर्मूर्त्यन्तरे ॥ यथा । करारविन्देनपदारविन्दं मुखारविन्देविनिवेशयन्तम् । वट स्यपत्रस्यपुटेशयानं बालंमुकुन्दंमन सास्मरामि ॥

बालमूलकम् । न॰ लघुमूलके ॥ मूल कबालकटूष्णंतीक्ष्णं पाचनं लघु । दोषत्रयज्वरश्वासनासाकण्ठाक्षिरो गनुत् ॥ महत्तदेवरूक्षोष्णं गुरुदो षत्रयप्रदम् । तदेवस्नेहसिद्धं तदेवस्यात्रिदो षत्रयविनाशनम् ॥

वालमूषिका । स्त्री० गिरिकायाम् ॥ वालाचासौमूषिकाच ॥

वालयज्ञोपवीतम् । न० उपवीतविशेषे । उरस्त्राटे । पञ्चवटे ॥

वालयज्ञोपवीतकम् । न० वालयज्ञोपवीते ॥

वालराजम् । न० वैदूर्यमणौ ॥ पु० वालकश्रेष्ठे ॥

वालरोग । पुं० वालकस्यव्याधौ ॥

वालवाय. । पु० वैदूर्यप्रभवे० देशविशेषे॥

वालवायजम् । न० वैदूर्यमणौ ॥

वालवास । न० केशरचितवस्त्रे ॥ त्रि० तद्वति ॥

वालवाह्य । पु० वनच्छागे ॥ त्रि० वालकवहनीये ॥

वालव्यजनम् । न० चामरे । रोमगुच्छे । प्रकीर्णके ॥ वालव्यजनमोजस्य मक्षिकादीन्व्यपोहति ॥ वालकस्यव्यजने ॥

वालव्रत । पु० पञ्चचीरे । सिद्धकेलौ । मञ्जुघोषे । पूर्वजिने ॥

वालसध्याभ । पु० अरुणवर्णे ॥ त्रि० तद्वति ॥

वालसूर्य्य . । पुं० उदितमात्रेऽर्के ॥ न० वैदूर्यमणौ ॥

वालहस्त । पुं० केशयुक्तलाङ्गूलमात्रे । वालधौ ॥ वालः ० हस्तइव० दशादिवारकत्वात् ॥

वाला । स्त्री० नारिकेलाम् ॥ त्रोटायाम् ॥ हरिद्रायाम् ॥ मल्लिकाप्रभेदे ॥ अम्बष्ठायाम् ॥ नीलझिण्ट्याम् ॥ एकवर्षवयस्कायागवि ॥ यथा । वर्षमात्रतुवालास्यादितिवालाद्विवार्षिकी ॥ षोडशवर्षीयायांस्त्रियाम् ॥ वालाषोडशवार्षिकीत्युक्तं ॥ शरदिग्रीष्मकालेचवालाशस्याचशर्मदा ॥ देवताविशेषे ॥ वयसिप्रथमेऽपि प्राप्ते ० अजादित्वाट्टाप् ॥ घृतकुमार्याम् ॥ ह्रीवेरे ॥ कन्यायाम् ॥

वालाक्षी । स्त्री० केशपुष्टा० इ० गौ० भा० प्र० इक्षे । दुर्गपुष्प्याम् ॥

वालातप । पुं० प्रथमोदितादित्यतापे ॥ कन्यार्कातपे ॥

वालार्क । पु० प्रातःकालिकेसूर्ये ॥ कन्याराशिस्थेसूर्ये ॥ यथा । शुष्कमासस्त्रियोवृद्धावालार्कस्तरुणंदधिप्रभातेमैथुननिद्रासद्यःप्राणहराणिषट् ॥

वालि । पुं० ऐन्द्रे । सुग्रीववानरभ्रातरि ॥

वालिका । स्त्री० वालायाम् । कन्यायाम् ॥ वालुकायाम ॥ पत्रकाहलायाम् । पिप्पलायाम् ॥ कर्णभूषणे । वाली० इति० भा० ॥

वालिखिल्य । पु० ऋषिविशेषेषु ॥ पुलस्त्यकन्यायासन्नत्याज्जातो षष्टिसहस्रसङ्ख्यकपुरुषेषु ॥ तेचाङ्गुष्ठपरिमाणाः ॥

वाली । पु॰ ऐन्द्रे । इन्द्रपुत्रे वानर राजविशेषे सुग्रीवभ्रातरि ॥ नसस ङ्कुचित पन्थायेन वाली हतो गत । समये तिष्ठ सुग्रीव मा वालिपथमन्वगा ॥ त्रि॰ बालविशिष्टे ॥

बालिनी । स्त्री॰ अश्विनी नक्षत्रे ॥

वालिपुत्र । पु॰ अङ्गदे । तारेये ॥

वालिमा । पु॰ बालतायाम् ॥ बालस्वभाव । पृ॰ इमनिच् ॥

वालिश । त्रि॰ शिशौ ॥ मूर्खे ॥ वालिशस्य मन्त्रवेधनस्यायमधिकारी मूर्खत्वादपूज्यत्वात् । तस्येदमित्यण् ॥ वाडनम् । वाडृ॰ । इन् । वालिश्यति । शो॰ आतोनुपेति क ॥

वालिश्यम् । न॰ मूर्खत्वे ॥ वालिशस्य कर्मभावो वा । ब्रा॰ ष्यञ् ॥

वालिहन्ता । पु॰ श्रीरामचन्द्रे ॥

वाली । स्त्री॰ मेध्ये ॥ स्वनामाप्रसिद्धे॰ अलङ्कारविशेषे ॥

वालीश । पु॰ मूत्रकृच्छ्ररोगे ॥

वालु । स्त्री॰ एलवालुकनाम्निगन्धद्रव्ये ॥

बालुकम् । न॰ एलवालुके ॥ वलते । वलप्राणने । वा॰ उण् । स्वार्थे कन् ॥ पु॰ पानीयामलके ॥

वालुका । स्त्री॰ सिकतासु । वालू॰ इ॰ भा॰ ॥ वालुका लेखनी शीता क्षघोर · चतनाशिनी ॥ टाप् ॥ कर्पूरे ॥ कर्कट्याम् ॥ यन्त्रविशेषे ॥

बालुकागड । पु॰ वालियामच्॰ इ॰ गौ॰ प्र॰ मत्स्ये । सिताङ्गे ॥

वालुकात्मिका । स्त्री॰ शर्करायाम् ॥ त्रि॰ वालुकामये ॥

वालुकाप्रभा । स्त्री॰ नरकविशेषे ॥

बालुकामय । त्रि॰ सैकते ॥

वालुकायन्त्रम् । न॰ औषधपाकार्थे यन्त्रविशेषे ॥ यथा । भाण्डे वितस्ति गम्भीरे मध्ये निहितकूपके । कूपिका कण्ठपर्यन्त वालुकाभिश्च पूरिते ॥ भेषजकूपिकास्य वह्निनायच्च पच्यते । वालकायन्त्रमेतद्धि यन्त्रतत्त्ववुधैः स्मृतम् ॥ इति भावप्रकाश ॥

बालुकास्वेद । पु॰ तप्तवालुकाभिस्तापने ॥ यथा । वातघ्नप्रकृतेः स्वेदान्कारयेद्रूव्यनिर्मितान । स्निग्ध स्वेदोभिषिक्तोऽथ विनाशैवलवातजान् ॥ खर्परभृष्टपटस्थितकाञ्जिकसिक्त वालुकास्वेद । शमयति वातकफामयमस्तकशूलाङ्गभङ्गादीन् ॥ स्रोतमासार्दवकृत्त्वानीत्वा पावकमाशयम् । हत्वावातकफस्तम्भस्वेदोज्वरमपोहति ॥ इ॰ भा॰ प्र॰ ॥

वालुकी । स्त्री॰ कर्कटीभेदे । बहुफलायाम् । स्निग्धफलायाम् ॥ वालुकी वातशमनी शीताद्याश्रमापहा । पित्तास्रशमनी रुच्याकुरुते कासपीनसौ ॥ स्याद्वालुकी शरद्विवर्णजदोषकृ[illegible]न्तजा च खलु पित्तहरा च रुच्या

चिप्र करोतिखलुपीनसमर्थ पक्वाप-क्षात्वतीत्रमधुराफलकारिणीच ॥ इ० रा० नि० ॥

वालुङ्का । वालुङ्की । स्त्री०)इर्वारौ । कर्कट्याम् ॥

वालूक । पु० विषप्रभेदे ॥

वालेय । पु० गर्दभे ॥ रासभे ॥ अङ्गारवल्लर्याम् ॥ दैत्यविशेषे ॥ चाणक्यमूलके ॥ त्रि० मृदौ । कोमले ॥ बलिक्षिते । वल्यर्थे । पूजायोग्ये बलयेउपहारायहितम् । छदिरुपधिवलेर्ढञ् ॥ बलेरपत्यवा । गृष्ट्यादित्वात् ० ढञ् ॥

वालेयशाक । पु० अङ्गारवल्ल्याम् । वर्वरे । भार्ग्याम् ॥ वालेयस्यशाक । गर्दभस्यशाकत्वात् ॥

वालेष्ट । पु० बदरे ॥ त्रि० वालकाभिलषिते ॥

वालोपवीतम् । न० वालकपरिधानवस्त्रे । पञ्चावटे ॥

वाल्मीकि । पु० मुनिविशेषे । रामायणवक्तरि ॥ वल्मीकस्यनाम्नोरपत्यम् । वल्मीकप्रभवोयस्मात्तस्माद्वाल्मीकिरित्यसाविति वक्ष्यवैवर्त्तोक्ते वंल्मीकप्रभवत्वेनगोणपुत्रादिवद्गौणमस्यवल्मीकापत्यत्वगृहीत्वैवसाधुरपत्यार्थे ' ॥ यद्वा । वल्मीकइति० ऋषिविशेषस्यसंज्ञात्वात् ॥

वाल्मीकीय : । त्रि० वाल्मीकिसम्बन्धिनि । तस्येदमित्यर्थे । वृद्धाच्छ ॥

वाल्यम् । न० अवस्थाविशेषे । शैशवे ॥ तिथिश्वर्षमतवाल्यमित्युक्ते पञ्चदशवर्षपर्यन्तावस्थायामित्यर्थः ॥ चापल्ये ॥ ज्ञानिमोवस्थाविशेषे । ज्ञानमनाविष्कुर्वन्नगर्वितत्वे । दम्भदर्पाहङ्कारादिराहित्ये । युक्तित श्रुतार्थानुसन्धानकुशलत्वे ॥ वालस्यभाव कर्मवा । । ब्राह्मणादित्वात्ष्यञ् । पुरोहितादित्वाद्यग्वा ॥

वाष्प । पु० न० नेत्रजले । ऊष्मणि ॥ वाधतेनेत्रम् । वाध् ० । खष्पशिल्पशष्पवाष्परूपपर्पतल्पा । इति पप्रत्यय ॥ धातो ' षादेशश्चनिपात्यते ॥ वाष्पमूष्माश्रु० इत्यमर ॥

वाहु । पु० स्त्री० कक्षादङ्गुल्यग्रपर्यन्तावयवविशेषे । भुजे । प्रवेष्टे । दोष्णि । वाङ० इ० भा० ॥ अस्यशुभाशुभलक्षणयथा । उन्नतवाहु पुरुषोवधबन्धमवाप्नुयात् । दीर्घवाहुर्भवेद्राजा।समुद्रवचनयथा ॥ प्रलम्बवाहुरैश्वर्यंप्राप्नुयाद्गुणसयुतम् । ह्रस्ववाहुर्भवेद्दास परप्रेष्यकरस्तथा । वामावर्तभुजायेतुयेचदीर्घभुजानर ' ॥ सपूर्णवाहवोयेतुराजानस्तेप्रकीर्तिता इति० ॥ कूर्परस्योर्द्ध्वभागे ॥ वाधते । वाध् ० । अर्जिदृशिकम्यमिपशिवाधामृजिपशितुक्

धुकदीर्घस्कारात्र्वेतिकुर्तस्याऽनृत्य ख॥ सगणे॰ पु॰॥ रवे पार्श्वगे॥

बाहुक । पु॰ नलाभिधनृपे । पुण्यश्लोके । अश्वविदि । नैषधे ॥ त्रि॰ बाहुभ्यातरतियस्मिन् ॥ नौद्व्यचष्टन् । स्त्रियाम् ॰ । बाहुका ॥

बाहुकुण्ठ । त्रि॰ कुण्ठितबाहुयुक्ते । कुम्रे । दोर्गडौ ॥

बाहुकुन्थ । पु॰ गरुति । पक्षे । पतत्रे । पङ्ख॰ दु॰ भा॰ ॥

बाहुज । पु॰ क्षत्रिये । कीरे ॥ स्वयञ्जाततिले ॥ त्रि॰ बाहुजाते ॥ बाहुभ्याजात । पञ्चभ्यामजा ताविति ङ ॥ बाह्रोर्जातोवा । सप्तम्याजनेर्ड ॥

बाहुत्राणम । न॰ अस्त्राघातवारणार्थं बाहुबद्धलौहादौ । बाहुले ॥

बाहुदन्ती । पु॰ इन्द्रे ॥

बाहुदा । स्त्री॰ तीर्थविशेषे ॥ सैतवाहिन्यानद्याम् ॥ कदाचिल्लिखितस्वर्णे भ्रातु शून्याश्रमेफलभक्षणाद्राज्ञाबाहुच्छिन्नौ॰तौचास्यातपस्यतस्तस्यजाताविस्यत ॰बाहु॰ छिन्नौदत्तवतीलिखितस्यर्षे । डुदाञ्॰ । आतोनुपेतिक ॥ यद्वा । बहुदस्यकार्त्तवीर्यस्येयम् । तेनावतारितत्वात् । तस्येदमित्य

ण् ॥

बाहुभूषा । स्त्री॰ केयूरे ॥ बाहुभूषणमात्रे ॥

बाहुमूलम् । न॰ कक्षे । काख॰ दु॰ भा॰ ॥ बाह्वोर्मूलम् ॥

बाहुयुद्धम् । न॰ नियुद्धे । दोर्भ्याम् सङ्ग्रामे । बाहुभिर्युद्धम् ॥

बाहुल । पु॰ कार्त्तिकमासे । कर्णे ॥ बहुलाकृत्तिका॰ तयायुक्तापौर्णमासी॰ बाहुली । बाहुलीपौर्णमाऽस्मिन् । सास्मिन्पौर्णमासीत्यण् ॥ अग्नौ ॥ शाक्यमुनें श्रुते । यशोधरेये ॥ न॰ बाहुत्राणे ॥

बाहुलकम् । न॰ प्राचुर्ये ॥ यथा । क्वचित्प्रवृत्ति क्वचिदप्रवृत्ति क्वचिद्विभाषा क्वचिदन्यदेव । विधेर्विधानम् बहुधासमीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥ बहुलस्यभाव । द्वन्द्वमनोज्ञादिभ्यश्चेतिवुञ् ॥

बाहुलेय । पु॰ कार्त्तिकेये । गुहे । स्कन्दे ॥ बहुलानां कृत्तिकानाम पत्यम् । स्त्रीभ्योढक् ॥

बाहुल्यम् । न॰ बहुत्वे ॥ बहुलस्य भाव । ष्यञ् ॥

बाहुशर्द्धौ । पु॰ इन्द्रे ॥ बाह्वो स्वीययोरेवशर्द्धौबलयस्य ॥

बाहुसहस्रभृत् । पु॰ कार्तवीर्यार्जुने ॥बाहूनासहस्रम ॰ विभर्त्ति ।

डुभृञ् । क्षिप् । तुक् ॥
बाहूबाहवि । अ० बाहुयुद्धे ॥ बाहु
र्भ्यांबाहुभ्याप्रहृत्येद युद्ध प्रवृत्तम् ।
तत्रतेनेदमितिस्वरूपे ०इतिबहुव्री
हौ० इच्कर्म्म व्यतिहारइतीच्
समासान्त । अन्येषामपिदृश्यत
इतिदीर्घं । ओगुण । अव् ।
तिष्ठद्गुप्रभृतिषुपाठादव्ययीभावा
दव्ययत्वम् ॥
बिदूर । पु० देशविशेषे ॥ यत्रबाल
वायज सस्क्रियते ॥
बिभित्सा । स्त्री० भेत्तुमिच्छायाम्
॥ भिदिर्० । सनुइलन्ताच्चेति
कित्वाद्गुणाभाव । अप्रत्ययादि
त्यकारप्रत्यये० टाप् ॥
बिभ्यत् । त्रि० वेपमाने ॥ बिभीते
शतरि० नाभ्यस्ताच्छतुरितिनुमभा
व ॥
बिभ्राण । त्रि० दधाने ॥ भृञ
कर्त्तरिशानच् ॥
बीभत्स । पु० अर्जुने । पार्थे ॥ त्रि०
क्रूरे ॥ घृणात्मनि ॥ विकृते ॥ रस
विशेषे ॥ जुगुप्सास्थायिभावस्तुबीभ
त्स कथ्यतेरस. । नीलवर्णोमहाकाल
दैवतोयमुदाहृत : ॥ वधेर्निन्दा
यांसन् । भावे ०घञ् ॥ यद्वा । अ
प्रत्ययात् । बीभत्साऽस्यच । अर्श
आद्यच् ॥ यद्वा । बीभत्सते० बी
भत्स्यतेवाऽनेनवा । बधबन्धने । स
न्नन्त । मान्वधेत्यभ्यासदीर्घ ।
पचाद्यच् ०घञ् ०घोवा ।
बीभत्सा । स्त्री० बीभत्से ।
बीभत्सु । पु० अर्जुने । विजये ॥
बुक्क । पु० बुक्के ॥
बुक्क । पु० छागे ॥ न० अग्रमासे ।
बुक्कायाम् ॥ बुक्यते । खादुत्वान्
भ्रूयते । बुक्कभषणे । घञ् ॥ हृद
ये । पु० स्त्री० समये० इतिरभ
स ॥
बुक्कनम् । न० भषणे । श्वरवे ॥
बुक्का । स्त्री० बुक्के । हृदयान्तर्गतमांस
विशेषे ॥ मेद शोणितयो सारा
दुक्कयोर्युगल भवेत् । तौतुपुष्टिक
रौप्रोक्तौजठरस्थस्यमेदस : ॥ हृद
ये ॥
बुक्कार । पु० सिंहनादे केशरिध्व
नौ ॥
बुक्की । स्त्री० बुक्के ॥
बुडिल । पु० ऋषिविशेषे । आश्वत
राश्वौ ॥
बुद्ध । पु० लब्धवर्णे । विचक्षणे ।
विदुषि । पण्डिते ॥ परमार्थदर्शि
नि । ब्रह्मविदि ॥ विष्णोरवतारवि
शेषे । सर्वज्ञे । सुगगते । धर्मरा
जे । जिने । अजिनसुते । मुनी
न्द्रे ॥ यथा । तत : कलौस प्रवृत्ते
सम्मोहायसुरद्विषाम् । बुद्धोनाम्नाऽ
जिनसुत । कीकटेषुभविष्यति ॥

ईश्वरनिरूपणे बुद्धविशेषाणामतमा
ह। सर्वज्ञइतिसौगता । निराव
रणइतिदिगम्बरा ।-लोकव्यवहा-
रसिद्धइतिचार्वाका । शरीराद्ये-
षचे तनानि०गौरोह जानामीत्या-
दिज्ञानेन०गौरवत्वज्ञानवत्वयो
सामानाधिकरण्यानुभवादितिचा-
र्वाकाणामतञ्च । तेषामतेजगत
चणभङ्गुरत्वम् ॥ नन्वस्तुचणभङ्ग
पूर्वपुञ्जाच्चोत्तरपुञ्जोत्पत्ति तथाच
पुञ्जविष्टकुर्वद्रयाख्यजातिविशेष स्म
रणजनकतावच्छेदकइतिनदोषइति
कुसुमाञ्जलिप्रथमस्तवकटीकायांरा-
मभद्र ॥बुद्धधानादशविधमतभेदमा
ह। वदन्तिपुत्रआत्मेति १ हठप्रा-
कृतबुध्य । देहआत्मेति २ चार्वा
का०इन्द्रियाण्यपरे ३ चते ॥ तेऽ
न्येप्राण ४ स्ततोन्ये तेमनआत्मेति
५ वादिन । बुद्धिरात्मेति ६ बौ
द्धावे०शून्यमात्मेति ७ तेऽपरे ॥
याज्ञिकायज्ञपुरुष सर्वज्ञ ८ सौग-
ताविदु । निरावरणमाहुर्य दिग-
म्बरमतानुगा ॥ चार्वाकाश्चापिलो
कानाव्यवहारप्रसिद्धकम् १० । इ-
त्यात्मप्रकाश ॥ त्रि० बुधिते । ज्ञा
ते । विदिते ॥ प्रशस्ताबुद्धिरस्य। अ
र्शआद्यच् । प्राशस्त्यञ्चसुगतिसाध
कत्वात॥ यद्वा। बुद्ध्यतेस्म । बु
धअवगमने। क्त । दिवादिरनि-

ट् ॥ प्राबुद्धे ॥
बुद्धद्रव्यम्। न० लौपिके। औषा०
इ०भा० ॥
बुद्धवान्। त्रि० ज्ञातवति। ज्ञानि-
नि ॥
बुद्धान्त । पु० जागरे ॥
बुद्धि । स्त्री० आत्मगुणे ॥ सर्वव्यव-
हारहेतुर्ज्ञानं बुद्धि । साद्विधा। अ
नुभूति स्मृतिश्च। यथा। विभुर्बु
द्ध्यादिगुणवान् बुद्धिस्तुद्विविधाम
ता। अनुभूति स्मृतिश्चस्यादनु-
भूतिश्चतुर्विधा। प्रत्यचमप्यनुमिति
स्तथोपमितिशब्दजे ॥इतिनैयायि
कमतेबुद्धेर्विभागइरित ॥ अध्यव
सायलचणायामनीषायाम्। धि-
षणायाम्। धियि ॥ अध्यवसायो-
बुद्धि क्रियाक्रियावतोरभेदविव-
चया। सर्वोव्यवहर्ता०आलोच्य०म
त्वा०अहमत्राधिकृतइत्यभिमत्य०क
र्त्तव्यमेतन्मयेत्यध्यवस्यति० (‡) तत
श्चप्रवर्ततइतिलोकसिद्धम् । तत्रक
र्तव्यमितियोय निश्चयश्चितिसन्निधा
नापन्नचैतन्यायाबुद्धे सोध्यवसायो
ऽसाधारणव्यापार तदभेदाबुद्धि
सचबुद्धेर्लचणम्। समानासमान-
जातीयव्यवच्छेदकत्वात् ॥ तत्त्वा
ततत्वविवेकसामर्थ्ये। महत्तत्त्वे ॥
अन्त करणे ॥ निश्चयात्मिकाया
मन्त करणवृत्तौ ॥ बुद्धिरुपलब्धि

ज्ञानमित्यनर्थान्तरम् । नतुसाङ्ख्यानामिव०बुद्धितत्त्वस्य०महत्तत्त्वापरपर्यायस्यपरिणामविशेषोज्ञानम् । तथाच०बुद्ध्यादिपदवाच्यत्वमनुभवसिद्धज्ञानत्वजातिर्वा०लक्षणम् ज्ञानस्यभार्यायाम् । पञ्चमेधाम् । मतौ । शेमुष्याम् ॥ अध्यात्मबुद्धिरित्याहु षडिन्द्रियविचारिणी । अधिभूतञ्चमन्तव्य ब्रह्मातत्राधिदैवतम् ॥ इत्याश्वमेधिकपर्व । सत्त्वादिगुणभेदेनबुद्धेस्त्रैविध्यमीरितम् । गीतायांवासुदेवेनअर्जुनायानुपृच्छते । यथा । प्रवृत्तिंचनिवृत्तिंच कार्याकार्येभयाभये । बन्ध मोक्षञ्च यावेत्तिबुद्धि सापार्थसात्त्विकी । १ ॥ यथाधर्ममधर्मञ्चकार्यञ्चाकार्यमेवच । अयथावत्प्रजानातिबुद्धि सापार्थराजसी ॥ २ ॥ अधर्मं धर्ममितियामन्यतेतमसावृता । सर्वार्थान्विपरीतांश्चबुद्धि सापार्थतामसीति । ३ ॥ भारतेमोक्षधर्मेस्यागुणा पञ्चप्रकीर्तिता । यथा । इष्टानिष्टविपत्तिश्चव्यवसाय समाधिता । संशय प्रतिपत्तिश्चबुद्धे पञ्चगुणान्विदुरिति ॥ इष्टानिष्टानावृत्तिविशेषाणां०विपत्तिर्नाश ० निद्रारूपावृत्तिरित्यर्थ । व्यवसाय उत्साह । समाधिता० चित्तवृत्तिनिरोधइत्यर्थ । संशय ० कोटिद्वयस्पृक्ज्ञानम् । प्रतिपत्ति प्रत्यक्षादिप्रमाणवृत्ति ॥ इतितट्टीका ॥ अस्या सप्तगुणार्यथा । शुश्रूषाश्रवणञ्चैवग्रहणधारणन्तथा । ऊहापोहोर्थविज्ञानतत्त्वज्ञानञ्चधीगुणा ॥ इति ॥ अस्याद्वत्तय पञ्च । यथा । प्रमाणविपर्ययविकल्पनिद्रास्मृतयइति ॥ बुध्यतेऽनया । बुध० । क्तिन् ॥ बुद्धितत्त्वम् न० बुद्धिरूभावे ॥ तच्च प्राकृतत्वादचेतनमिति०तदीयोध्यवसायोप्यचेतनोघटादिवत् । एवं बुद्धितत्त्वस्य०सुखादयोपिपरिणामभेदाअचेतना ० पुरुषस्तुसुखाद्यननुषङ्गीचेतन । सोयंबुद्धितत्त्ववर्तिनाज्ञानसुखादिनातत्प्रति बिम्बितस्तच्छायापत्त्या ज्ञानसुखादिमानिव भवतीतिचेतनोनुगृह्यते० चिच्छायापत्त्याच०अचेतनापिचिबुद्धिस्तदध्यवसायश्चेतनइवभवति । उक्तञ्च । तस्मात्तत्संयोगादचेतन चेतनावदिवलिङ्गम् । गुणकर्तृत्वेच तथा कर्तेवभवत्युदासीन इति ॥

बुद्धिधर्म । पुं० धर्मादिषु ॥ धर्मो ज्ञानविरागऐश्वर्यम्०सात्त्विकमेतद्रूपतामसमस्माद्विपर्यस्तम् ॥

बुद्धिभेद । पुं० बुद्धेर्विचालने ॥ बुद्धिरहमेतत्कर्म करिष्ये ०एतत्फलञ्चभोक्ष्ये ० इति०तस्या० भेदो विचालनम्०अकर्तात्मोपदेशेन ॥

वुद्धिभ्रंस । पु॰ मतेर्विषयेषुपतनकर्तरि ॥ रजोगुणे ॥

वुद्धिमान् । त्रि॰ वुद्धियुक्ते । ज्ञानवति ॥ तद्भुज्यतेयद्द्विजभुक्तशेषसवुद्धिमान्योनकरोतिपापम् आत्मज्ञानवति । विवेकिनि ॥ प्रशस्तवुद्धौ ॥ वुद्धेः प्राशस्त्यनाम । शुश्रूषाश्रवणचैवग्रहणधारणतथा ।ऊहा पोहोर्थविज्ञानतत्त्वज्ञानञ्चधीगुणा ॥प्रशसायामतुप् ॥

वुद्धियुक्त । त्रि॰ वुद्धिमति ॥ परमात्मसाक्षात्कारवति । समत्ववुद्ध्यायुक्ते ॥

वुद्धियोग । पु॰ आत्मवुद्धिसाधनभूते निष्कामकर्मयोगे । आत्मतत्त्वविषयेसम्यग्दर्शने ॥ अप्रचलितेनसम्यग्ज्ञानस्थैर्यलक्षणेनसमाधिनायुज्यते इति ॥ वुद्ध्याव्यवसायात्मिकयाकृत कर्मयोग वुद्धियोग ॥ वुद्धिसाधनभूतोवायोग ॥

वुद्धिवित् । पु॰ बौद्धे ॥ वुद्धिरेवात्मेतिबौद्धानाभ्रान्तिमात्रमेव । सुप्ते व्यभिचारात्॰वेद्यस्यचघटवद्तिरिक्तवेद्यत्वात् ॥

वुद्धिसम्पत्ति । स्त्री॰ धीशक्तौ ॥ वुद्धे सम्पत्ति ॥

वुद्धिसहाय । पु॰ धीसचिवे म-न्त्रिणि ॥ मते . साहाय्यकर्तरि ॥

वुद्धिस्कन्धमय । पु॰ ससारवृक्षे ॥ वृक्षस्यहिशाखा ' स्कन्धादुद्भवन्ति ससारस्यच वद्धे सकाशान्नानाविधा परिणामाभवन्ति॰तेनसाधर्म्येण॰ वुद्धिरेवस्कन्धस्तन्मयस्तत्प्रचुरोयससारवृक्ष ॥

वुद्धीन्द्रियम् । न॰ ज्ञानेन्द्रिये । धीन्द्रिये ॥ तत्रेन्द्रियतावत्त्रिविधभवति । वुद्धीन्द्रियकर्मेन्द्रियमन्तरिन्द्रियञ्च ।यथाहमनु । वुद्धीन्द्रियाणिपञ्च घाणोत्रादीन्यनुपूर्वश । कर्मेन्द्रियाणिपञ्चै षापायूदीनिप्रचक्षते ॥ एकादशमनोज्ञेयस्वगुणेनोभयात्मकम् । यस्मिन्जितेजितावेतौभवत पञ्चकौगणाविति ॥ वुद्धे करणत्वाद्वुद्धीन्द्रियम् । सङ्कल्परूपेणोभयरूपेन्द्रियगणप्रवर्तकम्वरूपम् । मनस्त्वन्तरिन्द्रियज्ञातव्य । वुद्ध्यर्थमिन्द्रिय ॥

वुद्ध्यमान ' । त्रि॰ गम्यमाने ॥

वुद्बुद । पुं॰ जलस्फोटे । वर्तुलाकारेजलविकारे । वुल्वुला॰ हू॰ भा॰ ॥ अभ्रच्छायातृणाद्ग्निर्नीचसेवापथेजलम् । वेश्यारागं खलेप्रीतिषडेतेवुद्बुदोपमा ॥ गर्भस्यावयवविशेषे यथा । पञ्चरात्रेणकललवुद्बुदाकारतात्रजेत् ॥

वुद्बुदहष्टि । त्रि॰ पुष्पिताक्षे ॥

वुध । पुं॰ विदुषि । विपश्चिति । दोषज्ञे । सति । पण्डिते ॥ विवे-

क्तिनि । विवेकेनावगततत्त्वे । अधिष्ठानसाक्षात्कारेणनिवृत्तभ्रमे । आत्मतत्त्वज्ञे । ब्रह्मविदि ॥ चतुर्थग्रहे । रौहिणेये सौम्ये ॥ अस्य वारेजातस्यफलम । यथा । गुणीगुणज्ञः कुशलः क्रियादौविलासशीलोमतिमान्विनीतः । मृदुस्वभावः कमनीयमूर्तिर्बुधस्यवारेप्रभवोमनुष्यः ॥ सूर्यवंशीयदेवामीढनृपस्यपुत्रे ॥ बुद्ध्यते । बुध० । इगुपधेतिकः ॥ बुद्धमुनौ ॥ सर्वज्ञः ॥ सुगतोबुधः ॥ इ० व्याडिकोष ॥

बुधगृहम् । न० मिथुनराशौ ॥ कन्याराशौ ॥ बुधस्यगृहम् ।

बुधचार । पु० पश्यवाराहीम् ॥

बुधतात । पु० विधौ । चन्द्रे ॥

बुधरत्नम् । न० मरकतमणौ ॥

बुधराशि । पु० मिथुने । कन्यायाम् ॥

बुधसुत । पुं० पुरूरवसि ॥

बुधा । स्त्री० जटामांस्याम् ॥

बुधान । पु० गुरौ । जीवे । बृहस्पतौ ॥ त्रि० विज्ञे ॥ ब्रह्मवादिनि ॥ प्रियवादिनि ॥ बुध्यते० बोधयति वा । बुध० । युधिबुधिदृशः किच्चेत्यानच् ॥

बुधाष्टमी । स्त्री० व्रतविशेषे ॥ पतङ्गे मकरेयातेदेवेजाग्रतिमाधवे । बुधाष्टमींप्रकुर्वीतवर्जयित्वातुचैत्रकम् ॥ प्रसुप्तेचजगन्नाथेसन्ध्याकालेमधौतथा । बुधाष्टमींनकुर्वीतकृतानाशन्ति पुराकृतम् ॥

बुधित । त्रि० ज्ञाते । बुद्धे । विदिते ॥ बुध्यतेस्म । बुध० भ्वादि सेट् । क्त ॥

बुधिन )
बुधिल ) त्रि० पण्डिते ॥

बुध्न । पु० मूले ॥ रुद्रे । गिरिशे ॥ बध्नाति० बध्यतेवा । बधबन्धने । बन्धेर्ब्रधिबुधीचेतिनक् ॥ वर्तुले । यथा । पृथुबुध्नोदराकारोघटइति ॥

बुभुक्षा । स्त्री० क्षुधि । अशनायायाम् ॥ भोक्तुमिच्छा । भुजपालनाभ्यवहारयो । धातोः कर्मणइतिसन् । अप्रत्ययादित्य । टाप् ॥

बुभुक्षित । त्रि० क्षुधार्ते । क्षुधिते ॥ बुभुक्षासञ्जातास्य । तारकादित्वादितच् ॥

बुभुक्षु । त्रि० ससारभोगासक्तजने ॥

बुभुत्सा । स्त्री० बोद्धुमिच्छायाम् ॥

बुभूषु । त्रि० भवितुमिच्छौ ॥ भुव । सन्नन्तादुप्रत्यय ॥

बुम्बारव । पु० हस्तमुखयोगेनक्रियमाणेशब्दे ॥ कस्मिंश्चिदनर्थेसम्प्राप्तएतच्छब्दलोका कुर्वन्ति । यथा । गत्वादैत्यपतिसर्वेचक्रुर्बुम्बारवमुहुः । रक्षरक्षमहाराजभक्षयत्ययकालिकेतिशुम्भप्रतिरयात् पराहत्यागतानांदैत्यानामुक्तिर्भाग

वते ॥ बोबी इ० भा० ॥
बुलि । स्त्री० भगे ॥
बुषम् । न० बुसे ॥
बुसम् । न० तुच्छधान्ये । कडङ्गरे । भुस० भूसा० इ० भा० ॥ बुस्यति बुस उत्सर्गे । इगुपधेतिक ॥
बुस्त । पुं० न० मासपिण्डविशेषे ॥ स्थालीभृष्टमांसे ॥ पनसादिफलस्य सारभागे ॥ बुस्यतेस्म । बुस० । क्त ॥
बृद्ध । पु० पथ्यान्तस्यादिम् ॥
बृहच्चञ्चु । पु० महाचञ्चुशाके ॥
बृहच्चित्त । पु० बीजपूरे ॥
बृहच्छल्क । पु० चिङ्गटमत्स्ये ॥
बृहच्छुक । पु० दार्वाघाटे । काठकोरवा० इ० भा० ॥
बृहच्छ्रवा । त्रि० महायशसि ॥
बृहच्छ्लोक । पु० भगवतिवासुदेवे । बृहन्तः श्लोकाः कवीनांपद्यानियस्मिन् ॥
बृहज्जीरक । पु० कृष्णजीरके ॥ मगरैलाइतिलोकेइतिभावप्रकाश ॥
बृहज्जीवन्ती । स्त्री० वृक्षविशेषे । पुत्रभद्रायाम् । जीवपुत्रायाम् ॥
बृहड्ढक्का । स्त्री० दण्डढक्कायाम् ॥
बृहत् । त्रि० महति ॥ बर्हति । बृहवृद्धौ ॥ वर्तमानेपृषद्बृहन्महज्जगच्छतृवच्चेत्यतिप्रत्ययान्तोनिपातितः ॥ ब्रह्मणि ॥ बृहत्त्वाद्बृंहणत्वा



च्चब्रह्मबृहत् । अत्रापिप्रत्ययेनहेतुकर्तृसाधारणकर्तृत्वसामान्यं प्रतिपाद्यते । वर्हतिवृद्धिप्रेप्सुरितिबृंहयतिवर्द्धयतिचेतियोगात् । तथाच बृहिधात्वर्थवृद्धिप्रतिकर्ताहेतुकर्ताचेत्युभयमपिकर्तृत्वेनरूपेणलभ्यतइतिवर्धितावर्धयिताचेति बृहत्पदेनोच्यते ॥ आदित्यदैवत्ये साम विशेषे ॥ बृहत्सामतथासाम्नामिति भगवदुक्तेः ॥
बृहताम्पति । पु० सुराचार्ये ॥
बृहतिका । स्त्री० उत्तरीये । उपरिवस्त्रे । उपर्ना० इ० भा० ॥ बृहतीवसनान्तरे० बृहत्येव । बृहत्याआच्छादने० इतिकन् ॥ कण्टकार्यां ॥
बृहती । स्त्री० वसनान्तरे ॥ वारिधान्याम् ॥ वाचि ॥ विततायाम् ॥ महत्याम् ॥ क्षुद्रायाक्षुद्रवार्ताक्याम् बृहतीतिनिगद्यते । प्रवं तक्षुद्राचन्द्रहासालक्ष्मणाचेवदूतिका ॥ गर्भदाचन्द्रभाचन्द्राचन्द्रपुष्पाप्रियङ्करी ॥ बृहतीग्राहिणीहृद्यापाचनीकफवातहृत् । कटुतिक्तास्यवैरस्यमलारोचकनाशिनी ॥ उष्णाकुष्ठज्वरश्वासशूलकासाग्निमान्द्यजित ॥ कण्टकार्याम् ॥ विश्वावसोर्वीणायाम् ॥ नवाक्षरायांवृत्तौ ॥ वर्हति । बृह० । वर्तमानेपृषदितिसाधु । शतृवत्त्वान्ङीप् ॥

बृहतीपति । पु० बृहस्पती ॥

बृहतीसहस्रम् । न० महदुक्थे ॥

बृहत्कन्द । पु० गृञ्जने ॥ विष्णुकन्दे ॥

बृहत्कालशाक । पु० कासमर्दान्तरे ॥

बृहत्काश । पु० पोटगले ॥

बृहत्कुक्षि । त्रि० तुन्दिले ॥ विशालजठरेजने ॥ बृहत्कुक्षिरस्य ॥

बृहत्ताल । पु० पाठायाम् ॥

बृहत्तृण । पु० वंशे ॥

बृहत्त्वक् । पु० सप्तपर्णे ॥ रोध्रे ॥ ग्रहनाशनवृक्षे । छातियान् इ० भा० ॥

बृहत्पञ्चमूलम् । न० पञ्चमूले ॥

बृहत्पत्र । पु० दीर्घपत्रे ॥ पट्टिकालोध्रे ॥ हस्तिकन्दे ॥

बृहत्पत्रा । स्त्री० त्रिपर्णिकायाम् ॥

बृहत्पाटलि । पु० धुस्तूरे ॥

बृहत्पाद । पु० वटवृक्षे ॥

बृहत्पारेवतम् । न० महापारेवते ॥

बृहत्पाली । पु० वनजीरे ॥

बृहत्पीलु । पु० महापीलौ ॥

बृहत्पुष्प । पुं० कुलके ॥

बृहत्पुष्पी । स्त्री० घण्टारवायाम ॥

बृहत्फल । पुं० पनसे ॥ कूष्माण्डे ॥ चचेण्डायाम् ॥

बृहत्फला । स्त्री० कटुतुम्ब्याम् ॥ महेन्द्रवारुण्याम् ॥ कूष्माण्ड्याम् ॥

महाजम्ब्वाम् ॥

बृहत्साम । न० गीतिविशेषे ॥

बृहदङ्ग । पु० मतङ्गजे ॥

बृहदम्ल । पु० कर्माकरे । कर्मरङ्गे ॥

बृहदारण्यकम् । न० यजुर्वेदीयोपनिषद्विशेषे ॥ यथा । अरण्येऽध्यापनादेतदारण्यकमुदाहृतम् । बृहत्त्वाद्ग्रन्थतोर्थाच्च बृहदारण्यकमतम् ॥ बृहच्चतदारण्यकञ्चेति विग्रहः ॥

बृहदेला । स्त्री० पृथ्वीकायाम् । स्थूलैलायाम् ॥

बृहद्गृह । पु०)भ०कारूषदेशेषु ॥ विन्ध्या

बृहद्गृह । पुं०)द्रे पश्चान्मालवदेशस्य समीपेतिदेशावर्तन्ते ॥

बृहद्गोलम् । न० तरम्बुजे । तरबूज इ० भा० ॥

बृहद्दल । पु० पट्टिकालोध्रे ॥ हिन्तालै ॥

बृहद्दलम् । न० हलौ । जिल्यायाम् ॥

बृहद्भट्टारिका । स्त्री० दुर्गायाम् ॥

बृहद्भानु । पु० अनले । वह्नौ ॥ बृहन्तोभानवोस्य ॥ चित्रकै ॥

बृहद्रथ । पु० पराशरशिष्ये । शाङ्गरवे ॥ इन्द्रे ॥ यज्ञपात्रे ॥ मन्त्रविशेषे ॥ सामवेदांशे ॥

बृहद्रावी । पुं० क्षुद्रोलूके ॥

बृहद्वनम् । न० गोकुले ॥ महद्वने ॥

बृहद्वल्क । पु० पट्टिकालोध्रे ॥

बृहद्वात : । पुं० अश्मरीहरे । देवधा

न्ये ॥

बृहद्वारुणी । स्त्री॰ महेन्द्रवारुण्या म् ॥

बृहद्बीज । पु॰ आम्रातके ॥

बृहन्नल । पु॰ महापोटगले ॥ अर्जुने । सुभद्रेशे ॥

बृहन्नला । स्त्री॰ अर्जुने ॥ द्वादशवर्ष वनवासानन्तर मज्ञातवासे विराटभवने विराटकन्यायान्नृत्यगीतादिशिक्षार्थं स्त्रीक्लीववेशेनार्ज्जुनो बृहन्नलेति नाम्नाख्यातो ऽभूत् । यथा । अर्जुनउवाच । गायामिनृत्याम्यथवादयामि भद्रोस्मिनृत्ये कुशलोस्मिगीते । त्वमुत्तरायैप्रदिशस्वमास्वय भवामिदेव्यानरदेवनर्त्तक ॥ इदन्तुरूप ममयेनकिन्तवप्रकोर्त्तयित्वा भृशशोकवर्द्धनम् । बृहन्नलामानरदेवविद्धिसुत सुतावापितृमातृवर्ज्जिताम् ॥ विराटउवाच । ददामितेहन्तवर बृहन्नले सुताचमेनर्त्तययाश्चतादृशी ॥ इतिमहाभारते विराटपर्व ॥

बृहस्पति । पु॰ सुराचार्ये । गीष्पती ॥ पंचमवारे ॥ तद्वारजातफलम् । नृपेन्द्रमन्त्रीनृपलब्धकामोविद्याविनोदीचतुर प्रगल्भ । आचार्यपूज्योमधुरस्वभावोवारेभवेद्देववगुरोर्मनुष्य ॥ बृहताम्पति । तद्बृहतोरितिसुट्तलोपौ ॥

बृहस्पतिगृहम । न॰ धनूराशौ ॥ मीनराशौ ॥

बेटक । पु॰ वैकटिके , मणिकारे ॥ मत्स्यप्रभेदे । भेकटी॰ इ॰ गौ॰ दे॰ भा॰ ॥ यूनि । जातताकण्ये ॥ विदूषके ॥

बेढमिका । स्त्री॰ वेढमी॰ वेढवी॰ इ॰ भा॰ प्र॰ खाद्ये ॥ यथा । माषपिष्टिकयापूर्णगर्भागोधूमचूर्णत । रचितारोटिकासैवप्रोक्तावेढमिकाबुधैः ॥ भवेद्वेढमिकावल्याबृंह्याकच्य निलापहा । उष्णासन्तर्पिणीगुर्वीवृंहणीशुक्रलापरम् ॥ भिन्नमूत्रमलास्तन्य मेद पित्तकफप्रदा गुदक्कीलार्दितश्वासपङ्क्तिशूलानिनाशयेत् ॥ पङ्क्तीत्यत्र॰ यक्कदिति पाठान्तरम् ॥

बोकडी । स्त्री॰ वस्तान्त्याम् ॥

बोद्धव्य । त्रि॰ ज्ञातव्ये । प्रतिपाद्ये ॥

बोद्धा । त्रि॰ बोधकर्त्तरि ॥ बुद्ध्यति । बुधअवगमने । तृच् ॥

बोद्ध्यमान । त्रि॰ उपदिश्यमाने ॥

बोध । पु॰ ज्ञाने ॥ यथा । बोधविहीने श्रोतरिवक्तु र्वाक्य प्रयातिवैफल्यम् । नयनविहीनेभर्त्तरिलावण्यमिवखञ्जनाक्षीणामिति ॥ साक्षान्मोक्षसाधने ज्ञाने ॥ यथा हरा

चार्या । बोधोन्यसावनेभ्योहिंसा चान्मोचैक्षमाधनम् । पाकस्यवह्नि वत्ज्ञान विनामोक्षोनसिद्ध्यती ति ॥ वृत्तिज्ञाने ॥ जागरणकाले चैतन्ये ॥ निर्णयात्मकज्ञाने ॥ आत्मसाक्षात्कारे ॥ प्रमाणनयश्चे तनाशक्ते रनुग्रहस्तत्फल प्रमाबो धद्वतिसाङ्ख्या । बोधनम । बुध ० । बुद्ध्यतेयेनबाघञ् ॥

बोधक । पु० सूचके ॥ प्रमाणे ॥ त्रि० बोधकर्त्तरि ॥ बोधजनके ।

बोधकर । पु० निशान्ते बोधका रकेस्तुत्यादिनाप्रातर्बोधके ॥ बोध करोति । डुकृञ् ० । कृञोहेत्वि तिट ॥

बोधज्ञ । पु० श्रीकृष्णे ॥ य० । स र्वभावविदांश्रेष्ठोबोधज्ञ, कामशा स्त्रवित् । कामिनींबोधयामासवा सयामासवक्षसि ॥ त्रि०अभिप्राया भिज्ञे ॥

बोधद । पुं० अर्हति ॥ त्रि०बोध दातरि ॥

बोधनम् । न० गन्धदीपने । विज्ञाप ने । वेदने ॥

बोधनी । स्त्री० कार्त्तिकशुक्लैकादश्या म् ॥ बोधी ॥ पिप्पल्याम् ॥ शिव चक्रेषु कैलासादुपरिस्थे ॥

बोधनीय । त्रि० बोध्ये । बोधित व्ये । बोधयोग्ये ॥

बोधभानु । पुं० ज्ञानार्के ॥ यथा । सतितमसिमोहरूपे विश्वमपश्यन्न दंतदित्यखिलम् । उदितवतिबोध भानौकिमपिनपश्यामिकिञ्चिद चि त्रम् ॥

बोधवासर । पु० भगवत प्रबोधदि ने । उत्थानैकादश्याम् ।

बोधात्मा । पु० ज्ञानस्वरूपे०परमा त्मनि । यथा । कदाचिद्दशवद्दारैस्तु द्वैतयद्यपि श्यति । बोधात्मव्यति रेकेणनपश्यतिचिदन्वयात् ॥ किन्तु पश्यतिमिथ्या वदिङ्मोहेन्दुविभाग वत् ॥

बोधायन । पु० ऋषिविशेषे । ज्यो तिष्टोमादियज्ञपरमार्थवादिनि ॥

बोधि । पु० बौद्धसमाधौ ॥ पि प्पलपादपे ॥ बोधि ॥ त्रि०ज्ञातरि ॥ बुद्ध्यते । बुध० । सर्वधातुभ्य इन् ॥

बोधित । त्रि० ज्ञापिते ॥ सञ्जातबो धे ॥ ता० इतच् ॥

बोधितरु । पुं० अश्वत्थद्रुमे ॥ बो धिस्यासीतरुश्च ॥

बोधितव्य । त्रि० ज्ञापितव्ये ॥

बोधिद्रुम : । पुं० पिप्पलवृक्षे ॥ बो धिस्यासीद्द्रुमश्च ॥

बोधिवृक्ष । पुं० अश्वत्थे । चलदले ॥

बोधिसत्त्वम् । न० बुद्धे । श्रीघने ॥

बौद्ध । पु० बुद्धशास्त्रावलम्बिनि ॥

भिहितम् । भगवत् ० योनिगत् ॥ कटीकपालनिस्तोददाहकगडूरुजा द्य । भवन्तिपूर्वरूपाणिभविष्यति भगन्दरे ॥ कटीकपालमत्रकटीफल कम् ॥ अथास्यपिडकामेवतथायला दुपाचरेत । शुद्ध्यसृत्तिर्स का र्य्ये र्ययापाकनगच्छति ॥ लङ्घन स्वेदन लेप विस्नापनविरेचनै । रक्तमोक्षादिभि शीघ्र गुदजापि डकाजयेत ॥ तथायत्न भिषक्कुर्या द्यथापाक नियच्छति । अपक्वा वाथ पक्वा वाजलौकापातन हितम् ॥ त दभावे तुशृङ्गाभ्यामिदरक्तस्यमोक्षण म् ॥ गुग्गलुस्त्रिफलायुक्तपीत्वान श्येद्भगन्दर ॥

भगभक्षक । पुं० कुट्टाशिनि । कुट ना० इ० भा० ॥ तस्यान्न भक्षणे निषेधोयथा । यीवान्यवै 'परि त्यक्त साधभिर्व्राह्मणैरपि । कुट्टाशीयस्तस्यान्न भुक्त्वाचान्द्रा यण चरेदिति ।

भगवान् वि० अचिन्त्यैश्वर्यादिगु णे० ईश्वरशब्दवाच्ये ॥ भग माहा त्म्य षड्विधमैश्वर्य चनित्यम प्रतिबन्धेनयत्रवर्त्तते ०सभगवान् नित्ययोगेमतुप् ॥ उत्पत्तिं निधन चैवभूतानामागतिङ्गतिम् । वेत्तिविद्यामविद्याञ्चसवाच्योभगवा निति विष्णुपुराणम् ॥ पूजावति

। पुंर्थे ॥ आत्मनि । त्रि ॥

भगवती । स्त्री० अचिन्त्यैश्वर्यायामा- द्यायाम् । गौर्याम् । दुर्गायाम् । प रस्याप्रकृतौ ॥ तस्या स्वरूप यथा । यथानित्योहिभगवान्नित्याभगव तीतथा ॥ स्वमाययातिरोभूतातत्रेशे प्राकृतेलये ॥ आब्रह्मस्तम्बपर्यन्त स र्वं मिथ्यैवकृत्रिमम् । दुर्गासत्यस्व रूपासाप्रकृतिर्भगवान्यथा सि द्ध्यैश्वर्यादिकसर्वं यस्यामस्तियुगेयु गे । सिद्ध्यादिकेभगोर्ज्ञे यस्तेनभ गवतीस्मृता ॥ इतिब्रह्मवैवर्त्तपुरा णम् ॥ अपिच । सेव्यतेयामुरै सर्वैस्ताञ्चैवभजतेयत । धातु- र्भजेतिसैवायाभगवत्येवसास्मृते- ति ॥ चतुर्व्यूहात्मकभगवत्या स्वरूपक्रमेणदर्शितश्रीदेवीभागवते । तद्यथा । सर्वस्याद्यामहालक्ष्मीर्वरे ण्याशक्तिरुत्तमा । सात्त्विकीयमशी पालाजगत्पालनतत्परा ॥ सृजतेया रजोरूपासत्त्व रूप चपालने । सहार चतमोरूपात्रिगुणासासदामता ॥ निर्गुणापरमाशक्ति ' सर्वकामफ- लप्रदा । सर्वेषाकारणसाहिब्रह्मा दीनानृपोत्तमा ' ॥ सर्वस्याद्येति । एकापालयित्रीसात्त्विकीमहालक्ष्मी विष्णुशक्ति सर्वप्रपञ्चस्याद्येय- म् । द्वितीयातु० सृजतेयारजोरूपा सा०सत्त्वरूपाचपालने०इतिपुनस्

क्तिरनुवादरूपा सहारेतमोरूपा-
यासैयहृतीयाशक्ति । एतासाना-
मानिप्रथमस्कन्दएवोक्तानि। तथा
स्तुसात्विकीश्रक्तीराजसीतामसीत-
था। महालक्ष्मीसरस्वतीमहाकाली
तिता स्त्रियइति । ननुरहस्येतु०
सत्वाख्येनातिशुद्धेनगुणेनेन्दुप्रभ
इधा॑इतिवचनेनमहालक्ष्मीरजोगु
णासरस्वतीसत्वगुणेतिलभ्यतइति-
चेन्न । कल्पभेदेनगुणभेदव्यवस्था
या सुस्थत्वात् । एतासाचशक्ती-
नाशक्तमत्स्वरूपाव्यतिरेकाद्ब्रह्माश्रय
विहायावस्थान सम्भवेन०तत्तद्गु-
णाविशिष्ट ब्रह्मैवमहालक्ष्म्यादिना
मकमिति ध्येयम् ॥ निर्गुणेति ।
अथयागुणत्रयकारणभूतासाम्याव-
स्थात्मिकासानिर्गुणा०तत्रापिप
राशक्तित्वेन०ब्रह्माश्रयविनाऽनस्था
नासम्भवेन०साम्यावस्थमायोपाधि
कब्रह्मैव०पराशक्तिमायाभु नेश्व-
रीशब्दवाच्य भवति । सर्वेचेदमुपो-
त्वातेस्पष्टम् । तत्रनिर्गुणासर्वे-
षाकारणमित्याह । सर्वकारणा
साहीति । सर्वकारणस्यानवस्था
भियाकस्मादप्युत्पत्त्यभावेननित्य-
त्वमुक्तम् । तेनचकेयशक्ति कुतो
जातेत्यशङ्कोत्तरदत्त भवति ॥ रूपच
तुष्टयमध्येप्याह । निर्गुणासर्वया-
ज्ञातुमशक्यायोगिभिर्नृपा । सगु-
णासुखसेव्यासाचिन्तनीयासदाबुधैः
॥ अयोगिभिरितिच्छेदः । अयो
गिभिर्निर्विकल्पसमाधिरहितैर्निर्गु
णाज्ञातुमशक्यायोगिबुद्धिगम्यैवसे
त्यर्थः । तथाचश्वेताश्वतरेतिध्या-
नयोगानुगताअपश्यन्देवात्मशक्ति
स्वगुणैर्निगूढामिति । मध्यमाधि-
का रिणामयोगिनान्तुसगुणामहा-
लक्ष्म्यादिरूपाचिन्तनीयेत्यर्थः ।
तदुत्तरामूलप्रकृतेरेवसर्वोपास्य-
त्वमितिरहस्यम् । सर्वञ्चेदशक्ति-
त्वविमर्शिन्यास्पष्टम् ॥ पूज्यायाम्
॥ उगित्वान्ङीप् ॥

भगवत्पदी । स्त्री० गङ्गायाम् ॥

भगवत्पूज्यपाद । पु० श्रीशङ्कराचा-
र्ये ॥

भगवद्द्रुम । पु० तगरवृक्षे ॥

भगवद्धर्म । पु० हरिपरितोषकैकाद
श्यादिनियमस्वरूपेधर्मे ॥ त्रि०त
द्विशिष्टे ॥

भगवद्भक्त । त्रि० स्थितप्रज्ञे ॥ य० ।
दैवाधीनजगत्सर्वं म जन्मकर्मशुभा
शुभम् । तयोगाश्चवियोगाश्चनचदै
वात्परवलम् ॥ कृष्णायत्तञ्चतद्दैव
सदैवात्परतस्तत । भजन्तिसतत
सत परमात्मानमीश्वरम् ॥ दै-
व वर्धयितु शक्त क्षय कर्तुं स्वली
लया । नदैववद्धस्तद्भक्तस्त्वाविनाशी
चनिर्गुण ॥

भगालम् । न० नृकरोटिकाया म् । नृमस्तके ॥ भनक्ति । भञ्जो आमर्दने । बाहुलकात् कालन् । नलोप । न्यङ्क्वादित्वात् कुत्व म् ॥

भगाली । पुं० चन्द्रमौली । सदाशि वे ॥ भगालमस्यास्ति । इनि ॥

भगिनी । स्त्री० सहोदरायाम् ॥ स्वसरि ॥ भग कल्याणम् ० कृष्णा वास्त्यस्या । इनि । ङी प् ॥

भगनीपति । पुं० आवुत्ते ॥ भामे । । भगिन्याः पति ॥

भगीरथ । पुं० सूर्यवंशीयनृपति विशेषे । दिलीपात्मजे ॥ योहि गङ्गास्वर्गादानीयभागीरथीतिसञ्ज्ञा चकार ॥

भगोल । पुं० भपञ्जरे । नक्षत्रचक्रे ॥

भगो । अ० ) हेभगवन्०

भगो । अ० ) इतिसम्बोधने ॥

भग्न । त्रि० पराजिते ॥ स्फुटिते । फूटा० इ० भा० ॥ भङ्गे ॥ तोडा० इ० भा० ॥ यथा । चिरकालोषित- जीर्णकीटनिष्कुषितधनुः । किं चित्रयदिरामेणभग्नंक्षत्रियकान्ति के ॥ भञ्जे : क्त ॥ न० रोगविशेषे । अस्थिविश्लेषलक्षणे ॥

भग्नपादर्क्षम् । न० पुष्कराख्यनक्षत्र षट्के ॥ यथा । पुनर्वसूत्तराषाढाः कृत्तिकोत्तरफल्गुनी । पूर्वभाद्र विशाखर्क्षं चषडेतेपुष्करा स्मृता० ॥ भग्नपादर्क्षसंयोगात्० द्वितीया द्वादशीयदि । सप्तमीचार्कमन्दारे जायतेजारजोध्रुवम् ॥

भग्नपृष्ठ । पुं० सम्मुखे ॥ इ० त्रि० शेष ॥

भग्नसन्धि । पुं० शरीरस्यसन्धिस्था नभग्नरोगविशेषे ॥ तस्यौषधं यथा । अभयाचिफलाव्योष सर्वैरेभि समौकृतैः । तुल्यैश्च गुग्गुलुनायो ज्योभग्नसन्धिप्रसारकः ॥

भग्नसन्धिकम् । न० घोले ॥

भग्नात्मा । पुं० चन्द्रमसि ॥

भग्नाश । त्रि० हताशे ॥

भग्नी । स्त्री० भगिन्याम् ॥

भङ्कारी । स्त्री० दंशे ॥

भङ्क्ता । त्रि० भङ्गकर्त्तरि ॥ भनक्ति । भञ्जो० । तृच् ॥

भङ्ग । पुं० तरङ्गे । वीच्याम् । कल्लोल्याम् ॥ भज्यते । भञ्जो० । कर्मणिघञ् ॥ जयविपर्यये । पराजये । भञ्जनम् । घञ् ॥ भेदे ॥ रोगविशेषे ॥ रोगमात्रे ॥ स्फोटने ॥ कौटिल्ये ॥ भये ॥ विच्छित्तौ ॥ जलनिर्याणे ॥ न० खण्डे ॥

भङ्गवासा । स्त्री० हरिद्रायाम् ॥

भङ्गसार्थ । त्रि० कुटिले ॥

भङ्गा । स्त्री० शणाख्यशस्यान्तरे । मा

तुलान्याम् ॥ इन्द्राशने । विजया याम् । भाङ्ग० इ० भा० । भङ्गाक फहरीतिक्ताग्राहिणीपाचनीलघु । तीक्ष्णोष्णापित्तलामोहमदवाग- वह्निवर्द्धनी ॥ भज्यतेऽनया। भञ्जो० । अकर्त्तरिचेतिहलश्चेतिवा० घञ् । टाप् ॥ चित्रतायाम् ॥

भङ्गाकटम् । न० भङ्गारजसि ॥ अला बूतिलेति० कटच् ॥

भङ्गान । पु० मत्स्यविशेषे ॥ दीर्घज ङ्घले । भाङ्गन० इ० गौ० दे० भा०

भङ्गि । स्त्री० भक्तौ ॥ वीच्याम् ॥ विच्छेदे ॥ कौटिल्यप्रभेदे । त्रिभ ङ्ग्याम् ॥ विन्यासे ॥ भङ्गे ॥ व्याजे ॥ छलनिभे ॥नानाविधशब्दरचना वैदग्ध्यविशेषाभङ्गयइतिव्याख्या- तार ॥ भङ्गस्यकरणम् । तत्करोतो- तिण्यन्तादिचइ ॥

भङ्गिमा । पु० भङ्ग्याम् ॥ यथा । अ धरेकज्जलचारुदृशोस्ताम्बूलरङ्गिमा । प्राणनाथक्रिमेतत्तेवेशविन्यास- भङ्गिमा ॥

भगी । स्त्री० त्रिभङ्ग्याम् । कौटि- ल्ये । अगसनोहरविन्यासे ॥ जा- नाभिमानमलयागिवचोविभगीभ गीश्रतनयनयोरपिचातुरीच । श्रा भीरनन्दनमुखाम्बुजसगशसोवशी रवोयदिनमामवशीकरोतोत्युद्भट

भगुर । पु० नद्यावक्रे । त्रि० कुटि ले । वक्रे ॥ नश्वरे ॥ भज्यतेस्वयमे व । भञ्जो० । भञ्जभासीतिघुरच् ० कर्मकर्त्तर्येव ॥

भगुरा । स्त्री० अतिविषायाम् ॥ प्रिय ङ्गौ ॥

भङ्ग्यम । न० भागीने ॥ भगायाभव नक्षेत्रम् । विभाषातिलमाषोमाभ ङ्गाणुभ्य इ०पक्षेयत् ॥ भंगार्हे । भ ङ्गमर्हति । दण्डादित्वाद्यत् ॥

भचक्रम् । न० राशिचक्रे ॥ यथा । भमावर्त्तीभचक्रेस्मिन्ध्रुवेनाभौव्य स्थित । आराचक्रेत्विन्दुभौमौश्च क्रजीवशनैश्चरा ॥ राहु केतुरग स्त्यस्वनक्षत्राण्यथराशय । यदादि त्सुसुश्रष्टासुमेरोर्भूगोलकोद्भवा ॥ छा याभवेत्तदाराशि स्यात्तदिरहा द्दिनम् । सूर्येन्द्वोरुपरागस्तुगोलच्छा ययाभवेत् ॥ अन्योन्ययोस्तयोरेवका रणात् । ग्रासमोक्षौतुजायेतेतत्रात पूर्वपश्चिमौ ॥ तत्रपुण्यफलाद्भाग कृतौराहोस्तुविष्णुनेत्याद्यौ वह्निपुरा राणभेदनामाध्याय ॥ अथभचक्र भ्रमणव्यवस्थामाहसिद्धान्तशिरोम णौ ॥ निरक्षदेशेक्षितिमण्डलोपगौ ध्रुवौनर पश्यतिदक्षिणोत्तरौ । तदाश्रितं खेजलयन्त्रवत्सदा भ्रमद्भ चक्रं निजमस्तकोपरि ॥ उदग्दिशंया तियथायथानरस्तथातथाखान्नतमृक्ष, मण्डलम् । उदग्ध्रुवंपश्यतिचोन्नत

चितेस्तदन्तरेयोजनजा पलाग्रका ॥ योजनसङ्ख्याभाग्रे३६०गुणिता कुपरिधिहृता४६६७भवन्त्य ग्रा भूमौकच्छायावाभागेभ्योयोजनानिच व्यस्तम् ॥ इति ॥

भजन् । त्रि० विभजति । भागकर्त्तरि ॥ सेवाकर्त्तरि । सेवति ॥ भजति । भजसेवायाम् । लट शत्रादेश ॥

भजनम् । न० भक्तौ ॥ भाग सेवायाम् ॥ भजेर्भावेल्युट् । दारास्ते-येभजनसहायापुत्रास्ते येतद्धनकाया । धनमपितद्वद्दरिभजनार्थंनोचेदेत त्तसर्वंव्यर्थम् ॥

भजमान । त्रि० औपयिके । न्याया गते ॥ शरणागते ॥ भजतेफलमनु वध्नाति । भज० । ताच्छील्येति० चानश्० शानज्वा ॥ भागकर्त्तरि ॥ सेवाकर्त्तरि ॥

भजिष्णु । त्रि० भजनशीले ॥

भञ्जक । पु० त्रि० भञ्जनकर्त्तरि ॥ भनक्ति । भञ्जो० । लट शतृ ॥

भञ्जनम् । न० खण्डने ॥ भञ्जेर्भावेल्युट् ।

भञ्जनक । पु० मुखरोगविशेषे । यथा । वक्त्रं वक्रं भवेद्यस्यदन्तभगश्च जायते । कफवातकृतोव्याधि स भञ्जनकसञ्ज्ञित ॥

भञ्जरु । पु० देवकुलोद्भूततरौ । काचिमे ॥

भञ्जा । स्त्री० अन्नपूर्णायादव्याम् ॥

भञ्जित । त्रि० खण्डिते ॥

भट । पु० योद्धरि । वीरे ॥ पामर विशेषे ॥ म्लेच्छप्रभेदे ॥ मिथ्याभाषिणिसेवके ॥ रात्रिचरे ॥ वर्णसङ्करजातिविशेषे ॥ यथा । वङ्गकारा द्रटोजातोनटिक्यावरवाङ्का । इ० प० पु० ॥ भटति । भटभृतौ । पचाद्यच् ॥

भटा । स्त्री० इन्द्रवारुण्याम् । राखालशसा० इ० द० भा० ॥

भटित्रम् । न० शूलाकृते । शूल्य । शूलपक्वमांसे । शूला० इ० भा० भटतिभट्यतेवा । भट० । अशित्रा त्रिति० इत्र ॥

भटी । स्त्री० भटयोषिति ॥

भट्ट । पु० मीमांसकविशेषे भाट० इ० भा० प्र० वर्णसङ्करजातिविशेषे ॥ तस्योत्पत्तिर्ब्रह्मवैवर्त्ते यथा । वैश्यायाशूद्रवीर्येण पुमानेकोवभूव ह । सभट्टोवावदूकश्चसर्वेषांस्तुति पाठक ॥ अपिच तत्रैव । क्षत्रि याद्विप्रकन्यायाभट्टोजातोनुवाचक । इति ॥ शिविरान्तिकेराज्ञामस्यावासोदेय । यथा । भट्टवैद्यपुष्पका रस्थापयेच्छिविरान्तिके । इ० ॥

भट्टाचार्य । पु० भट्टाचार्ययोर्मताभिज्ञे ॥ तुतातभट्टमतंमीमांसाशास्त्रम् उदयनाचार्यमतन्यायशास्त्रम्०एत

दुभयमतनिष्णातोभट्टाचार्य ॥

भट्टार । त्रि० पूज्ये ॥ भटति । भट । क्विप् । भट्चासौतारश्च । पृषोदरादि ॥ भट्ट इच्छतिवा । कर्मण्यण् ॥

भट्टारक । पु० नाट्यवाचा० नृपे ॥ नाट्योक्ता० देवे ॥ तथा० तपोधने ॥ त्रि० पूज्ये ॥ भटति । भटपरिभाषणे । क्विप् । भट्चासौतारकश्च । पृषोदरादित्वात्० ष्टुत्वनिषेधेन ॥ भट्टस्वामित्वम्० इच्छतिवा । कर्मण्यण् । तत स्वार्थेक ॥

भट्टारकवार । पु० अदित्यवारे ॥

भट्टि । पु० सनाम्नाप्रसिद्धे रामकथाश्रयेमहाकाव्ये ॥

भट्टिनी । स्त्री० नाट्योक्ताऽकृताभिषेकायाराजयोषायाम् ॥ ब्राह्मण्याम् ॥

भड । पु० वर्णसङ्करजातिविशेषे ॥ सतुलेटात्तीवरकन्यायाजात । यथा । लेटात्तीवरकन्यायाजनयामासषण्नरान् । माल्लं मल्लं मातरञ्च भडकोलञ्चकन्दरम् ॥ इ० ब्र० वै० पु० ॥

भडाग्नि । पु० अग्निविशेषे ॥ भड भडइतिशब्दयुक्तवह्नौ ॥

भडिल । पु० शूरे ॥ सेवके ॥ भडइतिसौत्रोधातु । सलिकल्यनिमहिभडिभ डिश डिपिं डितु डिकु किभूभ्यइलजिति० इलच् ॥

भणित । त्रि० कथिते । शब्दिते ॥

भणिति । स्त्री० वाचि ॥

भण्टाकी । स्त्री० वार्ताक्याम् ॥ भण्यते० भण्यतेवा । भटभृतौ० भणश्चब्देवा । पिनाकादयश्चेतिसाधु ॥ वृहत्याम् ॥

भण्टिका । स्त्री० वृन्ताकि । भण्टा० भण्टा० इ० भा० ॥

भण्टुक । पु० श्योनाकवृक्षे ॥

भण्ड । पु० चाटुवटौ । अश्लीलभाषिणिभाण्ड० इ०भा० ॥ भण्डते । भडिकल्याणे० पचाद्यच् ॥

भण्डक । पु० खञ्जनखगे ॥

भण्डनम् । न० कवचे ॥ युद्धे ॥ खलीकारे ॥

भण्डहासिनी । स्त्री० वेश्यायाम् ॥

भण्डि । स्त्री० वीच्याम् ॥

भण्डिका । स्त्री० मञ्जिष्ठायाम् ॥

भण्डिर । पु० भण्डिले ॥ शिरीषवृक्षे ॥ रलयोरेकत्त्वम ॥

भण्डिल पु० । शिरीषवृक्षे भण्डति । भडिकल्याणे० परिभाषणेवा । सलिकलीति० इलच् । त्रि० दूते । शुभे ॥ शिल्पिनि ॥

भण्डी । स्त्री० मञ्जिष्ठायाम् ॥ भण्डति । भण्डश्चाभण्डनं । पचाद्यच् । गौ० ङीष् ॥ शिरीषवृक्षे ।

भण्डीतकी । स्त्री० मञ्जिष्ठायाम् ॥

भण्डीर । पु० कोविदारे । काश

नारे ॥ तण्डुलीयबीजे ॥ शिरी
षवृचे ॥ भण्डीरेरन्॥
भण्डीरलतिका । स्त्री० मञ्जिष्ठाया
म् ॥
भण्डीरी । स्त्री० मजिष्ठायाम्॥ भण्ड
ति । भण्डआमर्दने । वा० ईरन्
गौ० ॥
भण्डील । पु० मजिष्ठायाम् ॥
भण्डुक । पु० मत्स्यविशेषे । भाकुर०
ङू० गौ० दे० भा० ॥
भण्डूक । पु० श्योनाकवृक्षे ॥
भदन्त । पु० सौगतादिबुद्धे ॥ सुते
जसि ॥ मायादेवीसुते ॥ त्रि० प्रव्र
जिते ॥ पूज्ये ॥ भदते ॥ भद्रिक
ल्याणेसुखेच । भन्देर्नलोपश्चेतिझ
च् ।
भद्राक । पुं० न० मगले ॥ भन्दते।
भदि० । पिनाकादित्वात्मा
धु ॥
भद्रम् । न० कल्याणे ॥ शर्मणि ।
सौख्ये ॥
भद्र । पु० शिवे ॥ खञ्जरीट ॥
वृषभे ॥ कदम्बके । करिजाति
विशेषे ॥ मवशुक्लबलान्तर्गतबल
देवे । रामचरे ॥ खुञ्जाम् ॥ न०
मङ्गले ॥ मुस्ते ॥ काञ्चने ॥ त्रि०
श्रेष्ठे । भन्दनीये ॥ सुखे ॥ सा
धौ ॥ पु० स्त्री० करणान्तरे ।
विष्टिसंज्ञके ॥ मृणाले ० । भन्द

ते । भदि० । स्फर्ज्जेन्द्र तिरन्०
भन्देर्नलोपश्चनिपात्यते ॥
भद्रक । पु० देवदारुणि ॥ सुपार्श्वा
ख्यविष्कम्भशैलमूले० धृतिमन्ना
मकाननम् ० तत्रत्यहृदे ॥ न०
भद्रमुस्तके ॥ त्रि० मनोज्ञे
भद्रकट । पु० गोक्षुरे ॥
भद्रकर्ण । । पु० सिद्धस्थानविशेषे ॥
भद्रास्याह्नद्रकर्णके ॥
भद्रकर्णहृद । पु० तीर्थविशेषे ॥
भद्रकर्णी । स्त्री० गन्धालिकायाम् ॥
॥ गोकर्णाधिवासिन्यादेव्या म् ॥
भद्रकाली । स्त्री० कात्यायन्याम् ।
महिषमर्द्दिन्याम् ॥ औषधीभेदे
। गन्धोल्याम ॥ भद्रं कल्याणं का
लयति वर्द्धयति । कर्मण्यण् भद्रा
चासौकालीचेतिवा ॥
भद्रकाशी । स्त्री० भद्रमुस्तायाम् ॥
भद्रकुम्भ । पु० पूर्णकुम्भे । भद्रस्य
० भद्रोवाकुम्भ
भद्रगन्धिका । स्त्री० मुस्तके ॥
भद्रङ्कर । त्रि० क्षेमङ्करे । शुभङ्क
रे ॥
भद्रचूड । पु० क्षुद्रीभेदे । लङ्का
स्थायिनि ॥
भद्रज । पु० इन्द्रयवे ॥
भद्रतरुणी । स्त्री० कुब्जकवृक्षे ॥
भद्रतुरगम् । न० जम्बूद्वीपस्यनववर्ष
षान्तर्गतवर्षविशेषे ॥ यथा ।

माल्यवज्जलधिमध्यवर्त्तियत् तत्, भद्रतुरग अगुर्वधा ॥ हृ० सिद्धा न्तशिरोमणि ॥

भद्रदन्तिका । स्त्री ० दन्तीवृक्षप्रभेदे । क्षिप्रकण्ठायाम् । जयावहाया म् ॥

भद्रदारु । पु० न० देवदारुणि ॥ न० सरलवृक्षे ॥ भद्रदारु ॥

भद्रदार्वादिक । पु० औषधगण वि० ॥

भद्रनामा । पुं० काष्ठकुट्टखगे ॥

भद्रनामिका । स्त्री० त्रायन्तीवृक्षे । बहला०गौ० दे० भा० प्र० ॥

भद्रनिधि । पु० महादानविशे षे ॥

भद्रपर्णी । स्त्री० सुभगायाम् ॥ भद्र पतिर्यस्या ० इतिविग्रहे०नित्य सपत्न्यादिष्विति पतिशब्दस्यनान्ता देशे० नान्तलक्षणोङीप् ॥

भद्रपदा । स्त्री० प्रोष्ठपदासु । पूर्व भाद्रपदोत्तरभाद्रपदनक्षत्रयो ॥ भद्र पद यासाम् ० ता । अचारो पाकृत्य ॥

भद्रपर्णी । स्त्री० गम्भार्याम् ॥ भद्रा णिपर्णान्यस्या । पाककर्णेतिङी ष् ॥ प्रसारण्याम् ॥

भद्रपीठ । पु० सिंहासने ॥

भद्रबलन । पु० बलरामे ॥

भद्रबला । स्त्री० लताविशेषे । प्रसा रण्याम् । कटम्भरायाम् ॥ भद्र बलमस्या ॥ बलायाम् ॥

भद्रमल्लिका । स्त्री० बेलीतिख्यातपु ष्पे ॥

भद्रमल्ली । स्त्री० अपराजितायाम् ॥

भद्रमुञ्ज । पु० शरे । वृक्षुर्वेष्टने । सरकण्डा० इ० भा० ॥

भद्रमुस्त । पु० भद्रमुस्तके ॥ भद्रभा सीमुस्तकश्च ॥

भद्रमुस्तक । पु० नागरमुस्तके ॥ भद्रभासीमुस्तश्च ॥

भद्रमुस्ता । स्त्री० भद्रमुस्तके । गुन्द्रा याम् ॥

भद्रयवम् । न० कुटजफले । कलि ङ्गे । इन्द्रयवे ॥ यवाकारबीजत्वा द्यवम् । भद्रञ्चतद्यव च ॥

भद्ररेणु । पु० ऐरावतहस्तिनि ॥

भद्रवट । पु० भौमतीर्थविशेषे ॥

भद्रवत् । न० देवदारुणि ॥

भद्रवती । स्त्री भद्रपर्ण्याम् ॥ कट् फले ॥

भद्रवर्मा । पु० नवमालिकायाम् नवाल्याम् । नवारा० इ० भा० ॥

भद्रवल्लिका । स्त्री० गोपवल्ल्याम् । अनन्तमूल० इ० भा० प्र० ॥

भद्रवल्ली । स्त्री० मल्लिकायाम् ॥ माधवीलतायाम् ॥ लताविशेषे । शातभीरौ । अष्टापदिकायाम् ।

मद्नमालो०ड्र० हापरमाली०ड्र० च०गौ०दे०भा० ॥

भद्रश्रयम् न० चन्दने ॥

भद्रश्री । पु० चन्दनवृक्षे ॥ भद्रा श्रीरस्य ॥

भद्रसोमा । स्त्री० गङ्गायाम् ॥

भद्रा । स्त्री० रास्नायाम् ॥ कृष्णायाम् ॥ व्योमनद्याम् ॥ यथा । भद्रा तथोत्तरगिरीन् उत्तरांश्चतथाकुरून् अतीत्योत्तरमम्भोधिमभ्येतिचमहामुने ॥ प्रसारिण्याम् ॥ कट्फले ॥ अनन्तायाम् ॥ तिथिभेदे । द्वितीयासप्तमीद्वादशीषु ॥ जीवन्त्याम् । अपराजितायाम् ॥ नील्याम् ॥ बलायाम ॥ शम्याम् ॥ वचायाम ॥ दन्त्याम् ॥ हरिद्रायाम् ॥ श्वेतदूर्वायाम् ॥ काश्मर्याम् ॥ सारिवाविशेषे ॥ गवि ॥ काकोदुम्बरिकायाम् ॥ बुधशक्तिविशेषे । तारायाम् ॥ छायागर्भजात सूर्यकन्यायाम् ॥ श्रीकृष्णभगिन्याम् ॥ सुभद्रायाम् । दुर्गायाम् ॥ यथा । भद्राश्चाङ्गद्रकर्णीकी०इति ॥ विष्टाम् ॥ यथा । शुक्ले पूर्वार्द्धेऽष्टमी पञ्चदश्योर्भद्रैकादश्याचतुर्थ्याः परार्द्धे । कृष्णेऽन्त्यार्द्धेस्यात्तृतीयादशम्यो , पूर्वेभागेसप्तमीशम्भुतिथ्यो ॥ विशयविषरौद्राणिविष्टिसर्वंचवर्जयेत् । विष्टिशेषिचिदराद्धे

छिपृच्छेकार्यं जयावहम् ॥

भद्राकरणम् । न० मुण्डन

भद्राक्ष । त्रि० शोभननेत्रे ॥

भद्रात्मज । पु० खड्गे ॥

भद्रारक । पु० अष्टादशक्षुद्रद्वीपान्तर्गतद्वीपविशेषे

भद्रालपत्रिका । स्त्री० )

भद्राली । स्त्री० ) गन्धाल्याम् ॥

भद्रावती । स्त्री० कट्फलवृक्षे ॥

भद्राश्वम् । न० भुवोनववर्षान्तर्गतवर्षविशेषे । इलावृतवर्षे ॥ भद्राश्वम्माल्यवत्प्राच्यांवर्षं भद्रजनाकुलम् ॥

भद्रासनम् । न० नृपासने ॥ भद्रञ्चतदासन च ॥ तृतीययोगाङ्गविशेषे तद्यथा । सीवन्या पार्श्वयोर्न्यस्येद्गुल्फयुग्म सुनिश्चलम् । वृषणाध पादपार्श्वौपाणिभ्यापरिबन्धयेत् ॥ भद्रासन समुद्दिष्ट योगिभि सारकल्पितम् ॥

भद्रेश्वर । पु० काल्पग्रामस्थशिवे ॥ शिवप्राप्त्यर्थ दुर्गाराधितहिमालयस्थपार्थिवशिवलिङ्गे ॥

भद्रैला । स्त्री० स्थूलैलायाम् ॥

भद्रोदनी । स्त्री० बलायाम् । बरिआरा०इ० भा० । नागबलायाम् ॥

भन्दम् । न० कल्याणे ॥ सुखाद्य च ॥

भन्दिल । पुं॰ दूते न॰ शुभे ॥ क म्पे ॥

भन्भुक । पु॰ भारतवर्षान्तर्गतदे शविशेषे ॥

भपञ्जर । पु॰ नक्षत्रचक्रे ॥

भपति । सुधांशौ ॥ भानाप ति ॥

भम । पु॰ धूमे ॥

भमरालिका । स्त्री॰ भङ्गार्याम् । द ंशे ॥

भमराली । स्त्री॰ मक्षिकायाम् ॥ दंशे ॥

भम्भासार . । पु॰ मगधराजविशेषे । श्रेणिके ।

भयम् । न॰ घोरे । भयङ्करे ॥ कुब्जक प्रसूने । प्रतिभये । दरे । त्रासे । भीतौ । भिये । साध्वसे । अना गतप्रतिकूलप्रतिसन्धाने ॥ तद्यथा नियथा । रौद्रशक्त्यातुजनित चि त्तवैक्लव्यद भयम् । व्याघ्रादिदर्शना धीनचित्तवृत्तिविशेषे ॥ भयम् ॥ गर्भवासादिदु खरूपम् । रागवि षयञ्चविनाशके समुपस्थितेतन्निवा रणासामर्थ्यमात्मनोमन्यमानकदै न्यात्मकश्चित्तवृत्तिविशेष. ॥ सर्वान् विषयान्परित्यज्यज्ञानमार्गेकथंजी वितव्यमितित्रास ॥ अनिष्टहेतूपनि पाते तत्परित्यागानर्हताज्ञानम् ॥ परत स्त्वानिष्टसम्भाव्नाद्यकम् ॥ भय द्वितीयाभिनिवेशत स्यात् ॥ यथा व्याघ्राद्बिभेति॰व्याघ्राधीनत्वे नस्वीयमरण सम्भावयतीति ॥बिभे त्यस्मात् । ञिभीभये । अज्विधौ भयादीनामुपसङ्ख्यान नपुंसकी क्तादिनिवृत्यर्थम् ॥ बिभेत्यनेनेति विग्रहे॰ एरजितिकरणेऽच ॥ भय द्विविधम् । दैवम्॰मानुषञ्च । यथा इकामकन्दक । हुताशनोजलं व्याधिर्दुर्भिक्ष मरण तथा । इतिप ञ्चविध दैव मानुषव्यसन तत ॥ आयुक्तकेभ्यश्चौरेभ्य : परेभ्योराजव ल्लभात् । पृथिवीपतिलोभाच्चनरा णांप चधाभयमिति ॥ आगतेभये ॰अभीतवत्स्थातव्यम् । यथा । ता वद्भयस्यभेतव्य याभवद्भयमनागतम् । उत्पन्ने तुभयेतीव्रे स्थातव्य तेरभी तवत् ॥ पु॰ रोगे ॥

भयङ्कर . । पुं॰ डुण्डुलपक्षिणि । त्रि॰ भयोत्पादके । भैरवे । दारु णे । भीषणे । भयानके ॥ भयक रोतीति । मेघर्त्तिभयेषु कृञञ्ति खच । मुमागम ॥ पु॰ यात्रायो गान्तरे ॥ यथा । एकर्क्षगौशुक्रजी वौस्यातामन्योन्यसप्तगौ । भयङ्क र ाख्योयोगोय यातुर्भीति प्रदाय क. ॥

भयडिण्डिम । पुं॰ सङ्ग्रामपट हे ॥

भयद्रुत । त्रि॰ कान्दिशीके । भी त्यापलायिते ॥ भदुद्रुवत् । द्रुग तौ । कर्त्तरिक्त । भयाद्द्रुत । पञ्चमीतियोगविभागात्समासः ॥

भयनाशिनी । स्त्री॰ भयनाशकर्त्र्याम् । त्रिद्यायाम् ॥ त्रायमाणालताम् ॥

भयभीत । त्रि॰ त्रासेनातङ्किते ॥ यथा । एकतोभयभीतस्यप्राणिनः प्राणरक्षणम । नातोगुरुतमोधर्म्मः कश्चिदन्योस्तिवर्त्तते ॥ वह्निपुराणे शिविराजोपाख्याने ॥

भयभ्रष्ट । त्रि॰ भयद्रुते ॥

भयानक । पुं॰ व्याघ्रे ॥ राहौ ॥ शृङ्गाराद्यष्टरसान्तर्गतषष्ठरसे ॥ त्रि॰ भयानके । भीषणे ॥ विभेत्यस्मात् । ञिभी॰ आनक॰ भीङ् भियषुक्त्वानकः ॥

भयापह । पुं॰ राजनि ॥ परमेश्वरे ॥ भयं संसारजंमुमुक्षूणामपहन्तीति । हन॰ । अन्येभ्योपिदृश्यतइतिडः । भयमपवद्ध्याहा । आशिषिहनइतिडः ॥ त्रि॰ भयापहारक कर्त्तरि ॥

भयावह । त्रि॰ भयङ्करे ॥

भरः । पुं॰ अतिशये । भरति । भृञ्॰ । पचाद्यच् ॥ भरणं भरः ॰ पुंसीतिघो वा ॥ भरद्रव्यवाचित्वे त्रि॰ पुंस्त्वमेव । वजाजभराः पुंसीतिवचनात् ॥ वन्हे ॥ भं नक्षत्रं राति । रा॰ क॰ ॥ यज्ञे ॥ भारे ॥ धृतेधराभराक्रान्ते शेषे नाराय ण स्वयम् । लक्ष्मीवन्तोनजानन्तिदुःसहांपरवेदनाम् ॥

भरट । पुं॰ कुम्भकारे ॥ भृतके ॥ विभर्त्ति । डुभृञ्॰ अनिर्दिष्टा दिना॰ रटच् ॥

भरणम् । न॰ वेतने ॥ भृतौ । मूल्ये ॥ भ्रियते ऽनेन । भृञ्॰ ल्युट् ॥ पोषणे ॥ यथा । भरणं पोष्यवर्गस्यप्रशस्तंस्वर्गसाधनम् । नरकं पीडनेचास्यतस्माद्यत्नेनतं भरेत् ॥ पुं॰ भरणीनक्षत्रे ॥

भरणी । स्त्री॰ द्वितीयनक्षत्रे । यमदेवते ॥ तत्रजातस्यफलम्॰ यथा । सदापकीर्त्तिर्हिमहापवादोनानाविनोदैश्चविनीतकाल । अत्रेविलासीचपलःखलः स्यात् प्राणिप्रणीतोभरणीषुजातः ॥ प्राणिप्रणीत. प्राणिभिः क्षिप्तः ॥ घोषके ॥ टित्वान्ङीप् ॥

भरणीभू । पुं॰ राहुग्रहे ॥

भरणीय । त्रि॰ पोष्ये । भरणयोग्ये ॥

भरण्डः । पुं॰ स्वामिनि । कृमौ ॥ नृपे ॥ वृषे ॥ भरति । भृञ्॰ । भरन्डन् बाहुलकात् अः । वृष्णाण्डन् ॥

भरण्डा । स्त्री॰ भूमौ ॥

भरण्यम् । न॰ वेतने । मूल्ये ॥ भरणेसाधु । तत्रसाधुरितिय त् ॥

भरण्यभुक् । त्रि॰ वैतनिके । कर्मकरे । मूल्येनकर्म कुर्वति ॥ भरण्य वेतनभुङ्क्ते । क्विप ॥

भरण्या । स्त्री॰ वेतने ॥

भरण्याह्वा । स्त्री॰ रामदूतीतिगौ॰दे॰ख्यातायापूर्व्वपुष्प्याम् ॥

भरण्यु । पु॰ शरण्ये ॥

भरत । पु॰ नाट्यशास्त्रे ॥ अलङ्कारादिशास्त्रस्यसूचकारे॰मुनौ ॥ रामानुजे ॥ शबरे ॥ क्षेत्रे ॥ भरतात्मजे ॥ देवर्षिविशेषे ॥ तन्तुवाये ॥ नटे ॥ भरतस्यमुने शिष्य । तस्येदमित्यण् । संज्ञापूर्वकत्त्वान्नवृद्धि ॥ यद्वा । विभर्तिस्वाङ्ग । डुभृञ॰ । भृमृदृशीत्यतच् ॥ चन्द्रवंशीयनृपविशेषस्यदुष्यन्तस्यपुत्रे । शाकुन्तलेये । दौष्यन्तौ । सर्वदमने ॥ निरुक्तिरस्यश्रीभागवते । माताभस्त्रापितुःपुत्रोयेनजातासएवसः । भरस्वपुत्रंदुष्यन्तमावमस्थाः शकुन्तलाम् ॥ इति ॥ ऋषभदेवादिन्द्रदत्तजयन्त्याकन्यायामुत्पन्नशतपुत्रान्तर्गतज्येष्ठपुत्रे ॥ यथा ॥ अथाहभगवानृषभदेवःस्ववर्षंकर्मक्षेत्रमनुमन्यमानःप्रदर्शितगुरुकुलवासोलब्धवरैर्गुरुभिरनुज्ञातोगृहमेधिनाधर्माननुशिक्षमाणोजयन्त्यामिन्द्रदत्तायामुभयविधकर्मसमाम्नायमभियुञ्जन्नात्मजानामात्मसमानानांशतं जनयामास । येषांखलुमहायोगीभरतोज्येष्ठःश्रेष्ठगुणआसीत्॰येनेदंवर्षंभारतमितिव्यपदिशन्तीति ॥ पावकस्यपुत्रे ॥

भरतखण्डम् । न॰ भारतवर्षान्तर्गतकुमारिकाखण्डे ॥

भरतज्ञ । त्रि॰ नाट्यशास्त्रज्ञे ॥

भरतपुङ्गव । पु॰ गाङ्गेये । भीष्मे

भरतपुत्रक । पुं॰ शैलूषे । नटे ॥

भरतप्रसू । स्त्री॰ कैकय्याम् ॥

भरताग्रज । पु॰ श्रीरामचन्द्रे ॥

भरथ । पु॰ लोकपाले ॥ बिभर्त्ति । डुभृञ॰ । भृञश्चिदित्यथ ॥

भरद्वाज । पु॰ मुनिविशेषे ॥ व्याघ्राटे । भारुइ॰गौ॰दे॰भा॰प्र॰पक्षिणि । भर्दुल॰इ॰भा॰ ॥ गुरोःपुत्रे । उतथ्यपत्न्याम्ममतायांवृहस्पतेर्वीर्य्याज्जातेमुनिविशेषे ॥ अस्य नामनिर्वचनं यथाविष्णुपुराणे । मूढेभरद्वाजमिमं॰भरद्वाजंवृहस्पते । यातौयदुक्त्वापितरौभरद्वाजस्ततस्त्वयम् ॥ इति ॥ भरन्धारकोवाजोऽस्य ॥ यद्वा । भरद्वाजस्यापत्यम् । ऋष्यण् । संज्ञापूर्वकत्त्वाद्वृद्ध्यभाव ॥

भरवान् । पु॰ शिवे ॥ भरश्चन्द्रोस्त्य

स्य । मतुप् ॥ भरसहिष्णौ ॥

भरिणी । स्त्री० हरिद्वर्णे । इरा०डू० भा० ॥

भरित । पु० हरिद्वर्णे ॥ त्रि०तद्वति ॥ भृते ॥ पुष्टे ॥ परिपूर्णे । भरा० डू०भा० ॥ भर सञ्जातोऽस्य । ता० इतच् ॥

भरिता । स्त्री० हरितायाम् ॥

भरिमा । पु० भरणे ॥ कुटुम्बे ॥ भरति०विभर्त्ति वा । भृञ्०डुभृञ्० वा । हृभृधृसृस्तृशृभ्य इमनिच ॥

भरु । पुं० स्वर्णे । समुद्रे ॥ हरे । शिवे ॥ भर्त्तरि । स्वामिनि । भरति०बिभर्त्ति वा । भृञ्०डुभृञ् वा । भृमृशीतृचरित्सरितनिधनिमिमसजिभ्य उः ॥

भरुज । पु० क्षुद्रशृगाले ॥

भरुटम् । न० निष्क्वाथपक्वमांसे ॥

भरुटकम् । न० भृष्टामिषे ॥

भर्ग । पु० स्मरहरे । शिवे ॥ भर्जते । भृजीभर्जने । प० घञ् । न्यङ्क्वादित्वात्कुत्वम् ॥ भृज्यन्ते कामादयोऽनेनेति वा । हलश्चेति घञ् ॥ भृज्यते० पच्यते जगदनेनेति वा ॥ सवितृमण्डलगतादित्यरूपे पुरुषे ॥ चिन्तयामो वयं भर्ग धियो यो नः प्रचोदयात् । धर्मार्थकाममोक्षेषु बुद्धिवृत्तीः पुनः पुनः ॥ अपिच । भसज

पाकेभवेद्धातुर्यस्मात्पाचयते ह्यसौ । भ्राजते दीप्यते यस्माज्जगच्चान्ते हरत्यपि ॥ कालाग्निरूपमास्थाय सप्तार्चिः सप्तरश्मिभिः । भ्राजते यत्स्वरूपेण तस्माद्भर्ग स उच्यते ॥ भेति भीषयते लोकान् रेति रञ्जयते प्रजाः । गत्यागच्छत्यजस्रं यो भगवान् भर्ग उच्यते ॥ इति योगियाज्ञवल्क्यः ॥

भर्ग । न० तेजसि ॥ भर्जते । भृजीभर्जने । अञ्च्यञ्जियुजिभृजिभ्यः कुश्च इत्यसुन्० कवर्गश्चान्तादेशः । भर्गसी० इत्यादि ॥ स्वरूपभूते तेजसि ॥

भर्ग्य । पुं० शिवे ॥ भर्जते । भृजी० । ऋहलोर्ण्यत् । चजोरिति कुत्वम् ॥

भर्जनम् । न० भृष्टौ । भृजना० डू० भा० ॥

भर्ज्जित । त्रि० दग्धे ॥ भृजी० । क्त ॥

भर्तव्य । त्रि० भरणीये । पोषणीये ॥ वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः । अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥

भर्त्ता । पुं० स्वामिनि । नाथे । पत्यौ । परिवृढे । भेतरि ॥ विष्णौ ॥ प्रपञ्चस्याधिष्ठानत्वेन भरणात् ॥ बिभर्त्ति स्वाध्यस्तं सर्वमधिष्ठाम

तयाधारयति सत्तास्फूर्त्तिप्रदाने नपोषयतिवेति विभर्त्तेर्धारणपो षणार्थात्तृच् ॥ त्रि० धातरि । धारके ॥ सुखसाधनप्रदातरि ॥ देहेन्द्रियमनोबुद्धीनांसङ्घातानां चैतन्याभासविशिष्टानां स्वसत्तया स्फुरणेन धारयितरि ॥ बिभर्त्ति भरतिवा । डुभृञ्० भृञ्० वा । तृच् ॥

भर्तृदारक । पु० नाट्योक्त्यायुव राजे । द्रियते । दृङ् आदरे० तुदादि । ण्वुल् । भर्तूराज्ञो दारक ॥

भर्तृदारिका । स्त्री० नाट्योक्तौराज कन्यायाम् ॥ भर्तूराज्ञोदारि का ॥

भर्तृप्रपञ्च . । पु० औपनिषद्मन्ये वेदान्तानांव्याख्यातृविशेषे ॥

भर्तृस्थानम् न० तीर्थविशेषे ॥ यत्रकार्त्तिकेयस्तिष्ठति ॥

भर्तृहरि । पु० व्याकरणकारिका कर्त्तरिकविविशेषे ॥ स्वनामप्र सिद्धेकाव्यकर्त्तरिराजविशेषे ॥ सचविक्रमादित्यराजभ्राता ॥

भर्त्सनम् । न० अपकारगिरि । चौ रोसित्वघातयिष्यामित्वामित्याद्य पकारार्थवचने ॥ भर्त्सतर्जसन्तर्ज ने । ल्युट् ॥

भर्त्सपत्रिका । स्त्री० महानीलया

म् ॥

भल्मित । त्रि० अधिचिप्ते ॥

भर्म्मम् । न० ॥ स्वर्णे ॥ भृतौ ॥ नाभौ ॥

भर्म्मकम् । न० रोगविशेषे ॥ विड ङ्गे ॥ कलधौते । सुवर्णे ॥

भर्म्मण्या । स्त्री० गणिकाशुल्के ॥

भर्म्म । न० भारे ॥ काञ्चने ॥ भृतौ । भरणे । पोषणे । कुमारभृत्या कुशलैरधिष्ठितेभिषगिभिराप्तैरथ गर्भभर्मणीति रघु ' । अत्रगर्भेहेम प्रभृतिषुद्धतिमल्लिनाथधृत शाश्वत ॥ नाभौ ॥ धुस्तूरे ॥ बिभर्त्ति० भरतिवा । भ्रियतेऽनेनवा । डुभृ ञ्०भृञ्० । मनिन् ॥

भलता । स्त्री० प्रसारण्यामोषधौ । राजबलायाम् ॥

भलन्दन । पु० कान्यकुब्जदेशीय नृपविशेषे ॥

भलूक ' । पुं० भालुके ॥ भलते । भलभल्लपरिभाषणहिंसादानेषु ॥ उलूकादयश्चेतिसाधु ॥

भल्ल । पु० भल्लूके । अर्थे ॥ पु० न० शस्त्रप्रभेदे । भाला० इ०भा० ॥ वाणविशेषे ॥ स्नुहीदलफलो भल्लइतियादव : ॥ भल्लते । भल्ल० । पचाद्यच् ॥ न० भद्रे । शिवे ॥ इ० त्रि० शि ० ॥

भल्लक ' । पुं० भल्लूके ॥ स छाया

कन् ॥
भल्लपुच्छी । स्त्री० गवेधुकायाम् ॥
भल्लाट । पुं० न० शशिध्वजराजपुरे
भल्लात :। पुं० भल्लातके ॥
भल्लातकः । पुं० अग्निमुख्याम् । अ
रुष्करे । शोथकृति । अभावा०
द्र० भा० ॥ भल्लातकफलंपक्वं स्वा-
दुपाकरसंलघु। कषायपाचनंस्निग्ध
तीक्ष्णोष्णं छेदिभेदिनम् ।मेध्यं वह्नि
करंहन्तिकफवातव्रणोदरम्॥ कुष्ठा
र्शोग्रहणीगुल्मशोफानाहज्वरक्रिमी
न् ॥ तन्मज्जामधुरोवृष्योबृंहणोवा
तपित्तहा । वृन्तमारुष्करंस्वादुपित्त
घ्नं केश्यमग्निकृत् ॥ भल्लातकं .
कषायोष्णं . शुक्रलोमधुरोलघुः ।
वातश्लेष्मोदरानाहकुष्ठार्शोग्रहणीग
दान् ॥ हन्तिगुल्मज्वरश्वित्रवह्निमा
न्द्यक्रिमिव्रणान् ॥ भल्लइवातति
अत० । क्वुन् ॥
भल्लातकी । स्त्री० वीरवृक्षे । अग्निमु-
ख्याम् । भल्लातके ॥ गौरादित्वा-
न्ङीष् ॥
भल्लिका । स्त्री० ) भल्ला
भल्ली । स्त्री० )तके ॥
भल्लुः । पुं० भल्लूके ॥ भलते । भल०
बाहुलकादुः ॥
भल्लूकः । पुं० दुर्गन्धे । कपौ । रीछ
भालू० इ० भा० सन्नायांकन् ॥
भल्लूकः । पुं० कपौ । भल्लूके ॥ भल्ल

ति । भल्ल० । उलूकादित्वात्साधुः ।
॥ श्योनाकप्रभेदे ॥ कुक्कुरे ॥
भवः । पुं० ईशे । शिवे । शङ्करे ।
हरे ॥ क्षेमे । श्रेयसि ॥ सम्भूतौ ॥
यज्ञावतारोभूतानांक्षेमायचभवा-
यच ॥ संसारे ॥ अपामार्गलतेवाय
विरुद्धफलदोभवः । प्रत्यग्दृश्यावि
मोक्षायसंसारायपराग्दृशाम् ॥ स
त्तायाम् ॥ प्राप्तौ । भद्रप्राप्तौ ॥ उत्पत्तौ
। जन्मनि ॥ जन्मादेकादशे ॥ भव-
ति० भवतीवासर्वम् । भूप्राप्तौ ।
भवाद्यच् । अन्तर्भावितण्यर्थोवा ॥
जन्मनितु०भावे०ऋदोरप् ।। न०
फलविशेषे । भव्ये । चालता० इ०
गौ० दे० भा० त्रि० क्षेमान्विते ॥
भवघस्मर । पुं० दावानले ॥
भवच्छिद् । त्रि० संसारनिवर्तके ॥ भ
वच्छिनत्ति । छिदिर्० । सत्सूद्विषे
त्यादिना० क्विप् ॥
भवान् । त्रि० युष्मदर्थे ॥ भाति । भादी
प्तौ भातेर्डवतुः ॥ लिंगत्रयेरूपन्तु
। भवान्० भवती०भवदिति॥ पूज्ये
॥ सति । विद्यमाने ॥ भवतीलंटः
शत्रादेशे । भवन्० भवन्तीभवत्०
इतित्रिलिंगेरूपंबोध्यम् ॥ जायमा
ने ॥
भवती । स्त्री० विभाषावाचि ॥ पूज्या
याम् ॥ दीप्तिमत्याम् ॥ उगितश्चेति
ङीप् ॥

भवदारु । न० देवदारुवृक्षे ॥

भवदीय . । त्रि० भावत्के ॥ भवताम यम् । भवतष्ठक्छसाविति०छस् ॥

भवनम् । न० अगारे । मन्दिरे । गृहे । भावे ॥ भवन्त्यत्र । भू० । ल्युट् ॥ राशौ ॥ क्षेत्रे ॥

भवनाशन । पुं० आत्मगोबोधे ॥

भवनाशिनी । स्त्री० सरयूसरिति ॥

भवनीय । त्रि० भवितव्ये ॥ उत्पत्त्यर्हे ॥

भवन्त । पुं० कालसामान्ये ॥ वर्तमानकाले ॥ भवति०भूयाद्वा ॥ भू० तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्चेति०झच्० सच्चित् ॥

भवन्ति । पु० वर्तमानकाले ॥ भवति । भू० । भुवोझिच् ॥

भवन्ती । स्त्री० पूर्वाचार्याणालट संज्ञायाम् ॥ यथा । अस्तिर्भवन्तीपरोऽप्रयुज्यमानोप्यस्तीत्यादिभाष्यम् ॥ शित्वान्ङीप् ॥

भवभावन । त्रि० संसारकारणे ॥ भवः संसारस्तस्यभावनयेन ॥ उत्पत्तिकर्त्रे ॥

भवभूति : । पुं० भोजराजस्यसभास्थे कविविशेषे । मालतीमाधवादिनाटककर्तरि । भूगर्भे ॥ महादेवस्यैश्वर्ये ॥

भववत् । पुं० प्रेतपटहे ॥

भवायनाशिनी । स्त्री० गङ्गायाम् ॥

भवात्मजा । स्त्री० मनसादेव्याम् ॥

भवादृक्ष । त्रि० भवादृशे ॥ भवानिवपश्यति०भवन्तमिववा । दृशिर्प्रेक्षणे । त्यदादिष्वित्यत्र० क्सोपि वाच्यइति०क्स. ० । आसर्वनाम्नइत्यत्र०दृग्दृशवतुषुपसंख्यानम्... रोन्तादेश ॥

भवादृक् । त्रि० भवादृशे ॥ भवानिवपश्यति०भवन्तमिववा । दृशिर्० । त्यदादिष्वितिक्विन् । आसर्वनाम्न ॥

भवादृश । त्रि० युष्मत्सदृशे । भवद्विधे ॥ भवानिवपश्यति०भवन्तमिववा । दृशिर्०त्यदादिषुदृशोनालोचनेकञ्चेति०कञ् । आसर्वनाम्न इत्याकारोन्तादेश ॥

भवानी । स्त्री० पार्वत्याम् । दुर्गायाम् ॥ भवस्यस्त्री । इन्द्रवरुणभवशर्वेत्यादिना०ङीषानुकौ ॥ परदेवतायाम् ॥ एकैवशक्तिः परमेश्वरस्यभिन्नाचतुर्धाव्यवहारकाले । भोगेभवानीपुरुषेषुविष्णुः कोपेषुकालीसमरेषुदुर्गा ॥ चट्टलपीठवासिन्यामम्बायाम् ॥

भवानीगुरु : । पु० हिमालये ॥

भवानीपति । पु० महादेवे ॥

भवापवर्ग । पु० मोक्षे ॥ भवस्यअपवर्गः नाशः ॥

भवाभीष्ट । पु० गुग्गुलौ ॥

भवाब्धि । पुं॰ संसाररूपसमुद्रे ॥ भवाब्धितरणोपाय . कुशलमार्गोपदि- नापर ॥

भवायना । स्त्री॰ गङ्गायाम् ॥

भविकम् । न॰ भव्ये । कुशले ॥ भवो- भद्रमस्यास्ति । अतइनिठनाविति ठन् ॥ त्रि॰तद्वति ॥

भवित . । त्रि॰ अतीतोत्पत्तिके । भूते॥

भवितव्यम् । त्रि॰ भवनीये ॥ भवितव्य मृभवत्येवमारिविलफलाम्नुयत् । ग न्तव्यं गतमित्यादुर्गअभुतकपित्यव- त् ॥

भवितव्यता । स्त्री॰ नियतौ । भाग्ये । अर्थानामवर्षानामावश्य भावित्वे । कालभार्यायाम् ॥

भविता । त्रि॰ भविष्णौ ॥ भवनशील. भू॰ । तृन्निति तृन् ॥

भविल : । त्रि॰ काव्यकर्त्तरि ॥

भविल : । पुं॰ भव्ये ॥ भवति । भू॰ । सलिकल्यनीत्यादिना॰इलच् ॥ पि ङ्गौ । विदूषके ॥

भविष्णु । त्रि॰ भवितरि । भूष्णौ ॥ भवनशील : । भुवश्चेति॰भवतेरि- ष्णुच् ॥

भविष्यम् । न॰ पञ्चशताधिकचतुर्द्दश सहस्रश्लोकात्मकेपुराणविशेषे ॥ यथा । चतुर्द्दश भविष्यं स्यात्तथा पञ्चशतानिचेतिश्रीभागवतम् ॥ अपिच । चतुर्द्दशसहस्राणितथा पञ्चशतानिच । भविष्यं परिसंख्या तं मुनिभिस्तत्वदर्शिभिरितिदेवी भागवतम् ॥ त्रि॰ भविष्यत्का ले ॥

भविष्यत् । त्रि॰ आगामिकाले । वर्त्त मानप्रागभाव प्रतियोगिनिकाले- ।। वर्त्तमानकालोत्तरकालीनोत्प त्तिकस्ये । अनागते । आस न्ने ॥

भव्य । पुं॰ कर्मरंगतरौ ।। न॰ अ स्थ्नि ॥ फलविशेषे चालता॰ इ॰ गौ॰ दे॰ प्र॰ । वर्मेरकृयशोधनी ॥ भव्यंस्वादुकषायाम्लं कृयमास्य विशोधनम् । तदेवपक्वं दोषघ्नंगुरु वातविनाशनम् ॥ पुं॰ न॰ रस भेदे ॥ त्रि॰ शुभे ॥ सत्ये ॥ योग्ये ॥ भाविनि ॥ अभिव्यमाणे ।। भवति॰ भाव्यमनेनवा । भव्य गेयप्रवचनीयोपस्थानीयजन्याप्ला व्यापात्यावेति • कर्त्तरि॰ भावे वायतासाधु . ॥

भव्या । स्त्री॰ उमायाम् । करिकया याम् ॥

भष · । पुं॰ कुक्कुरे ॥ भषति । भष॰ । अच् ।।

भषक : । पुं॰ कुक्कुरे । शुनि ॥ भषति । भषणेशुनः । क्वुन् ।।

भषणम् । न॰ कुक्करे । श्वरवे ॥

भष॰ल्युट् ॥
भषा । स्त्री॰ स्वर्णचौर्याम् ॥
भषी । स्त्री॰ शुन्याम् ॥ भषतिपात्र्य म् । भषभर्त्सने । पचाद्दौ • भष डितिपाठात् • टिड्ढे तिङी प् ॥
भसद् । स्त्री॰ भास्वरे ॥ योनौ ॥ जघने ॥ काले ॥ मासे ॥ कारण्ड वखगे ॥ प्लवे । भेलके । बभस्ति । भसभर्त्सनदीप्त्योः । शृदृ भसोदि ॥
भसन । पुं॰ भ्रमरे ॥
भसन्त । पु॰ काले ॥
भसितम् । न॰ भस्मनि ॥
भसूचक । पु॰ दैवज्ञे ॥
भस्त्रका । स्त्री॰ चर्म्मप्रसेविका याम् ॥
भस्त्रफला । स्त्री॰ ओषधिविशेषे ॥ भस्त्रेवफलान्यस्याः । पाककर्णेति प्राप्तं ङीष बाधित्वा॰सम्भस्त्राजिने तिटाप् । ङ्यापोरितिह्रस्व ॥
भस्त्रा । स्त्री॰ अग्निदीपकचर्मनिर्मि तयन्त्रविशेषे । चर्मप्रसेविकाया म् ॥ जलादिनीयते येनलोहादि ध्मायते तथा । चर्मणोविकृति । साचभस्त्राशास्त्रेप्रकीर्त्तिता ॥ भस्यतेऽनया । भसदीप्तौ । हुयामा श्रुभसिभ्यस्त्रन् । तितुत्रे तिनेट् । । अजादित्वाट्टाप् ॥
भस्त्राका । स्त्री॰ भस्त्रिकायाम् । भस्त्रा या ॥
भस्त्रिक । त्रि॰ भस्त्रयाजलादहरत्यक र्त्तरि । भिस्ती॰हि॰भा॰ ॥ भस्त्रया हरति । भस्त्रादिभ्य ष्ठन् ॥ स्त्री॰- भस्त्रिकी । षित्त्वान्ङीष् ॥
भस्मक । पुं॰ रोगविशेषे ॥ तस्य निदानसम्प्राप्तिपूर्वकं लक्षणं । य था । कट्वादिरूक्षान्नभुजानराणांक्षी णेकफेमारुतपित्तवृद्धौ । अतिप्रवृद्ध पवनान्वितोऽग्निर्भुक्तं क्षणाद्भस्म करोतियस्मात् ॥ तस्मादसौभस्मक स ञ्ज्ञकोऽभूदुपेक्षितोऽयं पचते च धा तून् ॥ अस्यसोपद्रवमरिष्टंयथा । तृट्स्वेददाहमूर्च्छादीन्कृत्वेवात्य ग्निसम्भवान् । पक्वान्नमाशुधात्वा दीन्सद्यश्च नाशयेद्ध्रुवम् ॥ इ॰
भस्मकार । पुं॰ रजके ॥
भस्मगन्धा । स्त्री॰ रेणुकायाम् । हरे- णौ ॥
भस्मगन्धिका । स्त्री॰ हरेण्वाख्योषधौ । रेणुकायाम् ॥ भस्मनोगन्ध । भस्म गन्धोस्त्यस्याः । अतइनि । ठनावि- तिठन् । टाप् ॥
भस्मगन्धिनी । स्त्री॰ रेणुकायाम् । ह रेण्वाख्योषधौ ॥ गन्धद्रव्यमेतदिति स्वामी ॥ भस्मगन्धोस्त्यस्याः । अत इनिठनावितीनिः । ङीप् ॥
भस्मगर्भ । पुं॰ तिनिशद्रुमे ॥

भस्मगर्भा । स्त्री॰ कपिलवर्णपुष्पायां शिंशपायाम् ॥ रेणुकानामगन्धद्रव्ये । ओषधिभेदे ॥ भस्मगर्भेयस्याः शुक्लसारत्वात् ॥

भस्मतूलम् । न॰ ग्रामकूटे ॥ पांशुवर्षे ॥ हिमे ॥

भस्म । न॰ काष्ठादेरग्निकृतेविकारे । शिवाङ्गभूषणे । भूतौ । भसिते । विभूतौ ॥ बभस्ति । भसभर्त्सनदीप्त्योः । सर्वधातुभ्योमनिन् ॥ विनाभस्मत्रिपुण्ड्रेणविनारुद्राक्षमालया । पूजितोपिमहादेवोनस्यात्तस्यफलप्रदः ॥ भस्मरोगविकारे ॥

भस्मरोहा । स्त्री॰ दग्धारुहावृक्षे ॥

भस्मवेधक । पुं॰ कर्पूरे ।

भस्मसात् अ॰ भस्मीभावे ॥ कृत्स्नं भस्मसम्पद्यते । विभाषासातिकात्स्नर्ये इतिसातिः प्रत्ययः ॥

भस्मस्नानम् । न॰ सप्तविधस्नानान्तर्गताग्नेयस्नाने ॥ यथा । आग्नेयभस्मनास्नानवायव्यं गोरजः स्मृतम्

भस्माह्वयः । पुं॰ कर्पूरे ॥

भसित । त्रि॰ दग्धे ॥

भा । स्त्री॰ भासि । प्रभायाम् । छवौ । दीप्तौ । रोचिषि ॥ ज्ञाने । चैतन्यरूपे ॥ यथा । अभाद्रूपस्वविश्वस्य भानंभासन्निधेर्विना । कदाचिन्नाव कल्पेतभाचाद्वैतेमसर्वगः ॥ भाति भादीप्तौ । इगुपधज्ञाप्रीकिरः कः । टाप् ॥

भाकुट । पुं॰ भेकटौ॰ इ॰ मी॰ दे॰ भा॰ प्र॰ मत्स्ये ॥

भाकूट । पुं॰ शैलप्रभेदे ॥ मत्स्यविशेषे । भेकटी॰ इ॰ भा॰ ॥ भाकूटोमधुरः शीतोष्णः स्निग्धकरोगुरुः । विष्टम्भजनकश्चापिरक्तपित्तहरः स्मृतः ॥

भाकोष । पुं॰ सूर्ये ॥

भाक्त । त्रि॰ औपचारिके । गौणे । लाक्षणिके ॥ भक्तसम्बन्धिनि ॥ अन्नेनपोष्ये । भाक्तिके ॥ भक्तमस्मै नियुक्तं दीयते । भक्तादणन्यतरस्यामित्यण् ॥ न॰ शालिधान्ये ॥ भक्तेसाधु । भक्ताणः इतिण ॥

भाक्तिक । त्रि॰ अन्नेनपोष्ये । भाक्ते ॥ भक्तमस्मै नियुक्तं दीयते । भक्तादणन्यतरस्यामितिपक्षेठक् ॥

भागः । पुं॰ अंशे । वण्टके । स्त्रीलिङ्गसमासांशे ॥ रूप्यार्द्धके भाग्ये ॥ एकदेशे ॥ भज्यते । भजसेवायाम् । कर्मणिघञ् ॥ भागानाम्नेत्रवर्षादिवर्षांसमूहोवा । अण् ॥ राशित्रिंशभागेकभागे ॥ त्रिंशांशकस्तथाराशेर्भागइत्यभिधीयतेइत्युक्तेः ॥

भागत्यागः । पुं॰ जहदजहल्लक्षणायाम् । विरुद्धांशपरित्यागे ॥

भागत्यागलक्षणा । स्त्री॰ जहदजहल्लक्षणायाम् । अंशान्तरपरित्यागेना-

शान्तरलक्षणायाम् ॥

भागधेय । पु० करे । राजस्वे । ग्रामादेराजग्राह्ये षष्ठभागादौ ॥ दायादे ॥ भागएव । भागरूपनामभ्यो धेयइतिस्वार्थे० धेयप्रत्यय ।। न० भाग्ये । प्राक्तनेकर्म्मणि । दैवे ॥

भागलक्षणा । स्त्री० भागत्यागलक्षणायाम् ॥

भागलेख्यम् । न० भागपत्रे ॥ भागायलेख्यम् ॥

भागवत । पु० भगवद्भक्ते ॥ यथा । सर्वदेवान्परित्यज्यनित्यं भगवदाश्रय । एतत्तदीयसेवायांसभागवतउच्यते ॥ शङ्खोयस्यग्टहे नास्तिघण्टावागरुडान्विता । पुरुतो वासुदेवस्यनसभागवत कलौ ॥ उत्तमभागवतस्तु । सर्वभूतेषुय पश्येद्भगवद्भावमात्मन । भूतानि भगवत्यात्मन्येषभागवतोत्तम ॥ नयस्यस्वपरवृत्तिर्वित्ते ष्वात्मनिवाभिदा । सर्वभूतसम शान्त सवैभागवतोत्तम । गृहीत्वापीन्द्रियैरर्थान्योनद्वेष्टिनहृष्यति । विष्णोर्मायामिद पश्यन्सवैभागवतोत्तम ॥ शिवेचपरमेशाने विष्णौचपरमात्मनि । समबुद्ध्या प्रवर्त्तन्ते तेवैभागवतोत्तमा ॥ भगवतोयम् । अण् ॥

भागवतम् । न० अष्टादशपुराणान्तर्गतेअष्टादशसहस्रश्लोकात्मकेउपपुराणविशेषे ॥ महापुराणविशेषे ॥ तत्राष्टादशाध्यायोत्तरत्रिशताध्यायात्मक देवीभागवत नाममहापुराण द्वात्रिंशदध्यायाधिकत्रिशताध्यायात्मक विष्णुभागवतमितिविवेक ॥ अष्टादशसहस्रं वै पुण्य भागवत किलेतिदेवीभागवतम् ॥ आत्मतत्त्वदीपकेज्ञाने ॥ भगवताप्रोक्तम् । तेनप्रोक्तमित्यण् ॥ भगवत्यामायोपाधिकब्रह्मरूपिण्या प्रातिपदिक० सर्वं खल्विदमेवाहं नान्य दस्तिसनातनमित्यर्धश्लोकात्मकसूत्रभूतमेवसर्ववेदसार सर्वं खल्विद ब्रह्मनेहनानास्तिकिञ्चनेतिसर्ववेदतात्पर्यार्थप्रतिपादकवाक्यार्थाभिलापकपुराणमन्त्ररूप भगवत्यावटपत्रशयानायविष्णवे प्रकटीकृत यत्तत् । भगवत्याप्रोक्तम । तेन प्रोक्तमित्यण् ॥

भागिकम् । त्रि० भाग्ये । सवृद्धिकमुद्रादौ ॥ भागोरूपकस्यार्द्धवृद्धिरूपम्० शुल्कम्० उपदावास्मिन्दीयते । भागिकशतम्० भागिकाविंशति । भागाद्यश्चेतिठन् ॥

भागी । त्रि० अंशिनि ॥ स्वामिनि ॥ सम्पृचेत्यादिना ० भजोघिनुण् ॥

भागिनेय : । पुं० भगिनीपुत्रे । स्वस्रीये ॥ भगिन्या : अपत्यम् । स्त्रीभ्योढक् ॥

भागिनेयी । स्त्री० भगिन्यास्त्व्यपत्ये । भानजी० इ० भा० ॥ टिड्ढेति ङीप् ॥

भागीरथी । स्त्री० गङ्गायाम् ॥ भगीरथस्येयम् । तस्येदमित्यण् । ङीप् ॥

भागुरि : । पुं० स्मृतिव्याकरणकर्त्तरि मुनिविशेषे । माघ मण्डन प्रसिद्ध मुनी ॥ कविविशेषे । यत लुम्पन्ति० इति जटाधर : ॥

भाग्यम् । न० प्राक्तनशुभाशुभकर्म्मणो : । नियती । दैवे । दिष्टे । फलोन्मुखी भूतपूर्वदेहिकशुभाशुभकर्म्मणि । अज्ञानामविवेकाना मशूराणामपिप्रभो । भागभोग्या निराज्यानिसन्त्यनीतिमतामपि ॥ भज्यतेऽनेन०भजतेवा । भज सेवायाम् । ऋहलोर्ण्यत् । चजो रितिकुत्वम् ॥ त्रि० भागिके ॥ भागोवृध्यादिरस्मिन्दीयते । भाग्य शतम्० भाग्याविंशति : । भागाच्चेति०यत् ॥ भागार्हे ॥ भागमर्हति । दण्डादित्वाद्यत् ॥

भाग्ययोग : । पुं० ज्योतिषोक्ते । पञ्चमे तीरवि पष्ठे ..................

। भाग्ययोगाभिधे योगेनिरन्नार्व रि याऽसदा ॥

भाग्यवान् । त्रि० भाग्ययुक्ते ॥ भाग्यवतांसर्व श्रेयसिभवति ॥

भाग्याख्या । स्त्री० तुष्टिविशेषे ॥ यथा । यातुनप्रकृतेर्न कालान्नाप्युपादानाद्विवेकख्यातिरपितुभाग्यादेव०अतएवमदालसाऽपत्यानिमति बालानिमातुरुपदेशमात्रादेवविवेकख्यातिमन्तिमुक्तानिबभूवु : ० तस्माद्भाग्यमेवहेतुर्नान्यदितिय्यदुपदेशे तुष्टि : साभाग्याख्यातुष्टिरुच्यते ॥

भाङ्गीनम् । त्रि० भङ्गायै । भङ्गाक्षेत्रे ॥ भङ्गायाभवनम्क्षेत्रम् । विभाषातिलमाषोमाभङ्गाणुभ्यइतिपक्षेखञ् ॥

भाजक । पुं० शिव्ये ॥

भाजनम् । न० पात्रमात्रे ॥ योग्ये ॥ य : सवादयतेनित्य योऽतिवार्त्तास्तितिष्ठति । यश्चसमोगतप्रतिष्ठ सोऽयंसभाजनम् ॥ आढकपरिमाणे इतिवैद्यकपरिभाषा ॥ भाजयति । भाजपृथक्कर्म्मणिल्युट् ॥

भाजित : । त्रि०पृथक्कृते । विभक्ते । न०भागि ॥

भाणी । स्त्री० शाखायाम् । पताकायाम् ॥ आन्नपदेतिङीप् ॥

भाज्य । चि० भागार्हे । भाजनीये ॥

भाटक । पु० न० व्यवहारार्थ दत्त गृहशकटादिलभ्यधने । भाड़ा० द० भा० ॥

भाट्ट । पु० आत्मनश्चिद‍्चिद्रूपत्ववादिनिभट्टाचार्यमतानुसारिणिमीमांसके ॥ गूढं चैतन्यमुत्प्रेक्ष्य द्रव्यबोधस्वरूपताम् । आत्मनोऽनुवर्तिभाट्टाश्चिदुत्प्रेक्षोत्थितस्मृते . ॥ जडोभूत्वातदाऽस्वाप्समितिजाड्यस्मृतिस्तदा । विनाजाड्यानुभूतिनकथं चिदुपपद्यते ॥ द्रष्टुर्दृष्टेरलोपश्चश्रुत सुप्तोत्ततस्त्वयम् । अप्रकाशप्रकाशाभ्यामात्माखद्योतवद्युत . ॥

भाण । पु० नाटकादिदशरूपकान्तर्गतरूपकविशेषे ॥

भाण्ड . । पु० गर्दभाण्डवृक्षे ॥

भाण्डम् । न० पात्रे । घटकादिभाजनमात्रे ॥ पण्यद्रव्ये । वणिङ्मूलधने ॥ भूषायाम् । भूषणे ॥ अश्वभूषायाम् । तुरङ्गाणांमण्डने ॥ नदीकूलद्वयमध्ये ॥ भण्यते । भणशब्दे । अमन्ताड्ड . । ॥ भणतिवा । ड ' । प्रज्ञाद्यण् ॥ यद्वाभन्दते । भदिकल्याणे सुखेच । अच् । पृषोदरादिः ॥ भण्डवती । भंडीवा० द० भा० ॥

भाण्डपुट । पु० नापिते ॥ भाण्डेपुटाः यस्यस ' ॥

भाण्डपुष्प । पुं० सर्पविशेषे । कौक्रुटिकन्दले ॥

भाण्डागारम् । न० गृहविशेषे । अन्नादिद्रव्याणांगृहे ॥ भाण्डानामागारम् ॥ धनागारे ॥

भाण्डागारिक ॥ त्रि० भाण्डागारेनियुक्ते । भण्डारी० द० भा० ॥ अगारान्ताट्ठन् ॥

भाण्डागारी । त्रि० भाण्डारिणि । भाण्डागारवति ॥ भाण्डागारमस्यास्ति । इनि ' ॥

भांडारी । पु० भाडागाराध्यक्षे । स्वनामैवप्रसिद्धे ॥ यथा क्षुधितस्तृषितः कामीविद्यार्थी कृषिकारक । भाडारीचप्रवासीचसप्तसुप्तान्प्रबोधयेत् ॥

भाण्डि । पुं० नापितक्षुराद्याधारे ॥

भाण्डिल ' । पुं० ) नापिते ॥

भाण्डिवाह : । पुं० )

भाण्डीर । पु० वटवृक्षे ॥ व्रजमण्डलान्तरेषोडशवटवनमध्ये द्वितीयवटवने ॥

भातम् । न० प्रभाते ॥ भा० । क्त ॥ दीप्ती ॥ त्रि० तद्वति ॥

भाति । स्त्री० शोभायां ॥

भातु ' । पु० आदित्ये । सूर्ये ॥ भाति । भादीप्तौ । कमिगमीतितु ॥

भाद्र : । पुं० नभस्ये । प्रोष्ठपदे । भा

द्रपदेमासि ॥ भाद्रीपौर्णमास्यस्मि
न् । साऽस्मिन् पौर्णमासीत्यथ ॥
अत्रजातस्यफलम् । नभस्यमासिखलु
जन्मयस्यधीरोमनोज्ञस्ववराङ्गनाना
म् । रिपुप्रमाथीकुटिलोऽतिमर्मप्र
पन्नभर्त्तासभवेत्सहास ॥ अत्रगी
प्रसवेनारद : । भानौसिंहगते चै
वयस्यगौ सम्प्रसूयते । मरणात
स्यनिर्दिष्ट षड्भिर्मासैर्नसंशय ॥
प्रसूतातत्र्यथादेवतांतांगांविप्राय
दापयेत् । पश्चाच्छान्ति प्रकुर्वीत तथा
न्तिशास्त्रोक्तवर्त्मनेति ॥
भाद्रपद । पुं० वर्षर्तुद्वितीयमासि
। भाद्रे ॥ भद्रपदाभिर्युक्तापौर्णमा
स्यस्मिन् । साऽस्मिन् पौर्णमासीत्य-
ण् ॥
भाद्रपदा । स्त्री० प्रोष्ठपदासु । भद्रप
दासु । पूर्वभाद्रपदानक्षत्रे० उत्तर
भाद्रपदानक्षत्रेच ॥ भद्रमेव० ॥ भा
द्रम् । भाद्र पदयासां०ता ॥
भाद्रमातुर । पुं० सतीतनये ॥ भद्र
मातुरपत्यम् । मातुरुत्संख्यास
म्भद्रपूर्वाया ॥
भानम् । न० आभासे ॥ प्रतीतौ ॥
प्रकाशे । साक्षात्कारे ॥ नहिभाना
दृतेसत्त्वं नर्तेभानंचितोऽचित : ।
चित्सत्त्वं दीपिका ध्यासादृतेतेनाद्व
यम् ॥ भाति । भा० । ल्युट् ॥
भानु । पुं० किरणे । मयूखे । अं-
शौ । करे ॥ रवौ । सूर्ये । अर्के ।
सहस्रांशौ ॥ दिने भाति । भा०
। दाभाभ्यानु ॥ यद्वा । भाति०
चतुर्दशभुवनमध्ये अन्यादित्यप्र
काशेभ्य अधिकदीप्यतेवा । पूर्व
वत् ॥ अर्कवृक्षे ॥ प्रभौ ॥ राजनि
॥ वृत्तार्हत्पितृविशेषे ॥
भानु । स्त्री० भानुमत्याम् ॥
भानुफला । स्त्री० रम्भायाम् । कद
ल्याम् । भानुरिवफलान्यस्या ।
अजादि ॥
भानुमान् । पुं० सूर्ये ॥ भानवोविद्य
न्तेऽस्य । मतुप् ॥ त्रि० दीधिति
युक्ते । सकिरणे ॥
भानुमती । स्त्री० विक्रमादित्यनृपस्य
पत्न्याम् ॥ यथा । देवगुरो प्रसादे
नजिह्वाग्रेमेसरस्वती । तेनाहंनृपजा
नामिभानुमत्यास्तिलयथेतिवररुचि
भामिनि : । पुं० गभस्तिहस्ते । सूर्ये ॥
भाभ । त्रि० मद्यपकान्तौ ॥ भस्याभे
वाभायस्ययस्य ॥
भाम : । पुं० क्रोधे ॥ रवौ ॥ दीप्तौ
रुचौ ॥ पूज्ये ॥ भगिनीपतौ ॥
यथा । अहोभगिन्यहोभाममया
वाक्तपापमना । पुत्रशाद्बापस्य
सुहृदोहिंसिता सुता ॥भाति । भा०
अतिस्तुसुकुलधुषितुभायावापदिय
चिनीव्योमम्नितिमन् ॥ भामते ।
भामक्रोधे । अच्वा

भामक । पु॰ भगिनीपतौ ॥ स्वार्थे क ॥

भामा । स्त्री॰ कोपनायांयोषिति ॥ सत्यभामायाम् । विनापिप्रत्यय मितिपूर्वपदलोप ॥

भामी । त्रि॰ क्रोधिनि ॥

भामिनी । स्त्री॰ कोपनायाम ॥ अव श्य भामते । भाम॰ । आवश्यके णिनि । ग्रह्यादिणिनिर्वा ॥ स्त्री मार्षे ॥

भामिनीविलास । पु॰ जगन्नाथमि श्रपण्डितराजकृते विलासचयात्मके ग्रन्थविशेषे ॥

भार । पुं॰ वीवधे । विष्णौ । विंश तितुलापरिमाणे । पलानांद्विसहस्रे । अष्टसहस्रतोलकात्मके ॥ द्विशूपा गोयुग्दाह्नता ॥ तामेवभारजानी यादृवाहोभारचतुष्टयम् ॥ भियते । भृञ् भरणे । अकर्त्तरि चकारकेसं ज्ञायामितिघञ् ॥

भारंड : । पुं॰ उत्तरकुरुदेशजशकुन पक्षिणि ॥

भारत । पुं॰ छागवाहने । वह्नौ ॥ नटे ॥ भरतस्यमुने शिष्य । अण् ॥ भरतात्मजे । भरतवंशोद्भवे ॥ महाकुलप्रसूते ॥ भरतस्यराज्ञोय म । तस्येदमित्यण् ॥ सङ्ग्रामवि शेषे ॥ भरतायोद्धारोऽस्मिसङ्ग्राम स्य । सङ्ग्रामेप्रयोजनयोद्धृभ्यइत्य

ण् ॥ त्रि॰ ज्ञानमिरते ॥ आज्ञा नम् ॰ तत्ररत . ॥

भारतम् । न॰ व्यासप्रणीतलक्षश्लोका त्मकमहाभारतसञ्ज्ञके॰ इतिहासे ॥ तस्यश्रवणादिफलयथा । भारत श्रृणुयान्नित्य भारत परिकीर्त्तयेत् । भारत भवने यस्यतस्य हस्तगतोज य ॥ योगोशत कनकशृङ्गमय द दातिविप्रायवेदविदुषेचवहुश्रुताय । पुण्याञ्चभारतकथाश्रृणुयाच्चनि त्य तुल्य फल भवतितस्यचतस्यचै व ॥ नवनीत यथादधनोद्विपदाब्रा ह्मणोयथा । हृदानामुदधि श्रेष्ठो गौर्वरिष्ठश्चतुष्पदाम । यथैतानी तिहासानातथाभारतमुच्यते ॥ य श्चैन श्रावयेच्छ्राद्धे ब्राह्मणान्पादम ततः । अक्षय्यमन्नपान वै पितृ स्त स्योपतिष्ठते ॥ इतिहासपुराणा भ्यांवेद समुपबृंहयेत् । बिभेत्य ल्पश्रुताद्वेदोमामयंप्रहरिष्यति ॥ कार्ष्णं वेदमिम विद्वान्श्रावयित्वा र्थमश्नुते । भ्रूणहत्याकृतञ्चापिपा प जह्यादस शयम् ॥ इति ॥ जम्बु द्वीपनवमांशेवर्षविशेषे ॥

भारतवर्ष । पु॰ न॰ जम्बुद्वीपस्य नववर्षान्तर्गतवर्षविशेषे । यथा । हिमाह्व दक्षिण वर्ष भरतायददौ पिता । तस्माच्चभारत वर्ष तस्यना म्नामहात्मन . ॥ तस्यनवभागाय्था

भारतस्यास्यवर्षस्यनवभेदान्निबोध
मे । समुद्रांतरिताज्ञे यास्तेत्वगम्या
परस्परम् ॥ इन्द्रद्वीप कसेरुश्च ता
म्रवर्णोगभस्तिमान् । नागद्वीपस्तथा
सौम्योगान्धर्वोवारुणस्तथ ॥ अयन्तु
नवमस्तेषांद्वीप . सागरसंवृत .
। योजनानांसहस्रं वै द्वीपोय दक्षि
णोत्तरात् ॥ पूर्वे किरातायस्यान्ते
पश्चिमेयवना.स्मृता । ब्राह्मणा
क्षत्रियावैश्या . शूद्राश्चान्त : स्थि
ताद्विज ॥ इज्यायुद्धवणिज्याद्यै '
कर्मभिः भवत्पावना ' । तेषां
स व्यवहारश्चएभि कर्मभिरिष्यते
॥ स्वर्गापवर्गप्राप्तिश्चपुण्यं पाप च-
वै तथा । महेन्द्रोमलय सह्य
शुक्तिमानृक्षपर्वत : ॥ विन्ध्यश्च-
पारियात्रश्चसप्तैवात्रकुलाचला .
तेषांसहस्रशश्चान्ये भूधरायेसमीप
गा ' ॥ विस्तारोच्छ्रायवैरम्याविपु
लाश्चिरसानव . । कोलाहल : स
वैभ्राजोमन्दरोदर्दुराचल : ॥ वा
तन्धमोवैद्युतश्चमैनाक ' सुरसस्त
था । तुङ्गप्रस्थोनामगिरिर्गोधन .
पांडुराचल . ॥ पुष्पश्चैवजयन्तो
रैवतोर्बुदएवच । ऋष्यमूक
सगोमन्त : कूटशैल . कृत . स्मर
॥ श्रीपर्वतश्चकोरश्चशतशोन्येऽप
पर्वता ' । तैर्विमिश्राजनपदाम्ले
च्छाद्याश्चैवभागश ' । तै : पीय



न्तेसरिच्छ्रेष्ठायास्ता सम्यङ्निबो
धमे । गङ्गासरस्वतीसिन्धुश्चन्द्रभा
गातथापगा । यमुनाचशतद्रुश्चवि
तस्तैरावतीकुहू । गोमतीधूतपा
पाचबाहुदाचदृषद्वती ॥ विपाशा
देविकाचचक्षुर्निष्ठीवागण्डकीतथा
। कौशिकीचापराविप्रहिमवत्पाद
नि ' सृता ॥ वेदस्मृतिर्वेदसि
नीरावित्रघ्नीसिन्धुरेवच । वेणाच
चन्दनाचैवसदानीरामहीतथा ॥
पाराचर्मण्वतीलूपीविदिशावेत्रव-
त्यपि । शिप्राह्यवन्तीचतथापारिया
त्राश्रया : स्मृता ' ॥ शोणोमहान
दश्चैवनर्मदासुरसाक्रिया । मन्दा
किनीदशार्णाचचित्रकूटातथापगा ॥
चित्रोत्पलाचतमसाकरतोयापिशा
चिका । तथान्यापिप्पलश्रोणीवि-
पाशावञ्जुलानदी ॥ सरिच्छुक्ति
मतीमञ्जुकीविदिशाक्रतु : । ऋक्ष-
पादप्रसूतावैतथान्यावेगवाहिनी ॥
शिप्रापयोष्णीर्निर्विन्ध्यातापीचनि
षधावती । वेणावैतरणीचैवसिनी
वालीकुमुद्वती ॥ तोयाचैवमहागौ
रीदुर्गाचान्त शिवातथा । विन्-
ध्यपादप्रसूतास्तानद्य . पुण्यजला-
शुभा : ॥ गोदावरीभीमरथीकृष्णा-
वर्णातथापगा । तुङ्गभद्रासुप्रयोगा-
बाह्याकावेरयापगा ॥ सह्यपादवि
निष्क्रान्तास्त्वमास्ता ' सरिदुत्तमा' ॥

कृतमालाताम्रपर्णी पुष्पजात्युत्पलावती। मलयाद्रिसमुद्भूतानद्य: शीतजलास्त्विमा॥ पितृसोमर्षि कुल्याचइक्षुलात्रिदिवालया। लाङ्गूलिनीवंशकरामहेन्द्रप्रभवा स्मृता॥ ऋषिकाचकुमारीचमन्दगा मन्दवासिनी। कृपापलाशिनीचैवशुक्तिमत्प्रभवा स्मृता॥ सर्वा पुण्या सरस्वत्य सर्वागङ्गासमुद्रगा। विश्वस्यमातर सर्वा सर्वा. पापहरा स्मृता॥ अन्या सहस्रशस्त्रोक्ता. क्षुद्रनद्यो-द्विजोत्तम। प्रावृट्कालवहा सन्तिसर्वकालवहाश्चया.॥ मत्स्या कुशूला, कुल्याश्चकुन्तला काशिकोशला ॥ अर्बुदाश्चकुलिङ्गाश्चसमकाश्चवृकै सह। मध्यदेशेजनपदा: प्रायशोमीप्रकीर्त्तिता.॥ सह्यस्योत्तरेवैयत्रगोदावरीनदी। पृथिव्यामपिकृत्स्नाया सप्रदेशोमनोरम.॥ गोवर्द्धनपुरं रम्य भार्गवस्यमहात्मन.॥ वाह्लीकावाटधानाश्चआभीरा कालतोयका॥ अपरान्ताश्चशूद्राश्चपह्लवाश्चर्मखण्डिका। गान्धारायवनाश्चैवसिन्धुसौवीरमद्रका.॥ शतद्रुदालकित्या अपारदाश्चारमूषिका। माठरारभ्रतका: कैकयादशमानिका॥ क्षत्रियोपनिवेशाश्चवैश्यशूद्रकुलानि

भारतवर्ष

च। काम्बोजादरदाश्चैवबर्वराङ्ग-लौकिका॥ चीनाश्चैवतुषारा-अपह्लवावाह्यतोदरा। आत्रेया सभरद्वाजा' प्रस्थलाश्चदशेरका॥ लम्पका, सूनकाराश्चचूलिकाजा-ङ्गलै सह। अपगाश्चालिमद्राश्च-किराताचाद्यजातय:॥ तामसाह समार्गाश्चकाश्मीरासङ्गनास्तथा। चूलिकाहूडकाश्चैवजर्णादावस्तिशैवच॥ एतेदेशाह्युदीच्यास्तु० प्राच्यान्देशान्निबोधमे। अन्ध्रवाका मुद्गरकाअन्तर्गिरिवहिर्गिरा॥ तथाप्रवङ्गावङ्गेयामलदामलवर्त्तिका ब्रह्मोत्तरा प्रविजया भार्गवाङ्गेय मर्दका। प्राग्ज्योतिषाश्चमद्राश्चविदेहास्तामलिप्तका। मल्वा-मगधगोमेदा प्राच्याजनपदा स्मृता॥ अथापरेजनपदादक्षिणा पथवासिन। पाण्ड्याश्चकेरलाश्चैवचोला' कुल्यास्तथैवच॥ सेतुका मूषिकाश्चैवकुमारावानवासिका। महाराष्ट्रामाहिषिका कलिङ्गाश्चैवसर्वश॥ आभीरा' सहचैषीकाआटव्याशवराश्चये। पुलिन्दाविन्ध्यमौलेया वैदर्भादण्डकै. सह॥ पौरिकामौलिकाश्चैव अश्मकाभोगवर्द्धना:। तैलिका, कुन्तलाश्चन्ध्राउद्भिदानालकारका॥ दाक्षिणात्यास्त्विमेदेशा० अपरा

नृतानृनिशीधमै । सौपारिका का
लनदादुशास्तालीयकै सह ॥ का
रस्करलौहजङ्घावामैयाराजभद्र-
का । तोसला कोशलाश्चैवचैपु
राविदिशास्तथा ॥ तुषारास्तुम्बरा
श्चैवपाटवोनैषधै सह । पुलिन्दा-
श्चसुधीकाश्चरूपमांस्तामसै सह ।
तथाकुरुमिनश्चैवसर्वेश्चैवकारस्कराः।
नासिकाख्याश्चयेचान्ये येचैवान्तर-
नर्मदा ॥ भानुकच्छा समाहेया
सर्वसारस्वतैः सह । काच्छीयाश्च-
सुराष्ट्राश्चआवन्त्याश्चार्बुदैः सह ॥
इत्येतेह्यपरान्ताश्च शृणुविन्ध्यनिवा
सिन । मलजाश्चकरूषाश्चमेकला-
श्चोत्कलैः सह । उत्तमर्णादशार्णा
श्चभोजा किष्किन्धकैः सह ।
अनूपास्तुण्डिकेराश्चवीरहोत्रास्त्ववन्त्
य ॥ एतेजनपदाः सर्वे विन्ध्य
पृष्ठनिवासिनः ॥ अतोदेशान्प्रव
क्ष्यामिपर्वताश्रयिणश्चये ॥ निहारा
हंसमार्गाश्चकुपथास्तङ्गणाः खशाः
। कुत्साः प्रावर्णाश्चैवऊर्णादर्वा
सहूहुकाः ॥ त्रिगर्तामालवाभि
वकिरातास्तामसै सह । कृतत्रे
तादिकश्चात्रचतुर्युगकृतोविधिः ॥
एततुभारतवर्षंचतु संस्थानसंस्थि
तम् । दक्षिणापरतोह्यस्यपूर्वेणचम
होदधिः ॥ हिमवानुत्तरेणास्यका
र्मुकस्ययथागुणः । तदेतद्भारतं

वर्षंसर्वबीजद्विजोत्तम ॥ देवत्वमम
रेशत्व देवत्व मर्त्यतांतया । मृगपश्व
प्यचरायोनीस्तद्वत्सरीसृपा ॥ स्था
वराश्चास्यसर्वेषामतोब्रह्मन्शुभाशु
भै । प्रयान्तिकर्मभूर्ब्रह्मन्नान्य
लोकेषुविद्यते । देवानामपिविप्रर्षे
सदैवैषमनोरथ ॥ अपिमानुषमा
प्स्यामोदेवत्वात्प्रच्युताः क्षितौ ।
मनुष्याः कुर्वतेतत्तुयन्नशक्य सुरा
सुरै ॥ स्वकर्मनिगडग्रस्तैः स्वकर्म
क्षपणोन्मुखै । नकिञ्चित्क्रियते
कर्मसुखलेशोपबृंहितै ॥ इतिश्री
मार्कण्डेयपुराणे भारतखण्डवर्णन
नामाध्याय ॥

भारति । पु० दशनामसन्न्यासिनां
मध्येसन्न्यासिविशेषे ॥ यथा । ना
नाशास्त्रेषुयोविप्रोनानाकर्मविशा
रद । सदेष्टदेवीभाविनभावयेद्यो
हिचावलाम् । सएवभारतिर्वीरोम
हाज्ञानीजितेन्द्रिय इति ॥

भारती । स्त्री० वचने ॥ सरस्वत्याम् ।
अर्थपरिज्ञानफलाद्विभारती गरुडा
धिनिपक्षिविशेषे । भार० टू० गौ०
दे० भा० प्र० ॥ ब्राह्मणीओषधौ ॥
नाट्यवृत्तिप्रभेदे ॥ शृङ्गारेकौशिकी
वीरेसात्वत्यारभटीपुन. । रसेरौद्रे
चबीभत्सेवृत्तिः सर्वत्रभारती ॥
भारतीवृत्तिस्तुसंस्कृताप्रायोवाग्व्या
पारोनराश्रय. ॥ बिभर्ति । डुभृञ्

भमृद्दिशिषजीत्वतच् । तत प्रज्ञा द्यषि॰ ङीप् ॥

भारद्वाज . । पु॰ बृहस्पते पुत्रे ॥ व्याघ्राटाख्यविहङ्गमे द्रोणाचार्य्ये॥ ऋषिविशेषे ॥ मङ्गलग्रहे ॥ भारद्वाजस्यगोत्रापत्यम् । विदाद्यञ् ॥ अगस्त्यमुनौ ॥

भारद्वाजी । स्त्री॰ वनकार्पास्याम्॥ भरद्वाजऌमुनेरियम् । तेननिर्म्मितत्वात् । तस्येदमित्यण् । ङीप्॥

भारभूति । पु॰ पुण्यस्थानविशेषे ॥ भारभूतीभवेद्भूतिरितिभागवतम् ॥

भारय । पु॰ भरद्वाजपक्षिणि ॥

भारयष्टि स्त्री॰ उभयतोवद्धशिक्यस्कन्धवाह्यकाष्ठे । विहङ्गिकायाम् ॥ भारस्ययष्टि ॥

भारवम् । न॰ ज्यायाम् । गुणे ॥

भारवाह । त्रि॰ भारिके॥ भारवहति । वह॰ । कर्मण्यण् ॥

भारवाहक । त्रि॰ भारवहनकर्त्तरि ॥ भारम्वहति । वह॰ । ण्वुल् ॥ भारस्यवाहकोवा ॥

भारवाहण । त्रि॰ उष्ट्रादौभारवाहके ॥ वहेर्ण्यन्तात्कर्त्तरिल्युट् । भारस्यान्नादेर्वाहन । वाहनमाहितादित्वात्परम् ॥

भारवाही । पु॰ धुर्य्ये ॥

भारवाही । स्त्री॰ नील्याम् ॥

भारवि . । पुं॰ किरातार्जुनीयकाव्यकर्त्तरिकविविशेषे । शतान्स्ये दूलिचिकागुल्मभेदे ।

भारवृक्ष । पु॰ काक्षीनामकगन्धद्रव्ये ॥

भारशृङ्ग । पु॰ कृष्णनामकहरिणजातौ । वारसिंगा॰ इ॰ भा॰ ॥

भारहर । पु॰ भारिके ॥ हरति । हृ अच् । अच् । भारस्यहर ॥

भारहार । पु॰ भारिके ॥ भार हरति । हृञ्॰ । कर्म्मण्यण् ॥

भाराक्रान्त । त्रि॰ भारवाहे ॥ भारेणाक्रान्त ॥

भाराक्रान्ता । स्त्री॰ अत्यष्टिवृत्तिप्रभेदे ॥ भाराक्रान्तामभनरसलागुरुश्रुतिषड्हयै ॥ यथा । भाराक्रान्तामतनुरिय गिरीन्द्रविधारणात्॰कम्प धत्तेश्रमजलकणतथापरिस्रुवति । दृष्ट्वावृत्तवनजयतिजलदस्तनाकुलवल्लवीस श्रोत्य स्मरविलसित विलोक्यगुरु हरि ॥

भारिक . । पु॰ भारवाहे ॥ भारोस्तिवाह्यत्त्वेनास्य । अतइनिठनाविति ठन् ॥

भारि । पुं॰ सिंहे ॥

भारिट . । पु॰ पक्षिविशेषे । श्यामचटके । शैशिरे । कणभक्षके ॥

भारी । पु॰ भारवाहके ॥ त्रि॰ भारपीडिते ॥ भारयुक्ते ॥ भारोऽस्त्यस्य॰ अस्मिन्वा । इनि ॥

॥ शाकविशेषे ॥ रोहितमत्स्ये ॥ महालक्षणसम्पन्नपुरुषे ॥ कच्छपे ॥ हरे ॥

भालुक । पु० ऋक्षे । अच्छभल्ले । भल्लूके ॥ भलति । भलहिंसायाम् । बाहुलकादुः । स स्वार्थेकन् । प्रत्ययश्च ॥

भालूक । पु० भाल्लुके ॥ भलते । भलपरिभाषणादौ । उलूकादित्वात् साधु । प्रत्ययश्च ॥

भाल्लवेय । पु० इन्द्रद्युम्ननामनि ऋष्यन्तरे ॥ भल्लवेरपत्यम् भाल्लवि । तस्यापत्यम् । शुभ्रादेराकृतिगणत्वात् ० ढक् ॥

भाल्लुक । पु० भल्लूके ॥)

भाल्लूक । पु० )

भाव । पु० सत्तायाम् । सत्त्वे ॥ परमार्थसत्तारूपे ॥ स्वभावे ॥ मानसधर्मे ॥ उपासनोपायसाधके ॥ यथोक्तं श्रीमहानिर्वाणतन्त्रे । पशुवीरदिव्यभावदेवतामन्त्रसिद्धिदा इति । तथापि । पशुभाव कलौ नास्तिदिव्यभावोपिदुर्लभ । वीरसाधनकर्माणिप्रत्यक्षाणिकलौयुगे इति ॥ अपिच । अथ भावत्रयं देविदिव्यवीरपशुक्रमात् । दिव्यस्तु देववत्प्रायोवीरश्चोद्धतमानसः ॥ सत्यत्रेताद्वापर्यन्तं दिव्यभावविनिर्णय । चैताद्वापरपर्यन्त वीरभावश्चोरितम् ॥ मद्य मत्स्य तथा मांस मुद्रामैथुनमेवच । श्मशान साधन भद्रे चितासाधनमेवच ॥ एतत्ते कथित सर्वं दिव्यवीरमत प्रिये । दिव्यवीरमत नास्तिकलिकाले सुलोचन इतिकालीविलासतन्त्रम् ॥ अभिप्राये ॥ आत्मनि ॥ चेष्टायाम् ॥ प्रकृतिजन्यबोधविषयप्रकारे ॥ क्रियायाम् ॥ लीलायाम् ॥ पदार्थे ॥ विभूतौ ॥ नाट्योक्त्या विदुषि । बुधे ॥ जन्तौ ॥ मानसविकारे० रत्यादौ ॥ योनौ ॥ उपदेशे ॥ शृङ्गारादिकारणे ॥ शब्दप्रवृत्तिहेतौ ॥ गौरविते ॥ अभिनयान्तरे ॥ धात्वर्थे ॥ संसारे ॥ भवने । भावनायाम् । चिन्तने ॥ सद्भावे ॥ परमार्थतत्त्वाग्रहरूपे प्रेम्णि ॥ भक्तौ । अनुरागे ॥ तत्तादात्म्ये ॥ भू० विभाषाग्रहश्रुलवञ्च० भवतेश्चेति० काशिकावचनाद्वा ॥ भावयतिकरोतिरसान् । भावयति० परिभावयतिवा । पचाद्यच् ॥ भवन वा । श्रिणीभुवोनुपसर्गे इत्यण् वा ॥ भावाबुद्धिगुणाधर्मज्ञानवैराग्यभूतय । सात्त्विकाव्यत्यये नैते रागमुख्यतामसा ॥ धर्मज्ञानवैराग्यैश्वर्याख्या बुद्धिगुणा ० भाव सञ्ज्ञया निर्दिष्टा । एतेचसात्त्विकावीद्रव्या । व्यत्यये

न० रागमुत्सृज्य नगम्यविवर्जिता भाव्यता । अधमाद्यानस्ववर्त्मरूपा ० धर्मागम्यनखगाम्नुभावो गाजमदूत्यर्थ । धमादिभिरन्वितानुजिसर्टन्वित सूक्ष्मशरीरमित्युक्ताम् । भावयन्तिय तालिङ्गं तेनभावाद्यतिस्मृता ॥ सचसात्त्विकादिभेदात्त्रिविध । तत्र० सात्त्विक शमदमादिरूप राजसोहर्षदर्पादिरूप ० शोकमो हादिरूपस्तुतामस । बाह्याध्यात्मि कभेदाद्द्विविधश्चयथासाध्यसाधनत याश्रितोबाह्य । सुखंदु खज्ञानरागद्वे षमाकारआध्यात्मिक ॥ विभाव स्थायिसंज्ञश्च सानुभावोथसात्त्वि का । व्यभिचारीतिपञ्चैतेभावभे दा प्रकीर्त्तिता अष्टमस्वरे ॥ वसुधीरास्तथागागेधान्यश्चबलव त्तरम् । आयनृतेसर्वशस्यानिभावि- वर्षेवरानने ॥ ८ नवयक्षार्थाययथा दिहादयश्चेष्टासु तन्वादितवादश्चसु॥ स्त्रीणांयौवनकालेस्वभावजाष्टाविंश त्यलङ्कारन्तर्गतोगजप्रथमालङ्कारे ॥ यथा। यौवनेसत्त्वजास्तासामष्टावि शतिसङ्ख्यका ॥ अलङ्कारा स्तत्रभावहावहेलास्त्रयोङ्गजा । तत्र भावोयथा । निर्विकारात्मके चि त्ते भावप्रथमविक्रिया । अन्यत प्र भृतिनिर्विकारेमनसि० उद्बुद्धमा त्रोविकारोभाव: । यथा । सपदसुर

भिकाल सएवमलयानिल: । सैवे यमबलाकिन्तुमनोन्यदिवदृश्यतद्- ति ॥ प्रतिकणपरिणामिन सर्वभा वाइतिचिक्षणा : ॥

भावक । पुं० भावे । मानसविकारे ॥ त्रि० सत्ताश्रये ॥

भावकरणम् । न० अभिप्रायसूचने ॥ तत्रभावश्च । त्रि० अभिप्रायज्ञे ।

भावत । त्रि० भवदीये । भावत्के ॥ भवतोऽयम् । भवतष्ठक्छसावित्यत्र वृद्धादित्यनुवृत्ते ष्टक्न्यादृद्धेव ॥

भावत्क । त्रि० भवदीये ॥ भवतामय म् भवतष्ठक्छसाविति ० ठक् । इसुसुक्तान्तात्क ॥

भावन । पुं० परमेश्वरे ॥ सर्वेषांभो क्तृणांफलानिभावयतिउत्पादयती तिव्याख्यानात्भज्ञवियुक्तात्ल्यु ट् ॥ न० कल्पने ॥ भावनायाम् ॥ भावनन्तुनमाध्यानेपर्यालोचेऽधिवा सने ॥ भव्ये । चौफल वृ० गौ० दे० भा० प्र० फलविशेषे ॥

भावना स्त्री० ध्याने ॥ पर्यालोचे ॥ अधिवासने ॥ कल्पनायाम् ॥ सं स्कारे ॥ भवनानामभवितुर्भवनानु कूलोभावयितुर्व्यापारविशेष: सा द्विधा । शब्दभावना० । अर्थभावना चेति ॥ भाव्यस्यविपरीतपरिहारे चर्चे तत्सिपुमपुनर्निश्चयने । निदि ध्यासनात्मिकायांविजातीयप्रत्यया

न्तरितसजातीयप्रत्ययप्रवाहरूपायाम् ॥ भावनातिङ्प्रत्ययवाच्येति मीमांसकाः ॥ उत्पादनायाम् ॥ ० उत्पत्त्यर्थाद्भवतेर्ण्यन्तात् ० युच् । त्रिविधाभावनायथा । त्रिविधाभावनाविप्रविश्वमे तन्निबोधमे । ब्राह्मख्याकर्मसंज्ञाच तथाचैवोभयात्मिका ॥ ब्रह्मभावात्मिकाह्येका कर्मभावात्मिकापरा । उभयात्मिकातथैवान्या त्रिविधाभावभावना ॥ सनन्दनादयोब्रह्मभावभावनयायुता । कर्मभावनयाचान्ये देवाद्या स्थावराश्चराः ॥ हिरण्यगर्भादिषु चब्रह्मकर्मात्मिकाद्विधा । बोधाधिकारयुक्तेषुविद्यतेभावभावना ॥ इति विष्णुपुराणे ६ अंशे ७ अध्याय ॥ त्रिविधभावनाश्रयजीवात्मकत्वात्तदुपचारेणत्रिविधाभावनेत्युच्यते। एतद्विष्णोरे स्थूलरूपम । अत परंरूपप्राप्त्युपायत्वात् ० तत्प्रथममनस्थार्यमितिभावः । भावनानाम ज्ञानविशेषजावासना । तात्रिविधामपिसत्तामाद्दिशति० ब्रह्मेत्यंति । तामेवविषयत्रैविध्येनविविनक्ति० ब्रह्मभावनात्मिकेति ॥ । भावभावना० भावोवस्तु० तद्विषयाभावनात्रिविधा । तत्रवयंब्रह्मैवभावयाम । । वयकर्मैवकुर्म । । वयमुभयमिदमनुसन्दध्मइत्येवत्रिविधाभावना ।

भावनायुक्तान्जीवानुदाहरति० सनन्दनादयइतिद्वाभ्याम् । इतितट्टीका ॥

भावबोधक । पु० अनुभावे ॥ भावस्यरत्यादेर्बोधकः सूचकोगुणक्रियादिरनुभाव । अनुभाव्यतेप्रतीतियोग्यतानीयतेरत्यादिरनेनेति० अनुभाव । घञ् ॥ तत्ररतेरनुभावा लोचनचातुर्यभ्रूक्षेपादय । हासस्यच कपोलाकुंचना ० नासोत्फुल्लनादयोऽनुभावा ०एवमन्यत्रानुमन्तव्यम् ।

भावरूपम् । न० दृश्ये ॥

भाववृत्त । पु० ब्रह्मणि । भाव सृष्टि ० तत्रवृत्त प्रवृत्त ॥

भाववृत्ति । स्त्री० घटाद्याकारवृत्तौ ।

भावशुद्धि । स्त्री० अन्त करणशुद्धौ ॥ कलिकल्मषयुक्तानासर्वदास्थिरचेतसाम् । निद्रालस्य प्रसक्ताना- भावशुद्धि कथ भवेत्इतिमहानिर्वाणत च ॥

भावसंशुद्धि । स्त्री० हृदयस्य कामक्रोधलोभादिमलनिवृत्तौ पुनरशुद्ध्युत्पादराहित्ये नसाम्यत्वेनविशिष्टायाम् ॥ परै सह व्यवहारकाले मायाराहित्ये ॥

भावसरोरुहम् । न० हृदयकमले ॥

भावाट । पु० भावके ॥ साधुनिवेशे ॥ कामुके ॥ नटे ॥

भावानुगा । स्त्री० छायायाम् ॥

भाषा

रौस्त्रेत्यप्रत्यय । टाप् । अस्त्रीया
ष्टादशभाषायथा । संस्कृता१ प्राकृता
२ उदीची ३ महाराष्ट्री ४ मागधी
५ मिश्रार्द्धमागधी ६ शकाभीरी ७
अवन्ती ८ द्राविडी ९ ओड्रीया १०
पाश्चात्या ११ प्राच्या १२ वाह्लिका
१३ रन्तिका १४ दाक्षिणात्या १५
पैशाची १६ आवन्ती १७ शौरसे
नी १८ । एतासांलक्षणोदाहरणा
निप्राकृतलङ्केश्वरव्याकरणे द्रष्टव्या
नि ॥ अथभाषाविभाग । पुरुषा
णामनीचानांसंस्कृतं स्यात्कृता
त्मनाम् । शौरसेनीप्रयोक्तव्याताहृ
शीनाञ्चयोषिताम ॥ आसामेवतु
गाथासु महाराष्ट्रीं प्रयोजयेत् ।
अत्रोक्तामागधीभाषा राजान्तःपु
रचारिणाम् । चेटानाराजपुत्रा
णाञ्श्रेष्ठिनाञ्चार्द्धमागधी । प्राच्या
विदूषकादीनांधूर्त्तानांस्यादवन्तिका
॥ योधनागरिकादीनांदाक्षिणात्या
हिदीव्यताम । शकाराणाञ्शकादी
नाञ्शाकारींसम्प्रयोजयेत् ॥ वाल्
हीकभाषादिव्यानांद्राविडीद्रविडा
दिषु । आभीरेषुतथाभीरीचाण्डा
लीपुक्कसादिषु ॥ आभीरीशाबरी
चापिकाष्ठपत्रोपजीविषु ॥ तथैवा
ङ्गारकारादौपैशाचीस्यात्पिशाच
वाक् । चेटीनामप्यनीचाना
मपि स्याच्छौरसेनिका ॥

भाषा

वालानांषण्डकानांचनीचग्रहविचा
रिणाम् । उन्मत्तानामातुराणांसैव
स्यात्संस्कृतंक्वचित् ॥ ऐश्वर्येण
प्रमत्तस्यदारिद्र्योपप्लुतस्यच । भिक्षु
बन्धधरादीनांप्राकृतसम्प्रयोजयेत् ॥
संस्कृतसम्प्रयोक्तव्यलिङ्गिनीषूत्तमा
सुच । देवीमन्त्रिसुतावेश्यास्वपिकै
श्चित्तथोदितम् ॥ यद्देशनीचपात्र
न्तुतद्देशतस्यभाषितम् । कार्यतश्चो
त्तमादीनांकार्योभाषाविपर्ययः ॥
योषित्सखीबालवेश्याकितवाप्सर
सांतथा । वैदग्ध्यार्थंप्रदातव्य स
स्कृतञ्चान्तरान्तरा ॥ एषामुदाह
रणान्याकरेषुवोद्धव्यानि । भाषाल
क्षणानिभाषार्णवे ॥ इतिसाहित्य
दर्पणे ६ परिच्छेद ॥ संस्कृतप्रा
कृतभूतभाषाऽपभ्रंशिकागिर । ना
टकेनियता.श्चसाएताभाषारसाव
हा ॥ भाषाविभाषाभेदेनप्राकृतन्तु
चतुर्द्दश ।मागध्यवन्तिकाप्राच्याशौ
रसेन्यर्द्धमागधी ॥ वाह्लीकादाक्षि
णात्याचभाषा सप्तचप्राकृते ॥ ॥ श
काराभीरचाण्डालशबरद्रविडोद्र
जा । वनौकसोविजातीनांविभाषा.
सप्तकीर्त्तिता । ॥ कैकेयीशौरसेनी
चकाश्चीपञ्चालमागधी । द्राविडीपा
पाण्ड्येशीचभूतभाषाप्रकीर्तिता । ॥
॥ वैदर्भीमागधीनाटीकाञ्चोजीचोप
नागरी । पाश्चालीषड्पश्चंशभाषा

स्तुदेशभेदत ॥ इति सङ्गीतदामोदर ॥ यासामुदाहरणमुरारेरनर्घराघवे० भवभूतेरुत्तरचरिते० कालिदासस्याभिज्ञानशाकुन्तलेऽवलोकनीयम् ॥

भाषापाद । पुं० चतुष्पाद्व्यवहारान्तर्गतप्रथमपादे । तल्लक्षणं यथा । अर्थवद्धर्मसंयुक्तं परिपूर्णमनाकुलम् । साध्यवद्वाचकपदं प्रकृतार्थानुबन्धि च ॥ प्रसिद्धमविरुद्धं च यन्निश्चितसाधनक्षमम् । संक्षिप्तं निखिलार्थञ्च देशकालाविरोधि च ॥ वर्षर्तुमासपक्षाहोवेलादेशप्रदेशवत् । स्थानावसथसाध्याख्या जात्याकारवयोयुतम् ॥ साध्यप्रमाणसङ्ख्यावदात्मप्रत्यर्थिनामच । परात्मपूर्वजानेकराजनामभिरङ्कितम् ॥ क्षमालिङ्गात्मपीडावत्कथिताहर्तृदायकम् । यदावेदयते राज्ञे तद्भाषेत्यभिधीयते ॥ इति मिताक्षरा ॥ अस्य विवरणं भाषाशब्दे कल्पद्रुमे द्रष्टव्यम् ॥

भाषितम् । न० वचने । वचसि ॥ यथा । आचार . कुलमाख्याति वपुराख्याति भोजनम् । सन्तति पुण्यमाख्याति देशमाख्याति भाषितमिति ॥ भाषणम् । भाष० । भाषितः ॥ त्रि० कथिते । उक्ते । अभिहिते । भाष्यते स्म । भाषि : कर्मणि क्त ॥

भाष्यम् । न० सूत्रार्थे ॥ सूत्रोक्तार्थप्रपञ्चके । सूत्रानुकारिभिर्वाक्यैः सूत्रार्थस्य स्वपदानां चोपवर्णनपरे० ग्रन्थविशेषे ॥ तथाच भरतः । सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुरिति ॥ त्रि० कथनीये ॥

भाष्यकार । पुं० श्रीमच्छङ्कराचार्ये ॥ महाभाष्यकर्त्तरि मुनौ । गोनर्दीये । पतञ्जलौ । चूर्णिकृति ॥ यदुक्तं भाष्यकारस्य कुमारीयधियासुभो । नैव शब्दाम्बुधि पारं किमन्यो जडबुद्धय . ॥ भाष्यं करोति । कृञ्० । कर्मण्यण् ॥

भाष्यकृत् । पुं० भाष्यकारे ॥

भा । स्त्री० प्रभायाम् । दीप्तौ । प्रभावे ॥ मयूखे । इच्छायाम् ॥ भामते । भाः दीप्तौ । भाः भासेति क्विप् । भा.० भासौ० भास . ॥

भास . । पुं० प्रभायाम् ॥ विहगविशेषे । शकुन्ते गृध्रे । कुक्कुटे ॥ गोष्ठे । व्याप्यव्यापकतादिप्रतिभासे ॥

भासनम् । न० दीप्तौ । प्रकाशने ॥ स्ततस्तावदिदं जगत् चिच्छोभया सम्भासते । यद्यपि शब्दस्पर्शादिज्ञानं भासनार्थं वैन्द्रियापेक्षामितथापि तत्पश्च . चित्तगतव्यवहारस्य० रूपादृश्यतया स्वीकृत्य पूर्वं कर्मैव जडं

भासते । तत्रासति ० पश्चात्
ससमानस्यजडस्यप्रथमतोभा समाम
चैतन्य मेवभासव रूप मिति नि
श्चित्य०जडमुपेचन्‌चिन्मात्रंचित्तेवा
सवेदितित्रीवत्स्म्‌तिप्रकरणम्‌ ॥
भासन्त । पुं० भासपक्षिणि । शकुन्ते
॥ सूर्ये । भे । नक्षत्रे ॥ चन्द्र
त्रि० रम्ये । सुन्दराकारे ॥ भासते।
भास०। तृभूवहिवसिभासिसाधीति
भच्‌प्रत्‌ ॥
भासन्ती । स्त्री० नक्षत्रे ।' ङीप्‌ ॥
भासमान : । त्रि० प्रकाशमाने ॥
भासित । त्रि० प्रकाशिते ॥
भासु । पु० सूर्ये ॥
भासुर । पु० स्फटिके । वीरे ॥
प्रमाणनिरपेक्षतयैवभासनशीले०
आत्मनि ॥ न० कुष्ठौषधे ।। त्रि०
भासनशीले । दीप्तियुक्ते ॥ भासते
तच्छील । भास० । भञ्जभासमि
दोघुरच्‌ ।
भासुरपुष्पा । स्त्री० वृश्चिकाख्या
म्‌ ॥
भास्कर । पुं० आदित्ये । प्रभाकरे
॥ यथा । सदाग्रजन्मियज्ञेनसदा
दान ददन्तिच । सदाचरायुभक्ता
स्ते नित्य येऽर्चन्तिभास्करमितिभ
विष्यपुराणम्‌ । अग्नौ । वह्नौ ॥
भा करोति । दिवाविभेतिट
। कस्कादित्वात्स । ते नविसर्ज
नीयजिह्वामूलीयौसकारस्यनभवत
वीरे । अर्कवृक्षे ॥ न० सुव
र्णे ॥
भास्करद्युमन्‌ । न० प्रयागे ॥
भास्करप्रिय । पुं० पद्मरागमणौ।पु
न्नी०क्वतिकचित् ॥
भास्करेष्टा । स्त्री० आदित्यभक्तायाम्‌ ॥
भास्मन । त्रि० भस्ममये ।। भस्मनो
विकार । अण । अन्नितिप्रकृति
भावान्नलद्धितद्वृतिटिलोपोन ॥
भास्वान । पुं० सूर्ये । अर्कवृक्षे ॥
दीप्तौ । प्रभायाम ॥ भास सन्त्य
स्य । तदस्यास्तीतिमतुप ॥ त्रि०
भास्वरे । दीप्तिविशिष्टे । प्रकाश
वति ॥
भास्वर । पुं० दिने ॥ न० कुष्टौष
धौ । कूठ० ई० भा० ॥ त्रि० प्रका
शवति । भासनशीले ॥ भासते०
तच्छील । भासदीप्तौ । स्थेशभा
सपिसकसोवरच्‌ ॥
भिस्सटा । स्त्री० भिक्षाटायाम्‌ ॥
भिक्षा। स्त्री०भृतौ॥ याच्ञायाम्‌। अर्थ
नायाम्‌॥सेवायाम्‌॥भिक्षितवस्तुनि ।
चत्त्वारःसमाश्चभवेद्‌भिक्षालिप्तताल-
प. । सश्वेस्वधिकमपिदेयमिति०
भिक्षाश्चभिक्षवेदद्याद्विधिवद्ब्रह्मचा
रिणे०चुरुषकुक्कुटभष्ट । ॥ यदैव
यतिब्रह्मचारिणोवर्णयितिक्रदैव०

ती । भिदिर् ० । क्विप् ॥ प्रदेशे ॥ प्रशस्ति ॥ मलक्षिकोद्भमिश्राः स्यु प्रकाशस्थालभित्तयइतिगध रत्नमशोद्धि ॥

भित्तिका । स्त्री० भित्ती ॥ पक्षिकायाम् । पल्ल्याम् ॥ भिनत्ति ० भित्तेवा । भिदिर् ० । कृतिभिदिल तिभ्य . कित्तिति ० तिकन् ॥

भित्तिचौर पु ० चौरविशेषे । कुड्य च्छेदिनि । सींधचोर० इ० भा०

भित्तिपातन : पुं ० महामूषके । घूस ० इ० भा० ॥

भिद् । स्त्री० प्रभेदे ॥ भिनत्तिभिदिर् ० । तच्छीलादिषु ० अन्यतोपिदृश्यतइतिक्विप् ॥ त्रि ० भेदकर्त्तरि ॥

भिदक । पुं० खड्गी ॥ न ० वज्रे ॥

भिदा । स्त्री० भेदे ॥ वस्त्रादेर्विदारणे । विदरे । स्फुटने । फाड़ा० फाटा ० फाडना ० इ ० भा० ॥ भेदनम । भिदिर् ० । भिदाद्यङ् । टाप् ॥ अन्यार्थे ॥

भिदि । पुं० वज्रे ॥ भिनत्ति । भिदिर् ० । कृगृशृपृकुटिभिदिछिदिभ्यश्चेति ० इ ० सचकित् ॥

भिदिरम् । न० वज्रे ॥ भिनत्ति । भिदिर् ० । इषिमदीत्यादिनाकिरच्

भिदु । पु ० मणौ ॥ वज्रे ॥ भिनत्ति । भिदिर् ० । पृभिदिव्यधीतिकु :

भिदुरम् । न० कुलिशे वज्रे ॥ भिनत्ति । भिदिर् ० । विदिभिदिच्छिदे कुरच् ॥ न ० प्लक्षवृक्षे । त्रि० भिन्ने ॥

भिदेलिम . । त्रि ० भेत्तव्ये ॥ भिद्यते कर्म्मणिभिदे केलिमर ॥

भिद्य । पु ० नदे । भिनत्तिकूलम् । भिदिर् ० । भिद्योद्ध्यौनदे ० इति० कृत्यपवाद कर्त्तरिक्यप्निपात्यते ॥

भिद्रम् । न० शतधारे । वज्रे भिनत्ति । भिदिर ० स्फायितञ्चीत्यादिनारक् ॥

भिन्दि . स्त्री ० उपायविशेषे ॥ भिनत्ति । भिदिरवयवे । सर्वधातुभ्य इन् ॥

भिन्दिपाल । पुं० शस्त्रभेदे । सृगे । गोफण ० इ० भा० ॥ भिन्दिंपालयति । पालरक्षणे । कर्म्मण्यण्

भिन्न : । त्रि० भेदविशिष्टे । दारिते । भेदिते । खण्डितावयवे । अन्यसङ्गते ॥ फुल्ले ॥ विदृभे भिद्यतेस्म ॥ भिदिर् ० । क्त । रदाभ्यांनिष्ठातो न पूर्वस्यचदइति० दकारतकारयो र्नौ ॥ न० अन्यार्थवचने । पुं० न० क्षतरोगविशेषे ॥ तल्लक्षणंयथा । यस्तिकुम्भ स्वङ्गाग्रमिभार्थं च । यौवत : । यत्किंचित्प्रस्रवेत्त द्विधिभिन्नमित्यभिधीयते ॥ आम च : कोष्ठ : ॥

भिन्नक । पुं॰ क्षपणे । बौद्धे । त्रि॰ ईषच्छिन्ने ॥ अनन्तस्यन्तगतौक्तादि तिकन् ॥

भिन्नगाचिका । स्त्री॰ कर्कटीविशेषे । फूट॰ इ॰ भा॰ ॥ भिन्न गात्रमस्या

भिन्नदर्शी । त्रि॰ अज्ञे । कुतार्किके । अविद्यामोहितात्मान, पुरुषाभिन्नदर्शिन ॥ भिन्न द्रष्टु शीलयस्य । णिनि ॥

भिन्नधी । त्रि॰ भ्रमितमतौ ॥

भिन्नभिन्नात्मा । पुं॰ चणके ॥

भिन्नयोजनी । स्त्री॰ पाषाणभेदवृक्षे ॥

भिन्नार्थक । त्रि॰ अन्यस्मिन् ॥ भिन्नार्थकाअन्यतरएकत्वान्यतराअपि इत्यमर ॥ भिन्न अर्थोयस्य स ॥

भिया । स्त्री॰ भये ॥ ञिभीभये । भिदाद्यङ्‌षित्वाद्‌अङ् । टाप् ॥

भिरिण्टिका । स्त्री॰ श्वेतगुञ्जायाम ॥

भिल्ल । पुं॰ म्लेच्छजात्यन्तरे । भील इ॰ भा॰ ॥ यथाह । हेमचन्द्र । मालाभिल्लाकिरातास्सर्वेमिल्ला म्लेच्छजातय इति ॥ सचब्राह्मणकन्यायातीवराज्जात । यथा । पुलिन्दमेदभिल्लाश्चपुक्कसोमत्स्यधावक । कुन्दकारोडोखलोवामृतमोहस्तिपस्तथा ॥ एतेवैतीवराज्जाता ' कन्यायांब्राह्मणस्यचेतिप॰ पद्धति ॥

भिल्लगवी । स्त्री॰ गवय्याम् ॥

भिल्लतरु । पुं॰ लोध्रे ॥

भिल्ली । स्त्री॰ लोध्रे ॥

भिषक्‌पाश । पुं॰ निन्द्यवैद्ये ॥ कुत्सितोभिषक् । याप्ये पाशप् ॥

भिषक्‌प्रिया । स्त्री॰ गुडूच्याम् ॥

भिषक्‌जितम् । न॰ औषधे ॥

भिषग्भद्रा । स्त्री॰ भद्रदन्तिकायाम् ॥

भिषङ्‌माता । स्त्री॰ वासके ॥

भिषक् । पुं॰ वैद्ये ॥ इतीलिङ्गप्रशमनेरोगाणामपुनर्भवे । ज्ञानचतुर्विधयस्यसराजार्होभिषक्तम ॥ दण्डनीयोयथा । अज्ञातौषधमन्त्रस्तुयस्तुव्याधेरतत्त्ववित् । रोगिभ्योऽर्थंसमादत्ते सदण्ड्यश्चौरवद्भिषक् ॥ भिषजोन्नस्याभोज्यत्व यथा । शूद्रान्नब्राह्मणोभुक्त्वातथारङ्गावतारिण, । चिकित्सकस्यक्रूरस्यतथास्त्रीमृगजीविनाम् ॥ शौण्डिकान्न सूतिकान्न भुक्त्वामासंव्रतीभवेत् । व्रतीयावकेन । तत्रधेनुद्वयमितिप्रायश्चित्तविवेक ॥ अपिच । पूयचिकित्सकस्यान्न पुंश्चल्यास्त्वन्नमिन्द्रियम् । विष्ठावार्द्धुषिकस्यान्नशस्त्रविक्रयिणोमलम् ॥ इतिमानवे ४ अध्याय ॥ भिषज्यति । भिषज् रुग् जये । कण्ड्वादि । क्विप् ॥ बिभेतिवा । ञिभी॰ । भिय, षुगह्रस्वश्चेत्य जि ॥

भिखाटा । स्त्री॰ दग्धिकायाम् । दग्धान्ने ॥ भिखाटीकते । टीकृगतौ ।

अन्येभ्योपीतिड .। उगपोरितिहू
स ' ॥

भिक्षा । स्त्री० अन्ने । सेवने । भक्ते ॥
वभस्ति । भसदीप्तौ । वाहुलकात्स
छन्दसिवहुलमितीत्वम् । आह्वय
भिक्षे तिभाष्यप्रयोगाल्लोकेपि ॥ य
द्वा । भेदनम् ०भित् । सम्पदादि
त्वात्क्विप् । भिदस्यति । सोऽस्य
कर्मेति । आतोनुपेतिकः । पृषो
दरादिः ॥

भिक्षाण्डम् । न० भालुके । भसौड०
कृ० भा० प्र० काण्डे ॥

भी । स्त्री० भये ॥ ञिभीभये । सम्प
दादित्वात्क्विप् ॥

भीतम् । न० भये त्रि० भययुक्ते ॥ वि
भेति । ञिभी० क्त ० ॥

भीतभीत : । त्रि० अतिशयेनभीते ।
भीतप्रकारे ॥

भीति : । स्त्री० भये ॥ ञिभीभये ।
क्तिन् ॥ आर्षे ॥

भीम . । पुं० अम्लवेतसे ॥ शिवे ॥
पीठविशेषे ॥ यथा । भीमेश्वरीभी
मपीठे शिवाभीमेश्वरीतयेत्यागम .
॥ सर्वसम्प्रतिपन्नपराक्रमेपाण्डुतन
ये । वृकोदरे ॥ त्रि०भयङ्करे । घो
रे ॥ भयानके ॥ विभेत्यस्मात् । भी
मादयोऽपादाने० भियः षुक्वेति
मक् ॥

भीमकर्मा । पुं० भीमसेने ॥ भीमं०
हिडम्बवधादिरूपकर्मास्य ॥

भीमनाद । पुं० सिंहे ॥

भीमनिर्ह्राद . । पुं० राक्षसान्तरे ॥

भीमपूर्वज । पुं० भीमाग्रजे । युधि
ष्ठिरे ॥

भीमरथ : । पुं० तामससमनुवंशजाता
सुरविशेषे ॥ हरिणाकूर्मरूपिणहतो
भीमरथोऽसुरइतिमार्कण्डेयामाश
तृव्ये ८६ ऽध्याय ' ॥

भीमरथी । स्त्री० अवस्थाविशे
षे ॥ यथा । सप्तसप्ततिकेवर्षे
सप्तमेमासिसप्तमी । रात्रिर्भीमरथी
नामनराणामतिदुस्तरा ॥ नराणां
दुरितक्रमेतिवपाठ . ॥ तामतीत्यन'
रोयोसौ दिनानि यानितीवति ।
क्रतुभिस्तानितुल्यानिसुवर्णेयतदक्षि
णे ॥ गति . प्रदक्षिणविष्णोर्लक्ष
नमस्यभावयम् । ध्यानंनिद्रासुधा
चात्र भीमरथ्या . पापश्रुतिः ॥ न
दीविशेषे ॥

भीमविक्रान्त : । पुं० अरिमाचले ।
सिंहे ॥ भीमश्चासौविक्रान्तः ॥
त्रि० भयानकविक्रमवति ॥

भीमशासन : । पुं० यमे ॥ भीमंशास
नंयस्य ॥

भीमसेन: । पुं० मध्यमपाण्डवे । भी
मेवृकोदरे ॥ कर्पूरप्रभेदे । भीम
सेनोकपूर्वइतिभाषा ॥ यथा । भी
तासोभीमसेनस्तदनुशिलकार :

रावासमन्न । पांशु पिञ्जोऽब्ज सारस्तदनुह्निमयुतावालुकाजूटिका च। पश्चादस्यास्तुषारस्तदुपरिसहिम शीतल पत्रिकाख्याक्ँरसेतिभे दाशुघरसमहासावैसदृश्येनदृश्या ॥

भीमसुता । स्त्री० दमयन्त्याम् ॥

भीमा । स्त्री० दुर्गायाम् ॥ रोचनाख्य गन्धद्रव्ये ॥ कशायाम् ॥

भीमाकाली । भीमादेवी । स्त्री०) दुर्गायाम् ॥

भीमास्थानम् । न० तीर्थविशेषे ॥

भीमेश्वरी । स्त्री० भीमपीठस्थायाम् ॥

भीमैकादशी । स्त्री० माघशुक्लैकादश्याम् ॥ भैम्याम् ॥

भीर । त्रि० भयदे ॥ भियराति । रा । क ॥

भीरु । पु० इक्षुप्रभेदे ॥ यथा । भीरु श्लेष्मकर स्वादुरविदाहीगुरु स्मृत इति ॥ व्याघ्रे ॥ शृगाले ॥ त्रि० भार्त्ते । कातरे ॥ भीरुकौ । चञ्चौ । डरपोक० इ० भा० ॥ रणे भीरो स्वर्गाभाव ॥ बिभेति । ञिभीभये । भिय . क्रुक्रुकनावि ति०कु ॥ स्त्री० भयशीलायाम् । वरयोषिति ॥ कण्टकार्याम् ॥ शतावर्याम् ॥ अजायाम् ॥ छायायाम् ॥ स्त्रीमात्रे ॥

भीरुक । पुं० इक्षुप्रभेदे । भीरुरी० इ० दे० भा० प्र० ॥ वातपित्तप्रश मनोमधुरोरसपाकयो । सुशीतोबृंह णोबल्य पौण्ड्रकोभीरुकस्तथा ॥ पेचके ॥ न० वने ॥ त्रि० भयशीले । भीलुके । चञ्चौ ॥ बिभेति । ञिभी० । क्रुकन् ॥

भीरुहृदय । पु० मृगे ॥

भीरू: । स्त्री० भयशीलायांयोषिति ॥ जङ्घुतद्गत्यूङ् ॥

भील । पु० भिल्ले ॥ भियलाति । ला० क० ॥

भीलभूषणा । स्त्री० गुञ्जायाम् ॥

भीलुक । त्रि० भयप्रकृतिकेजने । चञ्चौ ॥ बिभेति । ञिभी० । भिय क्रुक्लुकनावितिक्लुकन् ॥

भीषण . पु० भयानकरसे ॥ शल्लक्याम् ॥ कुन्दुरुके ॥ कपोते ॥ हिन्ताले ॥ भैरवविशेषे ॥ त्रि० गाढे ॥ दारुणे ॥ भीमरसान्विते ॥ भीषयते । ञिभी० । नन्द्यादित्वाल्ल्यु । भियोहेतुभयेषुगिति षुक् ॥

भीष्म । पु० गाङ्गेये । पाण्डवानां पितामहे ॥ रुद्रे ॥ राक्षसे ॥ भयानकरसे ॥ त्रि० भयहेतौ । भयङ्करे ॥ बिभेत्यस्मात् । ञिभी० । भिय षुग्वेति०मक्० षुगागमश्च

भीष्मक । पु० रुक्मिण्या पितरि ॥

भीष्मजननी । स्त्री० गङ्गायाम् ॥

भीष्मपञ्चकम् । न० कार्त्तिकशुक्लपक्षी यैकादश्यादि पूर्णिमान्तपञ्चतिथि कर्त्तव्यव्रतविशेषे ॥

भीष्मरत्नम् । न० हिमालयोत्तरदेश जातशुक्लवर्णप्रस्तरविशेषे । भीष्म पाषाणे ॥

भीष्मसू. । स्त्री० गङ्गायाम् ॥ भीष्मं सूते । षूङ्० । क्विप् ॥ शान्तनो-र्महिषीभूत्वाभीष्म सूतवतीयत । तस्मात्साभीष्मसू प्रोक्तागङ्गाचलो क्यपावनी ॥

भीष्माष्टमी स्त्री० माघशुक्लाष्टम्याम् ॥ तत्रभीष्मस्यतर्पणकर्त्तव्यम् ॥

भीसटम् । न० शुष्कमांसके ॥

भुक्तम् । न० भक्षणे ॥ त्रि० भक्षिते । खादिते । अभ्यवहृते । अशिते ॥ भुज्यतेस्मभुज० । क्त. भुक्ताब्राह्मणा इत्यत्रतुभुक्तमेषामस्तीत्यर्थकारोमत्व र्थीयोनतुकर्त्तरिक्त . । सकर्मकेभ्यस्तस्यविधानाभावात् ॥ यद्वोत्तर पदलोपोत्रद्रष्टव्य । भुक्तान्नाभुक्ता । अत्रान्नस्यभुक्तत्वं ब्राह्मणे षूपचर्य्यते ॥

भुक्तसमुज्झित । त्रि० फेलायाम् ॥ पूर्वम्भुक्तम्० पश्चात्समुज्झितम् । पूर्वकालैकेतिसमास ॥

भुक्ति । स्त्री० भोजने ॥ भोजनम् । भुजपालनाभ्यवहारयो : । स्त्रियां क्तिन् ॥ भोगे ॥ यथा । भुक्तिस्पृ हयोसिध्यतीति ॥

भुक्तिप्रद । पु० मुद्गे ॥ त्रि०भोगदा तरि ॥

भुक्तोज्झित । त्रि० फेलायाम् ॥ पूर्वंभुक्तम्०पश्चादुज्झितम् । पूर्वं कालैकेतिसमास ॥

भुग्न । त्रि० रोगादिनाकुटिलीकृते रुग्णे ॥ भग्ने ॥ भुज्यतेस्म । भुजो कौटिल्ये । क्त । ओदितश्चेति नत्वम् ॥ भुजतिस्मवा । गत्यर्थेति क्त ॥

भुज । पु० स्त्री० करे ॥ बाहौ ॥ अस्यशुभाशुभलक्षणंयथा । करावक्र त्वदलाश्चिछासुगन्धिन्यश्चरोमिका । अन्यथाअर्थहीनानामसौनि स्स्य रोमशौ ॥ निर्मांसौचैवभग्नाल्पौश्चि द्रौचविपुलौभुजौ । आजानुलम्बि नौवाहूवृत्तौपीनौनरेश्वरे ॥ नि स्मांरोमशौह्रस्वौशस्तौचरिकरप्र भौ । इति ॥ भुज्यतेऽनेन । भुज पालनाभ्यवहारयो . । भुजन्युब्जौ पाण्युपतापयोरितिसाधु ॥ यद्वा । भुजति । भुजकौटिल्ये । इगुप-धेतिक ॥ चतुष्कलिशेषगुरुसंज्ञा याम् ॥ ० ॥ पु० ॥

भुजकोटर . । पु० कक्षे ॥

भुजग . । पु० सर्पे ॥ भुज. सन्गच्छ ति । अन्येष्वपीतिड ॥ भुजैःकौ टिल्येनगच्छतिवा ।

भुजगदारण । पु० गरुडे ॥

भुजगभोगी । ० मयूरे ॥

भुजगराज । पु० शेषाहौ ॥ भुजगानां राजा । टच् ॥

भुजगशिशुभृता । स्त्री० बृहतीछन्द प्रभेदे ॥ भुजगशिशुभृतानौम । यथा । यदुतटनिकटस्थौघोभुजगशिशुभृतायासीत् । मुररिपुदलितेनागेव्रजजनसुखदासा ऽभूत् ॥

भुजगान्तक । पु० गरुडे ।।

भुजगाभोजी । पु० मयूरे ॥

भुजगाशन । पु० पक्षिसिंहे । गरुडे ॥ भुजगान्अश्नाति । अश० । ल्यु । भुजगाश्चशन यस्यवा ॥

भुजङ्ग । पु० अश्ौ । सर्पे ॥ षिडगौ ॥ भुजं नकौटिल्यं नगच्छति । गमे सुपिखच् खच्चडिद्वावाच्य इतिडित्वपचे टिलोप । ॥ सीसके ।।

भुजङ्गघातिनी । स्त्री० सर्पाच्यायाम् । चुल्क्याम् । काकोलिका० इू० गौ० दे० भा० ॥

भुजङ्गजिह्वा । स्त्री० महासमङ्गायाम् ॥ सर्परसनायाम् ॥

भुजङ्गप्रयातम् । न० जगतीछन्द प्रभेदे ॥ भुजङ्गप्रयात चतुर्भिर्यकारे ॥ यथा । सदारात्मजभ्रातिभृत्योविहायस्वमेत इदं जीवित लिप्सान । मयाक्लेशित ! कालियेस्य कुरुत्व भुजङ्गप्रयात द्रुतस्मागराय ॥

भुजङ्गभुक् । पु० मयूरे ॥ भुजङ्गभुङ्क्ते । भुज० । क्विप् ॥ गरुडे ॥

भुजङ्गभोजी । पुं० राजसर्पे ॥

भुजङ्गम । पु० सर्पे । भुजं नकौटिल्यं नगच्छति । गमे सुपिवा च्यइतिखच् । खच्चडिद्वावाच्यइति डिद्भावे टिलोपाभाव ।। न० सीसके ।।

भुजङ्गलता । स्त्री० नागवल्ल्याम् ॥

भुजङ्गविजृम्भितम् । न० उत्कृतिच्छन्द प्रभेदे ॥ वस्वीशाश्वैश्छेदोपेत ममतनयुगलसजजगै०र्भुजङ्गविजृम्भितम् ॥ यथा । हेलोदञ्चन्यञ्चत्पादप्रकटविकटनटनभरोत्थात्करतालकस्वारुप्रेङ्खच्चडावर्हस्तुतितरलनवकिशलयतरङ्गितहार भ्रक् । वन्यन्नागस्त्रीभिर्भक्त्या मुकुलितकरकमलयुग कृतस्तुतिरच्युत । पायान्नश्छिन्दन्कालिन्दीह्रदकृतनिजवसतिम्हङ्भुजङ्गविजृम्भितम् ॥

भुजङ्गसङ्गता । स्त्री० बृहतीछन्द प्रभेदे ॥ सजरैर्भुजङ्गसङ्गता ।। यथा । तरलातरङ्गरिङ्गितैर्यमुनाभुजङ्गसङ्गता । कथमेतिव-

स्वचारकत्वपल ' सद्वेवताहरि ॥

भुजङ्गहा । पुं॰ श्रीकृष्णस्यन्दन ध्वजे । गरुडे ॥

भुजङ्गाक्षी । स्त्री॰ रास्नायाम् ॥ भुजङ्गान् अचति । अचू व्याप्तौ । कर्मण्यण् ॥ यद्वा । भुजङ्गोक्षियस्या । अच्योदर्शनादित्यच् । जातेरिति॰ गौरादित्वाद्वा॰ ङीष् । भुजङ्गशब्दस्य भुजङ्गाक्षिसदृशीलक्षणा ॥

भुजङ्गाख्य । पुं॰ नागकेसरे ॥

भुजशिरः । न॰ स्कन्धे ॥ भुजस्यशिर ॥

भुजा । स्त्री॰ बाहौ ॥ करे ॥ भुजाट्टाप ॥

भुजाकण्टः । पुं॰ कात्याङ्गुलि । नखे ॥

भुजादल । पुं॰ हस्ते ॥ भुजान्तरम् न॰ क्रोडे ॥ भुजयोरन्तरम् ॥

भुजि । पुं॰ वह्नौ ॥ भुनक्ति॰ भुज्यतेवा । भुज॰ । भुजे . किच्चेति॰ इ ॥

भुजिष्य । पुं॰ स्वतन्त्रे ॥ हस्तसूत्रे । दासी ॥ भुङ्क्ते॰ स्वाम्युच्छिष्टम्॰ भुज्यतेवा । भुज॰ । रुचिभुजिभ्या 'किष्यन् ॥

भुजिष्या । स्त्री॰ दास्याम् ॥ गणिकायाम् ॥ टाप ॥

भुज्यु । पुं॰ भोजने ॥ अग्नौ ॥ भुनक्तिपालयतिसर्वाणिभूतानि । भुजमृङ्भ्यायुक्त्युकाविति युक् ॥

भोजनंश ॥ भाजने ॥ कचिविशि षे ॥

भुञ्जन् । त्रि॰ भोगकर्तरि । भुञ्जाने ॥ भुजे॰ लट शतृ ॥

भुञ्जान ' । त्रि॰ भुङ्क्ते । यथा । त्रिपुधामसुयद्भोज्य भोक्तायश्चप्रकीर्तित ' । वेदैतदुभययस्तुसभुञ्जानो नलिप्यत इति । त्रिषुधामसुजाग्रदादिषु ॥ भुजे . कर्त्तरिलट शानच् ॥

भुविक् । स्त्री॰ पृथिव्याम् ॥ बिभर्त्ति॰ भरति मनुष्यादीन् । डुभृञ॰ । भृञउच्चेति॰ कुन्प्रत्यय

भुवनम् । न॰ सलिले । जले ॥ गगने ' जने ॥ पिष्टपे । जगति ॥ भूरादिसर्वलोके ॥ चतुर्दशभुवनानियथा । भूर्भुवः स्वर्महश्चैवजनस्तप एवच । सत्यलोकश्चसप्तैतेलोकास्तु परिकीर्त्तिताः । अतलसुतलश्चैव वितलञ्चगभस्तिमत् । महातलरसातलपातालसप्तमम् ॥ इति ॥ भवन्त्यस्मिन् भूतानि॰ इति भुवनमयलोक ॥ भूयते । भूप्राप्तौ । भूसूधूभ्रस्जिभ्यश्छन्दसीतिक्युन् ॥ यद्वा । भवन्ति॰ उत्पद्यन्तेऽस्मिन्क ल्पेल्युट् । सञ्ज्ञापूर्वकत्वाद्गुणाभाव ' ॥

भुवनकोष । पुं॰ भूगोले ॥

भुवनकोषवित् त्रि॰ । चतुर्दशभुवना

निवस्तूमि० इतितात्पर्यंचाभिस्रे ॥ कल्पनामात्रमेतत् । तेषामदृष्टत्वात् । नचवचनेभ्यस्तद्दर्शनम् । तेषांमिथोविप्रतिपत्तिस्तदर्शनात ॥

भुवनेश्वर । पु० एकाम्बरे ॥

भुवनेश्वरी । स्त्री० महाविद्याविशेषे। साम्यावस्थमायोपाधिकब्रह्मरूपिण्याम् ॥ मणिद्वीपाधिवासिन्याम्॥ यथा । पाशाङ्कुशधराभीतिधरादेवीं चिदात्मिकाम् । वन्देसमन्दहसितामणिद्वीपाधिवासिनीम् ॥ आयुधस्थानानिवामाधःकरमारभ्यदक्षिणाधःकरपर्यन्तम् । तदुक्तं महासमोहनतन्त्रे । दक्षिणेचाङ्कुशदद्यात्वामेपाशप्रदापयेत् । अभयदक्षिणेदद्याद्वरवामेप्रदापयेदिति । इत्यपदृश्यामपिभुवनेशीध्याने । दक्षेङ्कुशाभयेप्रोक्तेवामेपाशमथेष्टदमिति॥

भुवन्यु । पु० भानौ ॥ सूर्ये ॥ ज्वलने । वह्नौ ॥ शशलाञ्छने । शशिनि ॥ भवति । भू० । कन्युच् चिपिषेति० बाहुव । कन्युच् ॥

भुवर० । अ० अन्तरिक्षे । गगने ॥ षष्ठ्यन्तप्रतिरूपकमव्ययम् । भवति । भू० । भूरञ्जिभ्याकिदित्यसुन् । उवङ् ॥

भुवर्लोक । पुं० भूरादिसप्तलोकान्तर्गत द्वितीयलोके ॥ यथा । भूमिसूर्यान्तरयत्रसिद्धादिमुनिसेवितम् । भुवर्लोकस्तुसोप्युक्तोद्वितीयोमुनिसत्तम ॥ अपिच । तिथिलचोभुवर्लोकोध्रुवप्राप्तोमहीतलात् ॥ भूपृष्ठादारभ्यध्रुवप्राप्तइति० ज्योतिश्चक्रावलम्बनभूतध्रुवपर्यन्तमन्तरिक्षलोकाख्योभुवर्लोकइत्यर्थं ॥

भुवि । न० अब्धौ । समुद्रे ॥ भवन्त्यस्मिन् । भू० । भुवः किदिति० इन् ॥

भुशुण्डी । स्त्री० अस्त्रान्तरे । अग्नियन्त्रे ॥ यथा । उड्डीयोड्डीयचप्राप्यनदन्तीदशकाष्ठका । क्रमतेचानतालीयासाभुशुण्डीनिगद्यते ॥

भू । अ० रसातले ॥

भू । स्त्री० स्थानमात्रे ॥ एकाङ्के ॥ व्याहृत्यन्तरे ॥ धरण्याम् । भूमौ ॥ दृष्टात्मविजयत्यथान्नृपान्हसति भूरियम् । अहोमाविजिगीषन्तिमृत्योःक्रीडनकानरा ॥ भवति० भवनवा । भू० सत्तायाम् । कर्त्तरिभावेवाक्विप् ॥ भवन्त्यस्यासर्वमित्यधिकरणेबहुलवचनाद्वाक्विविधेके ॥ भवन्त्यस्याभूतानीत्यपादानेवाक्विविध्येके ॥ उत्पत्तौ ॥

भूक । पुं० न० काले ॥ छिद्रे ॥ अन्धकारे ॥ भवति॥भू० । सृवृभूशुषिमुषिभ्य कक् ।

भूकदम्ब । पु० अलम्बुषद्रुमे । कोकासिम० श० गौ० दे० भा० ॥

भूकदम्बक । पुं० यवान्याम् ।
भूकदम्बिका । स्त्री० महाश्रावणिका याम् ॥ मुण्डाम् ॥
भूकन्द । पुं० महाश्रावणिकायाम् ॥
भूकम्प । पुं० उत्पातविशेषे ॥ स यथा । यामक्रमात्स्वभूकम्पोहिजादीनामनिष्टद । अनिष्टद क्षितीशानांसन्ध्ययोरुभयोरपि ॥ इतिव शिष्ठ ॥ यदाविजृम्भतेनन्तोमदाघूर्णितलोचन । तदाचलतिभूरेषा साद्रिद्वीपाब्धिकानना ॥ भुवः कम्पो भूकम्प ॥ मेषेवृश्चिकभे गज प्रचलतिव्यासादिभि . कथ्यते चापे मीनकुलीरमेचहषभेसम्य चलेत्क क्षप । यूकेकुम्भधरेमृगेन्द्रमिथुनेकन्यामृगेपन्नगस्तेषामेकतमोयदि प्रचलतिच्चोणीतदाकम्पते ॥ काम्ब पेमरणञ्च यमरणं चापिपन्नगे । सर्वं चमुखदञ्चैवपृथिव्यां चलितेगजे ॥ प्रथितनरेश्वरमरणव्यसनान्याग्नेय मारुतयो . । चुब्रयमतिवृष्टिभि रूपपीडान्तेजनाश्चापि ॥ त्रिचतुर्थंपञ्चमदिनेमासेपक्षेत्रिपक्षके । भव तियदाभूकम्प प्रधाननृपनाशनंकुरु ते।सचायभूमिजोत्पातविशेष॥यथा । चरस्थिरभवभौमभूकम्पमपिभूमिजम् । जलाशयानांविकृत्य भौमतद पिकीर्तितम् ॥ भौमंयाम्यफलं यचिरेणपरिपच्यते ॥ चपिच । चितिकम्पमाहुरेके वृहदन्तर्जलनिवासिसत्त्वकृतम् । भूभारखिन्नदिग्गजविश्रामसमुद्भवचान्ये ॥ अनिलोऽनिलेननिहत क्षितौपतन्सस्वनकरोत्यन्ये । केचित्त्वदृष्टकारितमिदमन्ये प्राहुराचार्या ॥ गिरिभि पुरासपक्षैर्वसुधाप्रपतद्भिरुत्पतद्भिश्च । आकम्पितापितामहमामरसदसिसव्रीडम् ॥ भगवन्नाममयैतत्त्वयाकृतयदचलेतितन्नतथा । क्रियतेऽचलैश्चलद्भि शक्ताऽहना चसोढमस्य । तस्या सगद्गदगिर किञ्चित्स्फुरिताधरविनतमीषत् । साश्रुविलोचनमाननमवलोक्यपितामह प्राह ॥ मन्युर्हरेन्द्रधात्या चिपकुलिशशैलपक्षभङ्गाय । शक्र क्षतमित्युक्त्वामाभैरीरितिवसुमतोमाह ॥ किन्त्वनिलदहनसुरपतिवरुणा . सदसत्फलावबोधार्थम् । प्राग्द्वित्रिचतुर्भागेषुदिननिशो कम्पयिष्यन्ति ॥ अतोविशेषोद्रष्टव्यो वाराह्यांसुविचक्षणै ॥
भूकर्बुदार . । पुं० ) बुद्रश्लेष्मान्तके ।
भूकर्बुदारक । पुं०) भूशेलौ । छोटा लसोडा० इ० भा० ॥ भूकर्बुदा रोमधुर । कृमिशूलापह । परम् । वातप्रकोपन : किञ्चित्शीतल . कर्षामारक ॥
भूकल । पुं० दुर्विनीताश्वे ॥

भूकश्यप । पुं० वसुदेवे ॥
भूकाक । पुं० खल्पकङ्के ॥ क्रौञ्चे ॥ नीलकपोते ॥
भूकुक्षी । स्त्री० भूपाटल्याम् ॥
भूकुष्माण्डी । स्त्री० विदार्याम् ॥
भूकेश । पुं० शैवले ॥ वटे ॥
भूकेशा । स्त्री० राक्षस्याम् ॥
भूकेशी । स्त्री० अवल्गुजे ॥
भूक्षित् । पुं० सूचीरोमणि । शूकरे ॥
भूखर्जूरी । स्त्री० क्षुद्रखर्जूर्याम् । भूयुक्तायाम् ॥ भूखर्जूरीतुमधुरा शिशिराद्दाहपित्तनुत् ॥
भूगरम । न० विषे ॥
भूगर्भ । पुं० भगवति । भूर्गर्भे यस्य भूः सर्वभूताश्रयभूतागर्भइवान्तर्वर्तिनी चास्य भूस्तागर्भेऽस्येतिवा ॥ भवभूतिनामनि० कवौ ॥
भूगोल । पुं० ज्योतिश्शास्त्रप्रसिद्धे भुवनकोषे ॥ भोज्य यथासर्वरसविनाज्य राज्य यथाराजविवर्जितञ्च । सभानभातीवसुवक्तृहीनागोलानभिज्ञोगणकस्तथैव ॥ वादीव्याकरणं विनैवविदुषाधृष्ट प्रविष्ट सभाजल्पन्नल्पमति स्मयात्पटुवटुभ्रूभङ्गवक्रोक्तिभिः । ह्रीतः सन्नुपहासमेतिगणकोगोलानभिज्ञस्तथाज्योतिर्वित् सदसिप्रगल्भगणकप्रश्नप्रपञ्चोक्तिभिः ॥
भूचर । त्रि० भूमिचारिणि ॥

भूच्छायम् । न० अन्धकारे ॥ भुवच्छाया । छायाबाहुल्ये० इति क्लीवता ॥
भूजम्बु । पुं० भूनागे ॥
भूजम्बू । स्त्री० गोधूमे ॥ विकङ्कतफले ॥ भूमिजम्ब्वाम् ॥
भूत । पुं० दे०योनिविशेषे ॥ सच अधोमुखोर्द्ध्वमुखादिपिशाचभेदोरुद्रानुचरोबालग्रह ॥ कुमारे ॥ कृष्णचतुर्दश्याम् ॥ योगीन्द्रे ॥ शब्दोगणविशेषेषु । न० क्ष्मादौ । पृथिव्यप्तेजोवाय्वाकाशेषु ॥ पिशाचादौ ॥ जन्तौ । युक्ते । न्याय्ये ॥ वस्तुतत्त्वानुसरणे । त्रि० उचिते ॥ प्राप्ते ॥ वित्ते ॥ ऋते । सत्ये ॥ प्राणिनि ॥ कालविशेषे । वृत्ते । अतीते । गते ॥ परमार्थे ॥ विद्यमानेवस्तुनि ॥ अतीतोत्पत्तिके । जाते ॥ समे ॥ उत्तरपदस्थएव भूतशब्द समार्थइतिशाब्दिका । यथा पितृभूत । देवभूतोयमिति पूर्वमपिविद्यमाने ॥ भवन भूमिर्णि ॥ भाव्यते स्म । भूप्राप्तौ । आधृषाद्वेतिणिजभाव पक्षे० क्त ॥ भूमिरस्त्यस्तिवा । अर्शआद्यच् ॥ अभवद्वा । भुवोगत्यर्थेति० भूतार्थेक्तस्तरिक्त ॥ अर्द्धर्चादि ॥
भूतकृत् । पुं० धातरि । द्रुहिणे ।

भूतानि करोति । डुकृञ्० । क्विप । तुक् ॥ रुद्रे ॥ भूतानि कृन्तति० छिनत्ति । कृतीछेदने । क्विप् ॥ कृणोतिहिनस्तिवा । कृञ्० । क्विप तुक् ॥ विष्णौ ॥ रजोगुण समाश्रित्यविरिञ्चिरूपेण० भूतानिकरोतिद्रुतितथा ॥

भूतकेश । पु० तृणविशेषे । गोलोम्याम् । अल्पकेश्याम् ॥ भूतानाकेशइव । भूत केशोस्य वा ॥

भूतकेशी । स्त्री० भूतकेशे ॥ शेफालिकायाम् ॥ नीलसिंदुवारे ॥

भूतक्रान्ति । स्त्री० भूतावेशे ॥

भूतगण: । पु० पृथिव्यादिपञ्चके ॥ भूतानागण ॥

भूतगन्धा । स्त्री० मुरानाम्निगन्धद्रव्ये ॥

भूतग्राम । पु० देहेन्द्रियसङ्घातात्मकारेणपरिणते पृथिव्यादिभूतसमुदाये ॥ सच० जरायुजाण्डजस्वेदजोद्भिज्जभेदाच्चतुर्विधोभवति । भूतानांपृथिव्यादीनाग्राम ॥

भूतघ्न । पु० भूर्जवृक्षे ॥ उष्ट्रे ॥ लशुने । त्रि० भूतनाशके ॥

भूतघ्नी । स्त्री० तुलस्याम् ॥ मुण्डितिकाया ॥

भूतचतुर्द्दशी । स्त्री० कार्त्तिककृष्णचतुर्द्दश्याम् । यमचतुर्द्दश्याम ॥

भूतजटा । स्त्री० जटामास्याम् ॥ गन्धमास्याम् ॥

भूतत्वम् । न० वर्त्तमानध्वंसाप्रतियोगिसमयवृत्तित्वे ॥ बहिरिन्द्रियग्रहणायोग्यविशेषगुणवत्त्वे ॥ पृथिव्यादयस्तुजातिविशेषा ॥

भूतदर्शनम् । न० परमार्थदर्शने ॥

भूतद्रावी । पुं० भूताङ्कुशवृक्षे ॥ रक्तकरवीरे ॥

भूतद्रुम । पुं० श्लेष्मातकवृक्षे ॥

भूतध्रुक् । पु० भूतानामपकारके ॥ भूतानिद्रुह्यति । द्रुह० । सत्सूद्विषेति क्विप् ॥ भूतध्रुक्कोलभेतश्रम् ॥

भूतधात्री । स्त्री० भूमौ ॥ भूतानाधात्री ।

भूतनाथ । पु० शिवे ॥ भूतानां नाथ ॥ भूतैर्जन्तुभिर्याच्यते० तानुपतापयति० तेभ्यआशास्ते० तेषामभीष्टमितिनाभूतनाथ ॥

भूतनायिका । स्त्री० दुर्गायाम् ॥

भूतनाशन । पु० श्वेतसर्षपे ॥ सर्षपे । भल्लातके ॥ न० रुद्राक्षे ॥ भूतान्नाशयति । णशअदर्शने ल्युट् ॥

भूतपति । पुं० महादेवे ॥ भूतानापति ॥

भूतपची। स्त्री॰ तुलस्याम् ॥

भूतपुष्प। पु॰ श्योनाकवृक्षे ॥

भूतपूर्णिमा। स्त्री॰ आश्विनपूर्णिमायाम्। शारद्याम्। कोजागरायाम् ॥

भूतपूर्व। त्रि॰ अतिक्रान्ते ॥ पूर्वं भूत। सुप्सुपेतिसमास। भूतपूर्वेचरडितिनिर्देशात्भूतशब्दस्यपूर्वनिपात ॥

भूतप्रादुर्भाव। पु॰ अतिक्रान्तोत्पत्तौ ॥ भूतस्यप्रादुर्भाव ॥

भूतभावन। पु॰ सर्वभूतपितरि। ईश्वरे। भूतानिभावयतिजनयति॰ प्रापयतिवा। भवतेर्ण्यन्तात् युच् ॥

भूतभृत्। पु॰ विष्णौ ॥ भूतानि बिभर्त्ति धारयति॰ पोषयतिवा॰। डुभृञ्॰। क्विप्। तुक् ॥

भूतभैरव। पु॰ भैरवविशेषे ॥ शीतज्वरापहचूर्णविशेषे॥ यथा। एलाजातिफलव्योषत्रिफलाजीरकघन। सविडङ्गसितायुक्तं चूर्णंशीतज्वरापहमिति ॥

भूतमात्रा। स्त्री॰ शब्दादिषु ॥ पृथिव्यादिषुविषयेषु ॥

भूतमारी। स्त्री॰ चीडानामनिगधद्रव्ये ॥

भूतयज्ञ। पुं॰ पञ्चमहायज्ञान्तर्गतवलिवैश्वदेवकर्म्मणिभूतेभ्योवलिहरणे ॥

भूतयोनि। पु॰ परमात्मनि ॥ भूतानांयोनि ॥

भूतलिका। स्त्री॰ पृक्कायाम् ॥

भूतवास। पु॰ कलिद्रुमे ॥ भूतानांवास। भूतानांवासोस्मिन्वा॥

भूतविक्रिया। स्त्री॰ अपस्माररोगे ॥

भूतवित। पुं॰ लौकायतिके ॥ सच पृथिव्यप्तेजोवायवस्तत्त्वानि॰तानि-चत्वारिभूतानिजगत्कारणानीति कल्पयति ॥

भूतविद्या। स्त्री॰ भूततन्त्रे ॥ यथा। भूतविद्यानाम॰ देवासुरगन्धर्वयक्षरक्ष पितृपिशाचनागग्रहाद्युपसृष्टचेतसा॰ शान्तिकर्मवलिहरणादिग्रहोपशमनार्थमितिसुश्रुत ॥

भूतवृक्ष। पु॰ शाखोटवृक्षे। श्योनाकवृक्षे ॥ कलिवृक्षे ॥

भूतवृक्षक। पु॰ शाखोटे ॥ वहुवारके लसोडा॰ इ॰ भा॰ ॥

भूतवेशी। स्त्री॰ श्वेतशेफालिकायाम्। श्वेतसुरसायाम्। श्वेतन्यवारी॰ इ॰ भा॰ ॥ भूतानिविशन्ति। विश्प्रवेशने। कर्मण्यण् ॥

भूतब्रह्मा। पु॰ देवले।

भूतसञ्चार। पु॰ भूतोन्मादरोगे। भूताक्रान्तौ। ग्रहागमे ॥

भूतसञ्चारिणी। स्त्री॰ कृष्णचतुर्दश्याम् ॥

भूतसञ्चारी । पुं० दावानले ॥

भूतसर्ग । पु० भूतसृष्टौ । देवासुरभेदेनभूतानांसृष्टौ ॥ यथा । ब्राह्मप्राजापतीयश्चसौम्यऐन्द्रस्तथैवच । गान्धर्वोऽथार्थकौवेरोरक्षः पैशाचमानुषाः ॥ स्थावरः पाशवोमार्गः सार्पः शाकुनिकस्तथा । चतुर्दशविधोह्येषभूतसर्गः प्रकीर्तितः ॥

भूतसार । पु० श्योनाकप्रभेदे ॥

भूतसृट् । पुं० ब्रह्मणि ॥

भूतहन्त्री । स्त्री० वंध्याकर्कोटक्याम् । नीलदूर्वायाम् ॥

भूतहर । पु० गुग्गुलौ ॥

भूतहारि न० देवदारुणि ॥

भूता । स्त्री० कृष्णचतुर्दश्याम् ॥ यथा । स्कान्दे । ब्रह्माण्डोदरमध्ये तुयानितीर्थानिसन्तिवै । पूजितानिभवन्त्येहभूतायापारणेकृते ॥ अपिच । शिवरात्रिव्रतेभूताकामविद्धाविवर्जयेत् ॥

भूताङ्कुश । पुं० गौ० दे० स्वनामाप्रसिद्धवृक्षे । चवकी । भूताङ्कुशे ॥ भूताङ्कुशस्तीव्रगन्धः कटुकश्चास्तथोल्कटः । भूतग्रहादिदोषघ्नः कफवातनिकृन्तनः ॥

भूतात्मा । पुं० देहेपृथिव्यादिभूतारब्धत्वात् भूतान्येवात्माखभावो यस्यसः ॥ परमेष्ठिनि । दुहिणे हिरण्यगर्भे ॥ भूतानांव्यष्टिउपाधीनामात्मानिवच्छाससमष्टिउपाधित्वात् इति ॥ सदाशिवे ॥ जीवात्मनि ॥ विष्णौ ॥ भूतानांप्राणिनामात्माअन्तर्यामी ॥

भूतादि । पु० सर्वजगत्कारणे । तामसाहङ्कारे ॥ भूतानामादि ॥ परमेश्वरे ॥ भूतानांभवनधर्मकाणामुत्पत्तिमतांसर्वेषामादि कारणं कर्तृपादानोभयात्मकमितियावत् ॥

भूतादिसर्ग पु० भौतिकसर्गे ॥ भूतादेः सर्गः ॥

भूतारि । न० हिङ्गुनि० ॥

भूतार्त । त्रि० भूताविष्टे ॥ भूतेनऋतोदीप्तः । ऋतेचतृतीयासमास इतिवृद्धिः ॥ भूतेनआर्त्तोवा ॥

भूतार्थ । पु० सिद्धार्थे ॥

भूतार्थवाद । प० प्रमाणान्तरविरोधस्तुतिरहितार्थबोधकेवेदवाक्ये ॥ यथा । इन्द्रोवृत्रायवज्रमुदयच्छदित्यादि ॥

भूताली । स्त्री० भूपाटल्याम् ॥ मुषल्याम् ॥

भूतावास । पु० विभीतकी । बहेडा० इ०भा० ॥ भूतानामावासः ॥ काकाद्याश्रये०वासुदेवे ॥ भूतान्याभिमुख्येनवसन्त्यत्र ॥ वसन्तित्वयि भूतानिभूतावासस्ततोभवान् । इतिहरिवंश ॥ काये ॥

भूताविष्ट । त्रि० पिशाचग्रस्ते ॥ भ

तात्रान्ते । भूतादिनारोगग्रस्ते ॥
भूतावेश । पुं० आवेशे । भूतसञ्चारे ॥
भूति । स्त्री० भस्मनि ॥ सम्पत्तौ ॥ हस्तिशृङ्गारे ॥ मांसपाकविशेषे ॥ उत्पातौ ॥ शिवस्याणिमाद्यष्टविधैश्वर्ये । अणिमामहिमाचैवलघिमा गरिमातथा । प्राप्तिः प्राकाम्यमीशित्व वशित्व चाष्टभूतय ॥ शम्भुधृतभस्मनि ॥ भूतृणे ॥ उत्पत्तौ । जातौ ॥ वृद्धिनामौषधे ॥ रोहिषतृणे ॥ विभूतौ ॥ भवनम्०भूतिः ॥ स्त्रियां क्तिन् ॥ भवत्यनया । क्तिच्वा ॥
भूतिक । पु० यवान्यामोषधौ ॥ न० कटुफलौषधौ । घनसारे ॥ भूनिम्बे ॥ भूस्तृणे ॥ भवति । भू० । क्तिच्क्तौचसञ्ज्ञायामिति०क्तिच् । सञ्ज्ञायांकन् ॥
भूतिकाम । पु० ऐश्वर्याभिलाषिणि ॥
भूतिकील । पुं० भूखाते ॥
भूतिगर्भ । पुं० भवभूतिकवौ ॥
भूतिनिधानम् । न० धनिष्ठानक्षत्रे ॥
भूतिमान् । त्रि० ऐश्वर्ययुक्ते ॥
भूतिकम् न० भूनिम्बे ॥ यवान्याम् । कर्पूरे ॥ भूस्तृणे ॥ तृणे ॥
भूतृणम् । न० गन्धतृणे । गन्धखेडे । रौहिषे ॥ पु० रोहिषे । भूतिकौ । मालातृणे । सुगन्धरोहिष०ह०परिमलरुद्मणि०ह०आम्भ्रभावात्र सिद्धे ॥ भूतृणं कटुकतिक्ततीक्ष्णोष्णं रोचनं लघु । विदाहिदीपनं रूक्षमनेल्प मुखशोधनम् ॥ बहुश्च वकृविट्कच्छपित्तरक्तप्रदूषणम् । भुवस्तृणम् ॥
भूतेश । पु० शिवे । सर्वभूतनियन्तरि ॥ भूतानाप्रमथादीनांवालग्रहाणां प्राणिनाबाईश ॥
भूत्तमम् । न० स्वर्णे ॥ भुविउत्तमम् ॥
भूदारीभवा । स्त्री०आखुकर्ण्याम् ॥
भूदार । पुं० वराहे । सूकरे ॥ भुवन्दारयति । दृ० कर्मण्यण् ॥
भूदेव । पु० ब्राह्मणे । ब्राह्मणोजङ्गमामूर्त्तिः श्रीविष्णोः परमात्मन । अतएवहिविख्याताभूदेवास्तेमहारते । भुव भुविवादेव ॥
भूधन । पु० राज्ञि ॥ कृषीवले ॥
भूधर । पु० पर्वते । महीध्रे ॥ धरति धृञ् पचाद्यच् । भुवोधर । यन्त्रविशेषे ॥ यथा । जलकच्छपपातालदोलाभूधरवालुका । वकाद्यायन्त्रभेदास्युरितिशब्दचन्द्रिका ॥
भूधात्री । स्त्री० भूम्यामलक्याम् ॥ भूधात्रीवातकृत्तिक्ताकषायामधुराहिमा । पिपासाकासपित्तास्रक्कफकण्डुक्षतापहा ॥
भूध्र । पु० पर्वते ॥ भुवन्धरति । धृ-

अ० । मूलविभुजादित्वात्क ।

भूनाग । पु० उपरसविशेषे । क्षिति नागे ॥

भूनिम्ब । पु० क्षुपविशेषे । किराततिक्ते । चिरायता० इ० भा० ॥ भुवोनिम्बइव ॥

भूनीप । पु० भूमिकदम्बे । भूकदम्बे । लघुपुष्पे ॥ भिकदम्बा . का टूष्णाश्चवृष्यादोषत्रयापहा । काषायतिक्ता . पित्तघ्नावीर्यवृद्धिकरा परा : ॥

भूनेता पुं० राज्ञि । भुवोनेतानायकः ॥

भूप : । पुं० राजनि ॥ भुवपाति । पा रक्षणे । आतोनुपेतिक । १६ सख्यायाम् ॥

भूपति । पुं० नृपे । राज्ञि ॥ भूपृथ्वीयस्यपत्नीसतुभवतिकथ भूपती रामचन्द्र । इतिरामायणे सीतायी वाक्यम् ॥ भुव . पति ॥ वृक्ष भेषजे ॥

भूपद । पुं० वृक्षे ॥ भुविपदानियस्य ॥

भूपदी । स्त्री० मल्लिकायाम् । बेली० इ० भा० ॥ भुविपदमस्या. । गौरादि ॥

भूपलाश । पु० वृक्षविशेषे । विशाली इ० गौ० दे० भा० ॥ भुव • पलाश ॥

भूपाटला । स्त्री० भूपाटल्याम् ॥

भूपाटली । स्त्री० भूकुसुम्भ्याम् । रक्तपुष्पिकायाम् ॥ भुव पाटली ॥

भूपाल । पुं० राज्ञि ॥ भुवपालयति । पालरक्षणे । कर्मण्यण् ॥ यथा । राज्यं पालयतेनित्य सत्यधर्मपरायणः । निर्जित्यपरसैन्यानिक्षितिधर्मेणपालयेत् ॥

भूपुत्री । स्त्री० सीतायाम् ॥ भुव पुत्री ॥

भूपेष्ट । पु० राजादनीवृक्षे ॥

भूबदरी । स्त्री० लघुबदर्याम् । क्षितिबदर्याम् । झडबेरी० इ० भा० ॥

भूभर्त्ता । पुं० नृपे ॥ भुवोभर्त्ता । पत्यर्थभर्तृशब्दस्ययाजकादित्वात्० याजकादिभिश्चेतिसमास । तेन० षष्ठी । पतिश्च० भर्त्तस्यभर्त्तेतिवत्० तृजकाभ्याकर्त्तरीति०नसमासनिषेध ॥

भूभुक् । पु० राज्ञि ॥ भुवभुनक्तिपालयति । भुज० । क्विप् ॥

भूभृत् । पु० अद्रौ । गोत्रे । गिरौ ॥ महीपतौ ॥ भुवविभर्त्ति । डुभृञ० । क्विप् तुक् ॥

भूमा । पु० बहुत्वे ॥ भूमामहान्निरतिशयवच्छिन्नपर्यायः । ० इतिभाष्यम् । सकलसांसारिकव्यवहाराभाराभावोपलक्षितेतत्त्वे । ब्रह्मणि ॥ यत्रनान्यद्विजानातिनान्यद्यत्रशृणोतिच । नान्यत्पश्यतियस्मिन्वैस भूमाप्रोच्यतेश्रुतौ ॥ योभूमासोऽमृत प्रोक्त सुखनाल्पे विचारय— बहोर्भाव । पृथ्वादित्वादिमनिच्

। वक्षोर्लोमोभूचवक्षो ॥ त्रि० बहु त्वविशिष्टे ॥

भूमय त्रि० मृदात्मके । भूमिमये

भूमयी । स्त्री० सूर्यपत्नराम् ॥ छाया याम् ॥

भूमि । स्त्री० स्थानमात्रे वसुन्धरायाम् । क्षितौ । अचलायाम् । रसाया म् । स्थिरायाम् ॥ विष्णुर्भूमिस म्पूज्योवाच । सर्वाधाराभवशुभेस र्वैं सम्पूजितासुखम् । मुनिभि र्मनुभिर्देवै सिद्धैश्चदानवादिभि ॥ अम्बुवाचीत्यागदिनेगृहारम्भेप्रवेश ने । वापीतडागारम्भे चगृहेचकृषि कर्मणि । तवपूजाकरिष्यन्तिमहरेण सुराद्य । मूढायेनकरिष्यन्तिया स्यन्तिनरकचते । इति ॥ अम्बुवा चीत्यागदिनेगृहारम्भेप्रवेशने । तस्मि न्नदिनेतवपूजाकरिष्यन्तीत्यन्वय ॥ अष्टा गुणामहाभारते मोक्षधर्मे यथा । भूमेस्थैर्यंगुरुत्वञ्चकाठिन्य प्रसवार्थता । गन्धोगुरुत्व शक्तिश्चस ङ्घात स्थापनाधृति ॥ इति ॥ अस्यार्थ । स्थैर्यंमचाञ्चल्यम् १ । गुरुत्व पतनप्रतियोगीगुण २ । का ठिन्यम् ३ । प्रसवार्थता० धान्या- द्युत्पत्तिस्तदर्थता ४ । गन्ध ५ । गुरुत्त्व पिण्डपुष्टि ६ । शक्ति ग न्धग्रहणसामर्थ्यम् ७ सङ्घात ० श्लिष्टावयवत्त्वम् ८ । स्थापना०मनु

ष्याद्याश्रयत्वम् ९ । धृति पाञ्च भौतिकेमनसियोधृत्व श १० । इ ति ॥ षष्टिवर्षसहस्राणिस्वर्गेतिष्ठति भूमिद । उच्छेत्ताचानुमन्ताचता न्निनरकवसेत् ॥ योगिनामवस्था विशेषे ॥ यथा । निरुद्धे चेतसिपुरा सविकल्पसमाधिना । निर्विकल्प- समाधिस्तुभवेदत्रत्रिभूमिक ॥ व्यु त्तिष्ठतेस्ततस्त्वाद्येद्वितीयेपरबोधित । अन्ते व्युत्तिष्ठतेनैवसदाभवतितन्म- य ॥ एवप्राग्भूमिसिद्धावप्युत्तरो त्तरभूमये । विधेयाभगवद्भक्तिस्तांवि नासानसिध्यति ॥ भवन्त्यस्याभूता नि । भूसत्तायाम् । भुव किदि ति० मि ॥

भूमिकदम्ब । पु० कदम्बविशेषे । भू नीपे । भूमिजे । लघुपत्रे । वृत्तपु ष्पे । विषघ्ने ॥

भूमिकन्दली । स्त्री० कन्दल्याम् । द्रो णपर्णाम् ॥

भूमिका । स्त्री० रचनायाम् ॥ वेशान्त रपरिग्रहे । रूपान्तरस्वीकारे यथा । हहेमचन्द्र । पाचाणिनाम्बेऽधि- कृतास्तद्दृशास्तुभूमिका । इ, ति ॥ ज्ञानिनामवस्थाविशेषे ॥ यथाहु । ज्ञानभूमि शुभेच्छा- ख्याप्रथमासमुदाहृता । विचारणा द्वितीयास्यात् तृतीयातनुमानसा । सत्त्वापत्तिश्चतुर्थीस्या त्ततोऽससक्ति

नामिका ॥ पदार्थभावनाषष्ठीसप्तमी तुर्यगास्मृतेति भूमिकानामचित्तस्यावस्थाविशेषः । अत्रभूमिकात्रितयन्त्वविद्यासाधनमेव॰ नतुत्रस्यावि द्याकोटावन्तर्भाव॰ भेदसत्यत्वबुद्धेरवस्थत्वात् । यश्चचतुर्थभूमिकांप्राप्त सब्रह्मविदित्युच्यते। पञ्चमभूमिर्निर्विकल्पातद्यातस्यां स्वयमेवव्युत्तिष्ठति॰ सोयंब्रह्मविद्वर षष्ठभूमौपार्श्वस्थबोधितो व्युत्तिष्ठति॰ सोयंब्रह्मविद्वरीयान् । तदेतद्भूमिद्वयसुषुप्तिरितिचाभिधीयते ॥ असम्प्रज्ञातप्रतिपादकानि योगशास्त्राणिसप्तभूमिकाप्राप्तं योगिन्यवपर्यवस्यन्ति॰ सोयमीदृशोयोगोव्युत्थानरहितोनिर्विकल्पकसमाधिस्थ परमहंस सप्तमभूमौब्रह्मविद्वरिष्ठइतिचोच्यते॥ इति ॥ भूमिकापञ्चकमप्याहुः । यथा। क्षिप्तमूढविक्षिप्तमेकाग्र निरुद्धमिति ॥ तत्र॰ आसुरसम्पल्लोकशास्त्रदेहवासनानुवर्त्तमानचित्त क्षिप्तभूमिकानिद्रातन्द्रादिग्रस्त चित्तमूढभूमिका कदाचिद्ध्यानयुक्तचित्त क्षिप्ताद्विशिष्टतयाविक्षिप्तभूमिका । तत्रक्षिप्तमूढयो समाधिस्यशङ्कैवनास्ति॰ विक्षिप्तं तुसमाधिस्यशक्यतदितरत्भूमिकाद्वयसमाधि ॥ एकाग्रे मनसिसद्भूतमर्थंप्रद्योतयति॰ क्लेशान्क्षिणोति॰ कर्मबन्धनानिश्लथयति॰ निरोधमभिमुखीकरोति॰ इतिसम्प्रज्ञातोयोग एकाग्रभूमिका । सर्ववृत्तिनिरोधरूपासम्प्रज्ञातसमाधि॰ निरुद्धभूमिकेति ॥

भूमिकुष्माण्डी । स्त्री॰ लताविशेषे । विदार्याम् ॥

भूमिखर्जूरिका । स्त्री॰ क्षुद्रखर्जूर्याम् ॥ भूमिखर्जूरिकास्वाद्वीदुरारोहाम्रदुच्छदा । अयस्कान्तफलाकारकर्कटीस्वादुमस्तका ॥ पिण्डखर्जूरिकात्वन्यासादेशेपश्चिमेभवेत् ॥

भूमिखर्जूरी । स्त्री॰ भूमिखर्जूरिकायाम् ॥

भूमिगृहम् । न॰ बद्धयतनागृहे ॥

भूमिचम्पक । पु॰ पुष्पवृक्षविशेषे । ताम्रपुष्पे । सन्धिवर्ध्ये । द्रुघणे भुँइँचाँपा॰ इ॰ भा॰॥ भूचम्पा॰ इ॰ भा॰ ॥ अस्यमूलव्रणपाककारकम् ॥

भूमिच्छत्रम । न॰ शिलीन्ध्रे ॥

भूमिज । पुं॰ नरकासुरे । अङ्गारके । कुजे । भौमे ॥ भूमिकदम्बे ॥ मनुष्ये ॥ न॰ गौरसुवर्णे ॥ भूमेर्भूमौवाजात । वाच्य॰ । ॥

भूमिजगुग्गुलुः । स्त्री॰ आशापुरसम्भवे । दैत्यमेदजे । महिषासुरसम्भवे । आशापुरीगूगुल॰ इ॰ भा ॥

तिक्तोसौकटुरुष्णश्च कफवातहरस्तथा। उमाप्रियश्चभूतघ्नोमेध्य सौरभ्यदायक ॥

भूमिजम्बु । स्त्री० भूमिजम्बुकायाम्। नादेय्याम्॥ भूमेर्जम्बु ॥

भूमिजम्बुका। स्त्री० क्षुद्रजम्ब्वाम्। नादेय्याम्॥ ह्रस्वत्वात्स्वार्थेकन्॥ यद्वा भूमिजम्बाजम्बुका। शाकपार्थिवादि । भूमिलग्नपत्रत्वात्॥

भूमिजम्बू । स्त्री० क्षुद्रजम्ब्वाम्। ह्रस्वफलायाम्। भ्रमरेष्टायाम्। पिकभक्ष्यायाम्। काष्ठजम्ब्वाम्॥

भूमिजा। स्त्री० जनकात्मजायाम। सीतादेव्याम्॥ भूमेर्जाता। जनी० । ड । टाप्॥

भूमिजीवी। स्त्री० विशि॥

भूमिदानम्। न० दानोत्तमे॥ यथा। द्वचुभि सन्तताभूमियवगोधूमशालिनीम्। ददातिवेदविदुषेसन भूयोभिजायते॥ भूमिदानात्परदान नभूतनभविष्यतीति॥

भूमिदेव । पु० ब्राह्मणे। भूदेवे॥ भूमेर्भूमौवादेव ॥

भूमिप । पु० राजनि॥

भूमिपक्ष । पु० वाताश्वे॥

भूमिपिशाच । पुं० तालवृक्षे॥

भूमिपिशाची। स्त्री० माधवीलतायाम्॥

भूमिपुत्र । पु० आरे। मङ्गले॥ भूमेपुत्र

भूमिमण्ड । पु० अष्टपादिकायाम्। मदनमाली० हारमाली० इ० गौ० दे० भा०॥

भूमिमण्डपभूषणा। स्त्री० माधवीलतायाम्। अतिमुक्ते। पुण्ड्रके॥

भूमिमान्। त्रि० भूमिविशिष्टे। यवादित्वाद्वत्व न॥

भूमिरक्षक । पु० वाताश्व॥

भूमिलाभ । पु० मृत्यौ॥ भूमेर्लाभो येन॥ भूमिप्राप्तौ॥

भूमिलेपनम्। न० गोमये॥ भूमेर्लेपनंयेन॥ भूमेर्लेपे॥

भूमिवर्द्धन । पु० न० शवे।

भूमिसम्भवा। स्त्री० सीतायाम्।

भूमिसुत । पु० मङ्गलग्रहे। नरकासुरे। भूमे सुत ।

भूमिसुता । स्त्री० जानक्याम्॥

भूमिस्पृक्। पुं० मानवे ॥ वैश्ये॥ चौरविशेषे॥ अन्धे॥ खञ्जे॥ भूमिं स्पृशति। स्पृशस्पर्शने। स्पृशोऽनुदकेक्विन्॥

भूमी। स्त्री० भूमौ। क्षितौ॥ भवति। भू० भुव किदितिमि०। कृदिकारादक्तिनइति०ङीष्॥

भूमीन्द्र । पु० नृपे। राजनि॥

भूमिरुह । पु० वृक्षे॥ यथा। दीर्घास्तापयुतायथाविरहिणीश्वासास्तथा वासरायामिन्यश्चपलायथाकुलवधू

हष्टि सरोषाप्रिये । छायावाञ्छा तमानवोढवनितावाणीवभूमीरुहा निष्पन्दा मुचिरायथामिलितयो र्यूनोर्मिथोहष्टय ॥

भूमीसह । पु० द्रुमान्तरे । हारद्रा ती ॥ भूमीसहस्तुशिशिरोरक्तपित्त प्रसादन ॥

भूम्यामलकी । स्त्री० क्षुपविशेषे । बहु पुष्पाम् । अडायाम् । अध्यण्डाया म् । तामलक्याम् । भूँइआमला इ० भा० ॥

भूम्यामली । स्त्री० तमाल्याम् चा रक्याम् । भूम्यामलक्याम् । भुइँआ मलाइ० गौ० दे० भा० ॥ अरुनेली० इ० भा० ॥

भूम्याहुल्यम् । न० कुछकैतौ । छुपे । मार्कण्डीये । महौषधे । भुजित खड० । इ० भा० ॥

भूय । अ० अधिकारे । पुनरर्थे ॥

भूयान् । त्रि० बहुतरे । प्रचुरे ॥ अ- परिमितमहिमनि ॥ अयमनयोर तिशयेनबहु । द्विवचनविभज्योप पदेतरवीयसुनाविति० ईयसुन् । ब होर्लोपोभूचबहो ॥ स्त्री० भूयसी अतिमहत्याम् ॥ ङीप् ॥

भूयिष्ठ । त्रि० प्रचुरे । बहुतमे ॥ अ यमेषामतिशयेनबहु । अतिशायने इष्ठन् । इष्ठस्ययिट्चेति० बहो पर स्य इष्ठस्यलोप ० यिडागमश्च० बहो स्थाने भूरादेशश्च ॥

भूयुक्ता । स्त्री० भूमिखर्जूर्याम् ॥

भूयोभूय । वारंवारमर्थे ॥ यथा । भू योभूयोभाविनोभूमिपालान्नत्वान त्वायाचतेरामचन्द्र । सामान्योयं धर्मसेतुर्नृपाणां कालेकालेपालनी योभवद्भिरिति ॥

भू' । अ० रैफान्तमव्ययम् । भूर्लोके ।

भूरि । पु० वासुदेवे । हरे ॥ परमे ष्ठिनि ॥ न० सुवर्णे ॥ त्रि० प्राज्ये । प्रचुरे ॥ भवति० भूयतेवा । भुस त्तायाम्० प्रासीवा । अदिशदिभूशु भिभ्य क्रिन ॥

भूरिगन्धा । स्त्री० पुरामामनिगन्धद्र- व्ये । गन्धाढ्यायां ॥

भूरिगम' । पु० खरे । गर्दभे ॥

भूरिदावा । पु बाहुदातरि ॥

भूरिपत्र । पु० उखवालतृणे ॥

भूरिपलितदा । स्त्री० पाण्डुरफल्या म् ॥

भूरिपुष्पा । स्त्री० शतपुष्पायाम् ॥

भूरिप्रेमा । पुं० चक्रवाके ॥

भूरिफेना । स्त्री० सप्तलायाम् । च र्मकषौषधौ ॥ भूरय फेनाय- स्या ॥

भूरिबला । स्त्री० अतिबलायाम् ॥ भूरिबलसामर्थ्यं यस्याम् ॥

भूरिभाग । त्रि० महाभाग्ये ॥

भूरिमल्ली । स्त्री० अम्बष्ठायाम् ॥

भूरिमाय । पु० शृगाले ॥ भूरयो मायायस्य ॥

भूरिरस । पु० इक्षौ ॥ ॥

भूरिश । अ० बहुशब्दस्यार्थे । बह्वर्थाच्छस्कारकादन्यतरस्याम् ॥

भूरिश्रवा । पु० चन्द्रवंशीयसोमदत्तपुत्रे ॥ त्रि० बहुयशोविशिष्टे । भूरिप्रचुरश्रवीयशोयस्य स ॥

भूरुण्डी । स्त्री० श्रीहस्तिन्याम् । हस्तिकर्णपत्रायाम् ॥ शाकविशेषइतिस्वामी । भुवरुण्डयति० आच्छादयति । रुटिलुटिस्तेयकरणे० इत्यत्र० माधवीयायाहत्तौ० रुडिलुडीत्यपरे० इतिपाठान्तरमुपन्यस्तम । कर्मण्यण् ॥

भूरुट् । त्रि० भूरुहे ॥ भुविरोहयति । रुहजन्मनिप्रादुर्भावे । क्विप् ॥

भूरुह । पु० वृक्षे ॥ रोहति । रुह० । इगुपधेतिक । भुविरुह सप्तमीसमास ॥

भूर्ज । पु० मृदुत्वचि । भूतघ्ने । रक्षापत्रे । भोजनपत्र इतिभाषा भूर्जोभूतग्रहघ्नश्चकर्णरुक्पित्तरक्तजित् । कषायोरावमघ्नश्चमेदोविषहर पर ॥ अर्जनमूर्ज ऊर्जबलप्राणनयो । घञ् । भूअर्जोऽस्य ॥

भूर्जकण्टक । पुं० सङ्करजात्यन्तरे । ब्रात्याद्ब्राह्मणात्सवर्णायामुत्पन्ने । आवन्त्ये ॥

भूर्जपत्र । पु० ) स्वनामख्यातप्रसि-
भूर्जपत्रक । पु० ) द्धे । मृदुत्वचि ॥

भूर्मि । स्त्री० भूमौ । पृथिव्याम । मरुभूमौ ॥ विभर्त्ति । डुभृञ्० । घृणिपृश्निपार्ष्णिचूर्णिभूर्णीति० विभर्त्तेरुत्व निप्रत्ययश्च ॥

भूर्लोक । पु० अन्तरीक्षादधोलोके । सप्तद्वीपसमुद्रसन्निवेशविशिष्टे ॥ पृथिव्याम् । मर्त्यलोके ॥ अस्यलक्षणं । यथा । पादगम्यञ्चयत्किञ्चित् वस्त्वस्तिपृथिवीमयम् । सभूर्लोक समाख्यातोविस्तारोऽस्यमयोदित ॥ इ० वि० पु० २ अंश ५ अध्याय । विस्तारोमयोदितइति । सर्वतो लोकालोकावधि पञ्चविंशतिकोटिप्रमाण ॥ भू सन्नकोलोक ॥

भूलग्ना । स्त्री० शङ्खपुष्प्याम् ॥

भूलता । स्त्री० किञ्चुलुके ॥

भूवायु । प० आवहाभिधेपवने । भूमेर्वंहिर्द्वादशयोजनान्यस्यस्थानमत्र । श्वुद विद्युदादयश्चरन्तीतिशिरोमणि ॥

भूशय । प० नकुलगोधादौ ॥ विष्णौ ॥ लङ्काप्रतिमार्गान्वेषणंकुर्वन् समुद्र प्रतिव्रताचरणायतदुपकण्ठे भूमौशितेदाशरथिरूपेणेतिभूशय । अधिकरणेशीतेरित्यच्प्रत्यय ॥ तथाचरामायणम् । तत , सागरवेलायादर्भानास्तीर्यराघव , । अञ्ज-

लिप्राङ्मुख कृत्वाप्रतिशिष्य मही दृधेरिति ॥

भूशेलु । पु० भूकर्बुदारे ॥

भूषणम् । न० अलङ्कारे ॥ तद्धारणफलं यथा भूषणं भूषयेदङ्गं यथाभोग्यविधानतः । शुचिसौभाग्यसन्तोषदायकं काञ्चनं स्मृतम् ॥ ग्रहदृष्टिहरं पुष्टिकरं दुःस्वप्ननाशनम् । पापदौर्भाग्यशमनं रत्नाभरणधारणम् ॥ माणिक्यं तरणेः सुजात्यममलं मुक्ताफलं शीतगोर्माहेयस्य च विद्रुमो निगदितः सौम्यस्य गारुत्मतम् । देवेज्यस्य च पुष्परागमसुराचार्यस्य वज्रं शनेर्नीलं निर्मलमन्ययोश्च गदिते गोमेदवैदूर्यके ॥ वासः स्रग्गन्धरत्नानां धारणं प्रीतिवर्द्धनम् । रक्षोघ्नमर्घ्यमोजश्च सौभाग्यकरमुत्तमम् ॥ भूष्यतेऽनेन । भूष अलङ्कारे । ल्युट् ॥ भूषयति वा । क्रुधमण्डार्थेभ्यश्चेति भूषेर्युच् ॥ यत्तौ नाभूषणत्वाज्ञानसन्तोषोऽहिद्विजन्मनाम् । उद्यमश्च तु हननं भूषणं भूतिमिच्छतामिति पारिभाषिकम् ॥

भूषा । स्त्री० अलङ्क्रियायाम् । अलङ्कारसाध्यशोभायाम् ॥ भूषणम् । गुरोश्चेत्यः ॥

भूषित । त्रि० अलङ्कृते । मण्डिते ॥ भूष्यतेस्म । भूष० । क्तः । इट् ॥ भूमावुषिते ॥ भुवि उषित · स्थित

भूषिता । स्त्री० अलङ्कारैरलङ्कृतायाम् । मण्डितायाम् ॥ टाप् ॥

भूष्णु । त्रि० भविष्णौ । भवनशील । भू० । ग्लाजिस्थश्च ग्स्नुः · चाद्भुवः । क्ङिति चेत्यगकारप्रश्लेषाद्गुणाभावः ॥

भूसुत । पु० भौमे । मङ्गलग्रहे ॥ नरकासुरे ॥

भूसुता । स्त्री० सीतायाम् । जानक्याम् ॥

भूसुर । पु० ब्राह्मणे ॥

भूस्तृणम् । न० भूतृणे ॥ अस्य पर्यायगुणाश्च यथा । गुह्यबीजश्च भूतीकसुगन्धं गोमयप्रियम् । भूस्तृणन्तु भवेच्छत्रामालातृणकमित्यपि ॥ भूस्तृणं कटुकं तिक्तं तीक्ष्णोष्णं रोचनं लघु । विदाहि दीपनं रूक्षमवल्यं मुखशोधनम् ॥ अवृष्यं वहुविट्कं च पित्तरक्तप्रदूषणम् ॥ इति ॥ भुवस्तृणम् । पारस्करादित्वात्सुट् ॥ मालवदेशप्रसिद्धे · शाकविशेषे ॥

भूस्पृक् । पुं० मर्त्ये । पञ्चजने । मनुष्ये ॥ भुवस्पृशति । स्पृश० । क्विन् ।

भूस्वर्ग । पुं० सुरपर्वते । सुमेरौ ॥

भूस्वामी । पु० भूपतौ ॥ भुवः स्वामी ॥

भूकुंसः । पुं० स्त्रीवेशधरनर्त्तके । भ्रुकुंसे ॥ पटपुटे तिष्ठन्ती शोभां अणार्थकुंसिधातोर्भ्रुरादिश्चान्तात्

एरच । भ्रुवाकुसोभावश्चमस्य । पृषोदरादि ॥

भृकुटि । स्त्री॰ भ्रुकुट्याम् । क्रोधादिनाभ्रुव कौटिल्ये ॥ कुटकौटिल्ये । इगुपधात्किदिति॰ इन् । भ्रुवो कुटि । पृषोदरादित्वातऋकार ॥

भृकुटी । स्त्री॰ भ्रुकौटिल्ये । क्रोधादिनाललाटसङ्कोचने ॥ कुट॰ । इगुपधादिति॰ इन् । कृदिकारादितिङीष् । पृषोदरादित्वाद् ऋकार ॥

भृगु । पु॰ ब्रह्मणस्त्वचोजाते महर्षिविशेषे । महर्षीणाभृगुरहमितिभगवद्वचनाद्भगवद्विभूतौ । मनुपुत्रे ॥ वरुणतनये ॥ अग्नेर्भ्रष्टाट्रेतसउत्पन्नत्त्वात्भृगु ॥ हरे । शिवे ॥ शुक्राचार्ये ॥ यमदग्नौ ॥ सानौ । निरवलम्बनपर्वतपार्श्वे । यस्मात्पतने ऽवलम्बनक्रियाविशेषोनास्ति । तत्पर्यायौ । प्रपात । अतट । इति ॥ भृज्जति॰ तपसा॰ भृज्यतेवा । भ्रस्ज पाके । प्रथिम्रदिभ्रस्जासम्प्रसारणसलोपश्चेति॰ भ्रस्जे कुप्रत्यय॰ सम्प्रसारणभ्रस्जे सलोपश्च न्यङ्क्वादित्वात्कुत्वम् ।

भृगुकच्छ । पुं॰ शककारकवलेर्जन्मस्थानपत्तनविशेषे ॥

भृगुतुङ्गम् । न॰ तीर्थविशेषे ॥

भृगुपति । पुं॰ परशुरामे ॥

भृगुप्रस्रवण । पु॰ हिमवत पादे ॥

भृगुभवा । स्त्री॰ भार्ग्याम् ॥

भृगुषट्क । पु॰ योगविशेषे ॥ लग्नात्षष्ठोभवेच्छुक्रोभृगुषट्क इतीरित

भृगुसुत । पु॰ शुक्रग्रहे ॥

भृगूणापति । पु॰ परशुरामे ॥

भृङ्ग । पु॰ भ्रमरे । मधुव्रते । भृङ्गराजे ॥ धूम्याटे । कलिङ्गपक्षिणि । फिङ्गा॰ इ॰ गौ॰ दे॰ भा॰ भृङ्गइवकृष्णत्वात्॰ भृङ्ग ॥ पिङ्गे ॥ न॰ गुडत्वचि । त्वक्पत्रे ॥ अभ्रके ॥ विभक्तौ । डुभृञ्॰ । भृञ किन्नुट्चेति॰गन् ॥

भृङ्गक । पु॰ राजवासनपक्षिणि ॥

भृङ्गजम् । न॰ अगुरुणि ॥

भृङ्गजा । स्त्री॰ भार्ग्याम् ॥

भृङ्गपर्णिका । स्त्री॰ सूक्ष्मैलायाम् ॥

भृङ्गप्रिया । स्त्री॰ वासन्त्याम् । माधवीलतायाम् ॥ भृङ्गाणाप्रियेव ॥

भृङ्गमूलिका । स्त्री॰ भ्रमरच्छल्याम् लतायाम् ॥

भृङ्गरज । पु॰ भृङ्गराजे ॥ भृङ्गइव

रजोऽस्य ॥

भृङ्गरजा । पु० भृङ्गराजे ॥ भृङ्ग इवरजोऽस्य ॥

भृङ्गराज । पु० मार्कवे । कुन्तल वर्द्धने । केशरञ्जने । भ गरा० इ० भा० ॥ भृङ्गराज कटुस्तिक्तो रूक्षोष्ण कफवातनुत् । केश्यस् त्वच्य ' कृमिश्वासकासशोथामपा गडुनुत् ॥ दन्त्योरसायनोबल्य कुष्ठनेत्रशिरोर्त्तिजित् ॥ पक्षप क्षिविशेषे ॥ भ्रमरे ॥ वृक्षविशेषे ॥ भृङ्गइवराजते । राजृदीप्तौ । अच् ॥

भृङ्गराजादिचूर्णम् । न० भैषज्यर त्नावल्युक्ते चूर्णविशेषे ॥ यथा । शुच्चोक्तन भृङ्गराजस्यचूर्णं ति लार्द्धक चामलकार्द्धकञ्च । समर्क र भक्षयतो गुडेवानतस्यरोगोनजरा नमृत्यु ॥ अश्व पञ्चेन्द्रमनरद्वि तोमत्तमातङ्गगामीमृकौवागमी श्रवण रहितोदूरशब्दानुसारी । नौ रुगमर्त्योभवतिपलितोनीलजीमूत केशोजीर्णादन्ता . पुनरपिनवा श्री रगौराभवन्तीति ॥

भृङ्गरिट । पुं०
भृङ्गरिटि । पु०
भृङ्गरीट पु० } शिवद्वारपाले ॥

भृङ्गरौल ' । पु० कौटान्तरे । विषस्त्र क्तायाम् । वरोलि । हन्याघटप्दे । ०भौमकल इ० गौ० भा० ॥

भृङ्गवल्लभ । पु० भूमिकदम्बे ॥ धाराकदम्बे ॥

भृङ्गवल्लभा । स्त्री० भूमिजम्ब्वाम् ॥

भृङ्गसोदर । पु० केशराजे । नाग मारे ॥

भृङ्गानन्दा । स्त्री० यूथिकायाम् ॥

भृङ्गाभीष्ट । पुं० आम्रवृक्षे । रसा- ले ॥ न० आम्रमुकुलफलयो ॥

भृङ्गार । पु० कनकालुकायाम् । स्वर्णघटितजलपात्रे । भृङ्गराज । मार्कवे ॥ बिभर्त्ति जलम् । डुभृ- ञ् ० । भृङ्गारभृङ्गारावितिसा धु ॥ न० लवङ्गे ॥ काञ्चने ।

भृङ्गारि । स्त्री० केविकापुष्पे ॥

भृङ्गारिका । स्त्री० झिल्लिकायाम् ॥

भृङ्गारी । स्त्री० झिल्लिकायाम् । झीं गुरइतिख्याते कीटे । भृङ्गभृङ्ग रू पमाराति । रादाने । मूलविभुजा दित्वात्क । गौरादि । यद्वा । बिभर्त्ति । डुभृञ् ० । भृङ्गारभृङ्गा रावितिo भृञ्भारन्o नुम्o गुक्o- त्त्वस्य ॥ यद्वा ' रूपेणभृङ्गमृच्छ- ति । ऋगतौ । कर्मण्यण् ॥

भृङ्गाह्व । पु० जीवके ॥ भृङ्गराजे ॥

भृङ्गाह्वा । स्त्री० भ्रमरच्छल्ल्याम् ॥

भृङ्गि । पुं० भृङ्गिणि । शिवद्वा स्थे ॥

भृङ्गिणी । स्त्री० वटीवृक्षे ॥

भृङ्गी । पुं० शिवद्वारपालविशेषे । अ स्थिविग्रहे । नाडीदेहे ॥ वटद्रौ ॥

भृङ्गी । स्त्री० अतिविषायाम् ॥ गौरादित्वान् ङीष् ॥

भृङ्गीफल । पु० आम्रातकवृक्षे ॥

भृङ्गीश । पु० महादेवे । शिवे ॥

भृङ्गेरिटि । पु० भृङ्गरीटे । भृङ्गिणि ॥

भृङ्गेष्टा । स्त्री० काकजम्बाम् ॥ घृतकुमार्याम् ॥ तरुण्याम् ॥ भार्ग्याम् ॥

भृज्जन । पु० न० अम्बरीषे । भर्जनपात्रे ॥ भृज्जन्त्यत्र । भृस्जपाकि । भूसूधूभ्रस्जिभ्यश्छन्दसीति क्युन् ॥

भृत । त्रि० भरिते । धारिते ॥ वेतनेनक्रीते ॥ भृञ् । क्त ॥ भरणीये ॥ पुष्टे ॥

भृतक । पु० वेतनग्राहिकर्मकर्त्तरि । भृतिभुजि । कर्मकरे । वैतनिके ॥ सचत्रिविध । यथा । उत्तमस्त्वायुधीयोऽत्रमध्यमस्तुकृषीवल । अधमोभारवाहीस्यादित्येवत्रिविधो भृत ॥ इति ॥ भ्रियतेस्म । भृञ् भरणे । क्त । स्वार्थेक ॥ यद्वा । भृतिं करोति । तत्करोतीतिणिजन्तात्क्वुन् ॥

भृतकाध्यापक । पु० अपाङ्क्तेये० द्विजाधमे ॥ भृतक सन् योऽध्यापक ॥ अयमसर्वानर्थकत्वात् ॥

भृतकाध्यापित । पु० वेतनं दत्त्वापाठिते । अपाङ्क्तेयेद्विजाधमे ॥ भृतिवेतनम् । तद्ग्राहीभृतक । भृतक सन् योध्यापित सतथा ॥

भृति । स्त्री० भरणे । वेतने ॥ मूल्ये ॥ भ्रियन्ते कर्मकराअनया । भृञ् भरणे । कर्मणिभृतातिक्तिनि इंशात्क्तिन् ॥

भृतिभुक् । त्रि० भृतके । वैतनिके ॥ भृतिं वेतनं भुङ्क्ते । भुज० । क्विप् ॥

भृत्य । पु० किङ्करे । दासे ॥ भृत्याबहुविधाज्ञेयाउत्तमाधममध्यमा । नियोक्तव्यायथार्थं षु त्रिविधेष्वेवकर्मसु । भ्रियते । भृञ् ० । भृञोऽसञ्ज्ञायामितिक्यप् ॥ त्रि० पोष्ये । अवश्यभरणीयेवृद्धमातापित्रादौ ॥

भृत्या । स्त्री० भृतौ । वेतने ॥ भ्रियन्ते कर्मकराअनया० भरणंवा । भृञ्० । सञ्ज्ञायांसमजनिषदनिपतमनविदषुञ्शीङ्भृञिणइतिक्यप् ॥ चिकित्सायां ॥ यथा । कुमारभृत्याकुशलैरितिरघु ॥

भृमि । पु० वायुविशेषे । घुरन्वायु० इ० भाषा ॥ जलादिभ्रमणे ॥ भ्रमति० भ्राम्यतिवा । भ्रमुअनवस्थाने० भ्रमुचलनेवा । भ्रमे सम्प्रसारणञ्चेति० इन्० कित् ॥ भृमिभ्रमणशीलदरिद्रजनमितिवेदभाष्यम् ॥

भृशम्। न० अतिशये॥ त्रि० अतिश यान्विते॥ भृशति। भृशुभ्रंशुअध पतने। अन्तर्भावितण्यर्थादिगुपधे तिक॥

भृशम्। अ० प्रकर्षार्थे॥ शोभने॥

भृषत्ब्द्ध। पु० पाषाणे॥

भृष्टः। त्रि० अलोपसेकेनविनापक्वे॥ भूना० भुजैना० इ० भा०॥

भृष्टतण्डुल। पु० भर्जनविशिष्टधा न्यनिकरे। भूनाचावल० इ० भा० सुगन्धिः कफकारक. पित्तलोभृ ष्टतण्डुल॥

भृष्टमासम्। न० शूल्ये॥ भृष्टंचत न्मासच॥

भृष्टयव। पु० धानासु। वहुरी०इ० भा०॥ भृष्टश्चासौयवश्च॥

भृष्टान्नम्। न० भृष्टतण्डुले॥

भृष्टि। स्त्री० भर्जने॥ शून्यवाटिका याम्॥

भेक। पुं० मण्डूके। वर्षाभ्वि। मेघे॥ त्रि० भीरौ॥ बिभेति। ञिभी भये। इण्भीकेतिकन्॥

भेकट। पुं० मत्स्यवि०॥

भेकभुक्। पुं० कुम्भीनसे। सर्पे॥ भेकान्भुङ्क्ते। भुज०। क्विप्॥

भेकरावण। पुं० मेघे॥ भेकान्राव यति। रुशब्दे। नन्द्यादित्वाल्- ल्यु॥

भेकल। पुं० वनस्पतिविशेषे॥

भेकलि। पुं० मत्स्यविशेषे। भाकुन इ० गौ० दे० भा० प्रसिद्धे॥ भेक लिर्मधुर शीतोहृद्य श्च प्रकारो- गुरु॥

भेकी। स्त्री० भेकस्त्रियाम्। शिल्याम्। गण्डूपद्याम्। वर्षाभ्व्याम्॥ क्षुद्र मण्डूके॥ जातेरस्त्रीतिङीष्। म ण्डूकपर्ण्याम्॥

भेड। पुं० मेषे। मेढा० इ० भा०॥ इतिहै०॥

भेडी। स्त्री० भेडस्त्रियाम्॥

भेडीदुग्धम्। न० आविके॥

भेत्ता। त्रि० भेदकर्त्तरि॥ भिनत्ति। भिदिर्०। तृच्॥

भेद। पु० उपजापे। शत्रोरमात्या दीनामुपायेन० परतोविश्लिष्यात्म सात्करणे। ऐकमत्यं नाश्यितानारा जामात्यादीनांभयजननादिनापृथक्क रणे॥ तद्विशेषायथा। मत्स्यउवा च। परस्परन्तुयेदुष्टा क्रुद्धाभीता वमानिता। तेषाभेदंप्रयुञ्जीतभेद साध्याहितेमता.॥ येतुयं नैवदोषे णापरस्मान्नापराध्यति। तेनुतद्दोष पातेनभेदनीयाभृशन्तत॥ आत्मी यदर्शयेदाशमपरस्मादर्शयेद्भयम्। एव हिदर्शयेन्नित्यं यथावद्वशमानयेत्॥ संहताहिविनाभेदंशक्रेणापिसुदु स हाः। भेदमेवप्रशंसन्तितस्मान्नयवि शारदाः॥ स्वमुखेनाशयेन्नि दंभेदंपर

मुखेनच । परीक्ष्यसाधुमन्यन्ते भेद परसुखाच्छ्रुतम् ॥ भेद्या स्वकार्य मुद्दिश्यकुशलैर्येहिभेदिता . । भेदिता स्ते विनिर्दिष्टानैवराजार्थवादिभि ।। अन्त कोपोवहि कोपोयचस्था तामहीचितास् । अन्त कोपोम हॉस्तवनाशक पृथिवीचितास् ।। सामन्तकोपोवाह्यस्तुकोप प्रोक्तो मनीषिभि । महिषीयुवराजाभ्या तथासेनापतिर्द्विज । अमात्याम न्त्रिणश्चैवराजपुत्रास्तथैवच । अन्त कोपोविनिर्दिष्टोदारुण पृथिवी चिताम् ॥ वाह्यकोपेसमुत्पन्नेसुम हत्यपिपार्थिव . । शुद्धान्तस्तुमहा भागशीघ्रमेवजयीभवेत् ।। अपिश क्रसमोराजाअन्त कोपेननश्यति । अन्त कोपेसमुत्पन्नेतस्माद्रक्षे न्महीचिताम् ॥ परत कोपमुत्पा द्यभेदेनविजिगीषुणा । ज्ञातीना भेदन कार्यपरेषाविजिगीषुणा ।। रक्ष्यश्चैवप्रयत्नेनज्ञातिभिर्दस्तथा त्मन । ज्ञातय . परितप्यन्ते सत त परितप्ययम् ॥ तथापितेषाकर्त्त व्य सुग भीरेणचेतसा । ग्रहणदान मानाभ्याभेदस्तेभ्योभयकार ॥ नज्ञातिरनुगृह्णातिनज्ञातिर्दग्धु मिच्छति । ज्ञातिभिर्भेदनीयास्तु रिपवस्तेनपार्थिवै ॥ भिन्नाहि शक्यारिपव प्रभूता स्वल्पेन

सैन्येननिहन्तुमाजौ । सुसहता नाहिततस्तुभेद कार्यरिपूणानय शास्त्रविद्भि . ॥ इतिमात्स्येराज धर्मे १८७ अध्याय ॥ द्वैधे ॥ आपद्यात्मीयानात्मीययोर्भेद ॥ विशेषे ॥ विदारणे ॥ मन्त्रभेदे कार्यहानिरितिविद्दामतम् ॥ वे धे ॥ भिद्यमानभावे ॥ भेदनम् । भिदिर्० घञ् ॥ विरेके ॥

भेदकम् । न० व्यावर्त्तके । विशेष णे ॥ त्रि० नाशके ॥ विदारणे ॥ विरेचकौषधादौ ॥ पृथक्कारके ॥ यथा । भेदयति० अन्यपदार्थ पृथक्करोतीतिभेदकम् । नाम्ना। शिव गोत्रेणगार्ग्य । अपिच। भेद्यभेदकयो श्लिष्ट सम्बधोन्यो न्यमिष्यते । द्विष्ठायद्यपिसम्बन्ध षष्ठ्युत्पत्तिस्तुभेदकादितिभर्तृह- रि ॥

भेददर्शी । त्रि० अपराधिनि ॥ यथा । यदस्तितन्नजानातियन्नेहा स्तितदीक्षते । पूर्व्वमपरावीक्ष्य विद्यतेभेददर्शिन . ।। किञ्चजाग्र त्स्वप्नशीरविद्यावद्भिर्भ्रान्तैरुपलम्भा त्० सुषुप्तिसमाध्योर्भ्रान्त्यभावेऽ नुपलम्भान्मिथ्यात्वभेदस्यसिद्धमि त्यनुभवाच्चभेददर्शिनोमिथ्याज्ञादि तृत्वात्सापराधत्वमितिनिश्चय . ॥

भेदनम् । न० विदारणे ॥ भिदेल्यु

टः ॥ हिङ्गुलि ॥ पु० अम्लवेतसे ॥ सूकरे ।

भेदनिम्न । त्रि० ससारानुगे ॥

भेदित । त्रि० दारिते । भिन्ने ॥ भेद्यतेस्म । भिदिर्० । चुरादिण्यन्त । क्त ॥

भेदी । पु० अम्लवेतसे ॥ त्रि० भेदकर्त्तरि । तद्विशिष्टे च ॥

भेदुरम् । न० भिदुरे । कुलिशे ॥

भेद्य । त्रि० व्यावर्त्त्ये । विशेष्ये ॥ अमानितजने ॥ भेत्तुंशक्ये । विघट्टनीये । वाच्ये ॥

भेर । पु० पटहे ॥ बिभेत्यस्मात् । ञिभीभये । स्फायितञ्चीत्यादिना रन् ॥ भेर्याम् ॥ दुन्दुभौ

भेरि । पु० वाद्यप्रभेदे । करणाल- ० इ० भा० ॥ विभेत्यस्मात्स्वरात् । ञिभी० । वङ्क्र्यादयश्चेति० क्रिन । बाहुलकाद्गुणः ॥

भेरी । स्त्री० वृहड्ढक्कायाम् । आनके ॥ वाद्यविशेषे । करणालइति-ख्याते ॥ कृदिकारादक्तिनइतिपक्षेङीष् ॥ विभेतेःस्फायितञ्चीतिरन् ॥ गौरादित्वान्ङीष्० इतितुरामाश्रम ॥ वितस्तित्रयदीर्घाताम्रनिर्मिताचर्मच्छन्नाचतुर्विंशत्यङ्गुलवदनद्वयाभेरीतिकश्चित् ॥ अन्तस्त्रीकाढक्काभेरीतिस्वामी ॥

भेरुण्ड । पुं खगे ॥ त्रि० भयानके

भेरुण्डा । स्त्री० देवतान्तरे ॥ यक्षिणीविशेषे ॥

भेल । पु० प्लवे । डोंगा० इ० भा० ॥ जलतरणसाधने । मुनिविशेषे । त्रि० भीरौ । अज्ञे । बुद्धिविरहिते । मूर्खे ॥ बिभेत्यस्मात् । ञिभी । स्फायितञ्चीत्यादिना रन् । निपातनाल्लत्वम् । चञ्चले ॥

भेलक । पु० न० उडुपे । प्लवे । स्वल्पेजलतरणसाधने ॥ स्वार्थेक ॥

भेषजम् । न० औषधे । जाया ॥ भेषयति । भेषृभये । ण्यन्त । अच् । भेषरोगंजयति । जि० । अन्येभ्योपीतिड । भेषजायतिवा । जैत्रे । आतोनुपसर्गेक ॥ भिषजइदम् । तस्येदमित्यण् । अनन्तावसथेतिहभेषजादितिनिर्देशादत्वमित्यन्ये ॥ संसाररोगस्यसमाक्षात्कारणाभेषजत्वभेषजनिवर्त्तकत्वाभिन्नात्मज्ञानम् ॥

भेषजाङ्गम् । न० अनुपाने ॥

भैक्षम् । न० भिक्षाणिकुरम्बे ॥ भिक्षाणांसमूहः । भिक्षादिभ्योण् ॥ ब्राह्मणक्षत्रियविशश्चरेयुर्भैक्षमन्वहम् । सजातीयगृहेष्वेवसार्ववर्णिकमेववा ॥ सर्ववापिचरेद्ग्रामपूर्वोक्तानामसम्भवे । अन्त्यवर्ज्जंमहाभाग शास्त्रेष्वित्थंविनिश्चयः ॥ भैक्षे आपस्तिनीत्रस्तिकपवाससमाम्नाता ।

भैक्षचर्य्या । स्त्री० भिक्षासमूहाहरणे ॥

भैक्षजीविका । स्त्री० भिक्षयाजीवनो पाये पैशिडन्ये ॥ इतित्रिकाण्ड शेष ॥

भैक्षभुक् । त्रि० भैक्षाशिनि ॥ भैक्षभुनक्ति । भुज० । कर्त्तरिक्विप् ॥

भैक्षाण । पु० परिब्राजि । प्राणस सन्धारणार्थंयथाशास्त्रमाधूकरादि भिक्षाकुर्वाणे ॥

भैक्षुकम् । न० भिक्षुकवृन्दे ॥ भिक्षूणासमूह । खण्डिकादित्वादञ् ॥

भैमी । स्त्री० दमयन्त्याम् ॥ भीमतिथौ । माघशुक्लैकादश्याम् ॥ भीमो क्तलप्सिकाप्रभेदे ॥ यथा । श्रेष्ठगोधूमचूर्णप्रचुरघृतयुतनालिकेरेणसार्द्धं द्राक्षाखर्जूरशुण्ठीत्वचमरिचयुतशर्करापूर्णगर्भम् । पक्वा तास्मेक टाहेटलविटलटलेपावकेमद्दीप्ते धन्यैर्हैमन्तकालेसुजनपरिवृतैर्भुज्य तेलापनश्री । भीमस्येयम् । अण् । ङीप् ॥

भैरव । पु० शङ्करे । रुद्रे ॥ रागविशेषे ॥ नदविशेषे ॥ भयानकरसे ॥ भैरवपर्वतइतिप्रसिद्धे ॥ भैरवाख्यभैरवीदेवी ॥ सिद्धान्तविशेषे ॥ त्रि० भयानके । भीषणे । भीरोरिदम् । तस्येदमित्यण् ॥

भैरवी । स्त्री० देवताभेदे । चामुण्डायाम् ॥ रागिणीविशेषे । भैरव रागपत्न्याम् ॥

भैषजम् । न० भेषजे ॥ लावकपक्षिणि ॥

भैषज्यम् न० औषधे ॥ भेषजमेव । अनन्तावसथेतिष्भेषजाञ्ष्य

भो । अ० सम्बोधने ।

भोक्तव्य । त्रि० भोजनीये ॥ भोज्ये । यथा० । यत्नेनभगिनीहस्ताद्भोक्तव्य पुष्टिवर्द्धनम् ॥

भोक्ता । पु० पत्यौ ॥ शरीरेन्द्रियमनोभि संयुक्तआत्मनि०संसारिणि । अवस्थात्रयविशिष्टेजीवे ॥ भोक्तैवात्मानकर्त्तेतिसाङ्ख्या ॥ सुखादिभोगकर्त्ता० यथा कर्त्ताच देहीभोक्ताचआत्माभोजयितासदा । भोगोविभवभेदश्चनिष्कृतिर्मुक्तिरेवचेति ब्र० वै० पु० वैश्वानरेग्नौ ॥ सर्वेषायज्ञानातपसाञ्चकर्त्तृरूपेणदेवतारूपेणचभोगकर्त्तरि ॥ आनन्दमये ॥ वृत्ते सुखदुःखमोहात्मकान्प्रत्ययान्स्वरूपचैतन्येनप्रकाशयतीतिनिर्विकारएवोपलब्धरि ॥ त्रि० पालके ॥ भोगकर्त्तरि । भोजनकर्त्तरिचेतनेदेवदत्तादौ ॥ तस्य प्रकारोयथा । स्नात सुधौतमृदुसुन्दरशुक्लवासास्तत्कालधौतचरण सहपुत्र मित्रै । सर्व्वोप्रसन्नहृदयो रसपाकवेद्याभोक्ताविशेषचसततद्विसहास्यवेद्यो ॥ मृदुतूलमयेस्थूलेचासन

स्नावगुण्ठिते । आसनेप्राङ्मुखो-
भोक्तोपविश्याद्युदङ्मुख ॥ भुङ्-
क्ते । भुज० । तृच् ।

भोग । पुं० सुखे ॥ क्षुद्रसुखलवानु-
भवे ॥ सुखसाधनविषय० पञ्चस्पर्श
रस्यादौ ॥ नह्यनुत्साहवतामननु
तिष्ठतामलसानां भोगप्राप्तिर्लोकेदृ-
ष्टेतिपूज्यपादा ॥ सुखादिप्रत्यये ।
सुखदुःखानुभवे ॥ धने ॥ अहे
शरीरे ॥ अहेरितिप्रयोगबाहुल्याभि
प्रायम्० भोगशब्दस्यशक्तिस्तुशरीरमा
त्रे० कृत्याकर ॥ अहे । फणायाम्
॥ पालने । अभ्यवहारे । योषिदा
दिभृतौ । वेश्यादिवेतने ॥ आदिना
हस्त्यश्वादिकर्मकराणांभृतौभाण्डा०-
दू०भा० ॥ विषये । राज्ये ॥ भोज
नम० भुज्यतेवा । भुजपालनाभ्यवहा
रयो । भुजोकौटिल्येवा । भावे
कर्मणिवाघञ् ॥ योगिभोगौ० भ-
क्तौभिक्षाव्यापारे० वर्णाश्रमोचि-
तव्यापारेच ॥ यथा । चित्तस्यभो
गैर्द्वौभागौशास्त्रैरेकप्रपूरयेत् । गु
रुशुश्रूषयाभागमव्युत्पन्नस्यसक्रमः ॥
किञ्चिद्व्युत्पत्तियुक्तस्यभागंभोगेन
पूरयेत् । गुरुशुश्रूषयाभागौभागशा
स्त्रार्थचिन्तया । व्युत्पत्तिमनुयात
स्यपूरयेच्चेतसोन्वहम । द्वौभागौ
शास्त्रवैराग्यैर्द्वौध्यानगुरुपूजयेतिव
शिष्ठ ॥ भूम्यादीनांभोगो यथा ।

पितुरूषभोगमाहव्यास । प्रपिता
महेनयद्भुक्तं तत्पुत्रं अविनाचतम् ।
तौविनायस्यपिवाचतस्यभोगस्त्रि
पौरुष ॥ पितापितामहोयस्यजी
वेच्चप्रपितामह । अयाजीवता
भोगोविज्ञेयस्त्वेकपूरुष ॥ नार
द । तथारूढविवादस्यप्रेतस्यव्यव
हारिण । पुत्रेणसोऽर्थ सशोध्यो
नतभोगोनिवर्त्तयेत् ॥ विभवभे-
दे ॥ य० । कर्त्तापिदेवोभोक्ताचया
त्माभोजयितासदा । भोगोविभव
भेदश्चनिष्कृतिर्मुक्तिरेवच ॥

भोगगृहम । न० वासगृहे ॥

भोगदेह । पु० स्वर्गनरकादिभोगार्थ
सूक्ष्मशरीरे ॥ यथा । कृतेसपिण्डी
करणेनर । सवत्सरात्परम् । प्रेतदे
हपरित्यज्यभोगदेहंप्रपद्यते० स्मृति ।

भोगपाल । पुं० अश्वरक्षके ॥ चि०
भोगरक्षके ॥

भोगपिशाचिका । स्त्री० क्षुधायाम् ॥

भोगभूमि । स्त्री० सुखस्थाने ॥ भा
रतवर्षातिरिक्तवर्षे ॥ यथा । तत्रापि
भारतंश्रेष्ठजम्बुद्वीपेमहामुने । य-
तोहिकर्मभूरेषाततोन्याभोगभूम-
य ॥

भोगवान् । पुं० अहौ । सर्पे ॥ भोगो
स्त्यस्य । मतुप् । नाट्य । चि०
भोगविशिष्टे ॥

भोगवती । स्त्री० नागपुर्याम् ॥ पा-

तालगगायाम् ॥ ङीप् ॥ वासुकि तीर्थे ॥

भोगसद्म । न० वासगृहे । भोगायसद्म ॥

भोगार्हम् । न० धने ॥ भोगायअर्हम् ।

भोगार्ह्यम् । न० धान्ये ॥

भोगावली । स्त्री० नागपुर्याम् । बन्दिनासस्तुती । बन्दिपाठे ॥

भोगावास । पु० वासगृहे ॥ भोगस्थवास ॥

भोगिक । पु० भोगपाले । अश्वरक्षके ॥

भोगिकान्त । पु० कम्पलक्ष्मणि । वायौ ॥

भोगी । पु० जिह्मगे । भुजङ्गे । सर्पे ॥ भोग फणोवक्रगतिर्वाऽस्यास्ति । अतइनिठनाविती नि ॥ ग्रामपात्रे । ग्रामण्याम् । ग्रामाधिपती ॥ नृपे । राज्ञि ॥ नापिते ॥ वैयावृत्तिकरे ॥ त्रि० सर्वैभोगोपकरणै रुपेते ।

भोगिनी । स्त्री० महिषीविहायान्य राजयोषिति ॥ अतिशयितोभोगो स्त्यस्या । इन्नन्तान्नान्तलक्षणोङीप् ॥

भोगिवल्लभम् । न० चन्दने ॥

भोगीन्द्र । पुं० )

भोगीश । पु० ) अनन्ते । नागराजे । शेषे ॥ वासुकौ ॥ भोगिनाम् ० इन्द्र ० ईशोवा ॥

भोग्यम् । न० धने ॥ धान्ये ॥ फले ॥ आधिविशेषे । फलभोग्ये ॥ त्रि० भोगार्हे । शब्दादिविषयेषु ॥ भोक्तुमर्हं । भुजेर्ण्यत् ॥

भोग्या । स्त्री० वेश्यायाम् ॥ भोक्तुमर्हायाम् ॥ टाप् ॥

भोज । पु० यादवे ॥ दूरेऽभवन् भोजवलञ्चगच्छतदितिमाघ ॥ देशविशेषे ॥ धारानगरीपतौ० कलिप्रसिद्धेनृपविशेषे ॥ देशविशेषे । भोजकटे ॥

भोजकट । पु० रुक्मिनिर्मितपुरे रुक्मिभोजकट नामपुर कृत्वाऽवसत्तदेतिवि० पु० ॥ देशविशेषे ॥

भोजकटीय । त्रि० भोजकटदेशोद्भवे ॥ वृद्धाच्छ. ॥

भोजनम् । न० आहारे । निघसे । जेमने । जीवन० इ० भा० ॥ बहूना पङ्क्तावशने ॥ भुज्यते । भुज० । ल्युट् ॥ भोज्यरूपतयाप्रकृतौ ॥ अथभोजनगुणविधानादियथा । भोजनाग्रे सदापथ्य जिह्वाकण्ठविशोधनम् । अग्निसन्दीपन हृद्य लवणाद्रकभक्षणम् ॥ आयुर्घृतैगुडे रोगोमृत्युर्लौनोविदाहिषु । आरोग्य कटुतिक्तेषु वलमांसिपयस्सु च ॥ अन्नादष्टगुण पिष्ट पिष्टादष्टगु

णपयः । पयसोऽष्टगुणं मांसं मांसा
दष्टगुणं घृतम् ॥ घृतादष्टगुणं त
ल मर्दनान्नचभक्षणात् । आहार
प्रीणनं सद्योबलकृद्देहधारणम् ।
फलमार्द्रादिवाशोयाभोजनस्यनरो
त्तम । विनामोचाफलं तद्वर्ज-
नीयाचकर्कटी ॥ मृणालविसशा-
लूकाकन्दं चप्रभृतीन्यपि । पूर्वमे
वहिभोज्यानिनतुभुक्त्वाकदाचन ॥
याममध्येनभोक्तव्यं यामयुग्मं नल
ङ्घयेत् । याममध्ये रसोत्पत्तिर्यु-
ग्मेऽतीतेबलक्षयः ॥ आयुष्यं प्रा
ङ्मुखोभुङ्क्ते यशस्यं दक्षिणामु-
खः । श्रियं प्रत्यङ्मुखोभुङ्क्ते ऋ
तं भुङ्क्ते ह्युदङ्मुखः ॥ कुर्या र-
न्नेनभागौद्वावेकं पानेनपूरयेत् ।
वायोः सञ्चारणार्थं चतुर्थमवशे
षयेत् ॥ दन्तैश्चावगतं चान्नं शोधे
नावहरेच्छलैः । कुर्यादनिर्गतं त
द्धिमुखस्यानिष्टगन्धताम् ॥ भुक्त्वापा
णितलं घृष्ट्वाचक्षुषोर्यदिदीयते । अ
चिरेणैवतद्वारितिमिराणिव्यपोह-
ति ॥ भुक्त्वाचस्पृक्करं वामदत्त्वाकु-
क्षौततः पठेत् । भुक्तं महेन्द्रहस्ते
नवैश्वानरमुखेनच ॥ गरुडस्यचक-
ण्ठेनसमुद्रश्चवह्निना । वाता-
पिर्भक्षितोयेनपीतोयेनमहोदधिः
॥ यन्मयाखादितंपीतंतदगस्त्यो-
जरिष्यति । पठित्वैतत्सुखासीनः

श्चागतिष्ठेदनाकुलः ॥ भुक्-
त्वापादशतंगत्वावामपार्श्वेनसं
विशेत् । एवंह्यधोगतंचान्नं सुख-
तिष्ठतिजीर्यति ॥ भुक्त्वामविश
तस्तुन्दं बलमुत्तानशायिनः । आ
युश्चामकुक्षस्यमृत्युर्धावतिधावतः
॥ अपिच । ततोभोजनवेलाया
कुर्यान्मङ्गलदर्शनम् । तस्यप्रदक्षि
णंनित्यमायुर्धर्मविवर्द्धनम् । लोके
ऽस्मिन्मङ्गलान्यष्टौब्राह्मणोगौर्हुता-
शनः । हिरण्यं सर्पिरादित्यआपो
राजातथाष्टमः ॥ पादुकारोहणंकु
यात्पूर्वंभोजनतः परम् । पादरोग
हरंवृष्यं चक्षुष्यं चायुषेहितम् ॥ अ
श्नीयात्तन्मनाभुक्त्वापूर्वन्तुमधुरंरस
म् । मध्येऽम्ललवणौपश्चात्कटुतिक्तक
षायकान् ॥ विदाहीन्यन्नपानानि
यानिभुङ्क्तेहिमानवः । तद्विदाह
प्रशान्त्यर्थंभोजनान्तेपयः पिबेत्
॥ एवंभुक्त्वासमाचामेत्......
पूर्वकम् । भोजनेदन्तलग्नानिनि
र्हृत्याचमनंचरेत् ॥ दन्तलग्नमनि
र्हार्यंलेपमन्ये तदन्तवत् । नतत्रबहु
शः कुर्यात्यत्ननिर्हरणंप्रति वि
स्तरस्त्वनायः ॥ अथातोऽमलभुङ्
क्तेऽजपीपूयशोणितम् । भुक्त्वातु
क्रिमिभुङ्क्ते अदत्त्वा विड्विभोजन
म् ॥ अघसकेवलभुङ्क्तेय पचत्या
त्मकारणात् । इन्द्रियप्रीतिजनकं

व्रथापाकविवर्जयेदितिजावालि ॥
बालसुवासिनीवृद्धगर्भिण्यातुरकन्य
का । सम्भोज्यातिथिभृत्यांश्चदम्प
त्यो शेषभोजनम् इतियाज्ञवल्
क्य ॥ नभोजनार्थंस्वेविप्र कुल
गोत्रे निवेदयेत् भोजनार्थंहितेश
सन्वान्ताशोत्युच्यतेबुधैरितिमनु ॥
भोजनपात्रम् । पु० आहारभाजने ॥
हैमदोषहरपात्र चक्षुष्य राजतशु
चि । कास्य बुद्धिप्रदरम्य पालाशरु
चिकारकम् ॥
भोजपति । पु० कंसासुरे ॥ भोजा
नाद्धत्रियविशेषाणांपति ॥
भोजपुरम् । न० स्वनामाप्रसिद्धे देश
वि० ॥
भोजयिता । त्रि०भोजनकारयितरि ॥
भोगप्रयोजके । पु० ईश्वरे ॥
भोजविद्या । स्त्री० ऐन्द्रजालिकविद्या
याम् ॥
भोजाधिप । पुं० कंसासुरे ॥ भोजा
नामधिप ॥
भोज्यम् । न० भोजनीयद्रव्ये । यत्कं
वलजिह्वयाविलोड्यनिगीर्यंते सूपौ
दनादितस्मिन् । पायसादौ ॥ वि
षयमात्रे ॥ भुज्यते । भुज० । कृत्य-
लोण्यंत् । भोज्य भक्ष्ये इतिण्य
तिकवर्गाभावोनिपातनात् ॥ आ-
हारादधिक भोज्य ब्रह्माण्डविभवे
पिन ॥ अभ्युदयार्थंब्राह्मणभोजने ॥

स्वाराज्यसाम्राज्ययोर्भोगभाक्त्वे ॥
सोमे ॥
भोज्यवित् । पु० सूपकारे ॥ सूपका
रोहिभोज्यवस्तुत्वेनजानाति ॥
भोज्यसम्भव । पु० शरीरस्थरसधातौ ॥
भोज्या । स्त्री० भोजराजगोत्रापत्ये
स्त्रियि ॥ क्रौड्यादिभ्यश्चेत्यत्रभोजक्ष
त्रिये० इत्युक्ते ष्यङादेश ।
ष्यङश्चाप् ॥
भोट । पु० भोटाङ्गे । भोटान्ते ॥
भोटाङ्ग । पु० स्वनामाप्रसिद्धे देश-
विशे० । भोटान्० इ०भा० प्र०॥
भोटान्त । पु० देशविशेषे ॥ यथा ।
काश्मीरन्तुसमारभ्यकामरूपात्तुपश्चि
मे । भोटान्तदेशोदेवेशिमानसेशा-
त्वदक्षिणे ॥
भोभो । अ० सम्बोधने ॥
भोलि । पु० वक्रग्रीवे । उष्ट्रे ॥
भो । अ० सम्बोधने विषादे ॥ प्र
श्ने ॥ भाति । भा० । बाहुलका-
त् डोस् ॥
भौत । पु० देवले॥ भूतयज्ञे ॥ न०
भूतसङ्घे ॥ भूतानांसमूह । भि
क्षाद्यण् ॥ त्रि० भूतसम्बन्धिनि ॥
भौतिक । पु० स्थाणौ ॥ शिवे ॥
सर्वविशेषे ॥ यथा । अष्टविकल्पो-
दैवस्तैर्यग्योनिश्चपञ्चधाभवति । मा
नुष्यश्चैकविध समासतोभौति-
क सर्ग ॥ भौतिकास्याप्सर्गो

सा चैतन्योत्कर्षनिष्कर्षतारतम्याभ्या मूर्ध्वाधोमध्यभावेन त्रिविध्यम् । यथा । ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः । मध्ये रजो विशालो ब्रह्मादिस्तम्बपर्यन्तः ॥ न॰ सुतायाम् ॥ त्रि॰ भूतसम्बन्धिनि ॥ रूपादिषु ॥ चक्षुरादिषु ॥ शरीरादिषु ॥

भौती । स्त्री॰ तम्याम् । रात्री । रजन्याम् ॥

भौत्य . । पु॰ भूतिमुनेः पुत्रे चतुर्दशमनौ ॥

भौम । पुं॰ कुजग्रहे । मङ्गले ॥ नरकासुरे ॥ अम्बरे ॥ रक्तपुनर्नवायाम् ॥ न॰ पानीयविशेषे ॥ भौमम-ग्नौनिगदितप्रथमं त्रिविधबुधैः । आक्षर्लपरमानूपतत . साधारणंक्रमात् ॥ भौमानामम्भसां प्रायो यश्च सम्प्रातरिष्यते । शीत स्वच्छ निर्मलत्व स्वयतम्य सामदानुगुणः ॥ त्रि॰ भूमिभवे ॥ तत्रे ॥ अन्नमयभूमिकार्ये ॥ भूमेरपत्यम् । शिवादित्वादण् ॥ भूमौभवति शैषिकोऽण् ॥ भूमेरिदम् । तस्येदमित्यण् ॥

भौमवार . । पु॰ मङ्गलवारे । वाराख्यायाम् ॥

भौमन । पुं॰ विश्वकर्मणि ॥

भौमरत्नम् । न॰ प्रवाले ।

भौमावाश्या । स्त्री॰ गोसहस्रीतिविख्यातायाममायाम् । यथा । अमावास्यां भवेद्वारो यदि भूमिसुतस्य च । गोसहस्रफलदद्यात् स्नानमात्रेण जाह्नवीतिव्यासः ॥

भौमी । स्त्री॰ सीतायाम् । जानक्याम् ॥

भौरिक । पु॰ कनकाध्यक्षे ॥ भूरिषि । सुवर्णे नियुक्तः । तत्र नियुक्त इतिठक् ॥

भ्रंश । पु॰ अधःपतने ॥

भ्रस : । पु॰ भ्रंशे ॥

भ्रकुस . । पु॰ स्त्रीवेशधारिणि नर्तके । भ्रुकुसे ॥ पटपुटेतिदण्डकोक्तभासार्थकुसिधातोरौणादिकःप्रत्ययः । भ्रुवाकुसीभासनमस्य । कृतोऽक्षोऽन्यो गालवस्येतिसूत्रे॰ अभ्रुकुसादीनामितिवार्त्तिकात्र अकारो न विधीयत इतिव्याख्यानान्तरात्॰ भ्रकुंस ॥

भ्रुकुटि । स्त्री॰ क्रोधादिनाभ्रुवःकौटिल्ये । भ्रुकुट्याम् ॥ कुटकौटिल्ये । इगुपधात्किदिति॰ इन् । भ्रुवोः कुटिः । ङ्योरुस्वङ्त्यत्र॰ अभ्रकुसादीनामितिवार्त्तिकेनाकारो विधीयते ॥

भ्रकुटी । स्त्री॰ भ्रकुटी । कुटेरिन्नन्तः॰ कृदिकारादितिङीष् ॥ भ्रुवो कुटी ॥ ङ्योरुस्वइतिसूत्रे॰ अभ्रकुंसादीनामितिवार्त्तिकस्य॰-

थक रोनेनविधीयतद्रत्यर्थादकार ॥
भ्रम । पु० भ्रम्नु निर्गमे । प्राकारगृह भित्तिषुजलनिर्गमनजाले ॥ कुन्दाख्यशिल्पियन्त्रे ॥ चरख० इ० भा० भ्रमणे। भ्रान्तौ। मिथ्याज्ञाने। मिथ्यामतौ। व्यसनहेतौ ॥ माविनश्यत्वऽयभोगोबद्धतामुत्तरोत्तरम्। माविघ्नाप्रतिबध्नातुधन्योस्माऽस्मादितिभ्रम ॥ भ्रमणम्। भ्रमुअनवस्थाने। भावे घञ् ॥ नद्यादावधस्थलस्रोर्द्धनिसरणे ॥ भ्रमन्तिजलान्यनेन। इल श्चेतिघञ्। नोदात्तोपदेशस्येति वृद्ध्यभाव ॥ देहेन्द्रियाद्यध्यासे ॥ न्यायमते० भ्रमस्यनामान्तरमप्रमा। भ्रमोद्विविध । विपर्यास ० सशयश्च । आद्योयथा । देहेआत्मबुद्धि ० शङ्खादौपीततामति । सानिश्चयरूपा ॥ द्वितीयोयथा । किंस्विन्नरोवा० स्थाणुर्वेत्यादिबुद्धि । तस्यकारणम्। पित्तदूरत्वमोहभयादिनानाविधदोष । यथा । अप्रमाचप्रमाचेतिज्ञानद्विविधमुच्यते। तच्छून्येतन्मतिर्यास्यादप्रमासाद्विरूपिता ॥ ततप्रपञ्चोविपर्यास सशयोपिप्रकीर्त्तित । आद्योदेहेष्वात्मबुद्धि शङ्खादौपीततामति ॥ भवेन्निश्चयरूपासासशयोथप्रदर्श्यते । । किंस्विन्नरोवास्थाणुर्वेत्यादिबुद्धिस्तुसशय ॥ तदभावाप्रकाराधीस्तत्प्रकारातुनिश्चय । सशयोभवेद्याधीरेकत्राभावभावयो ॥ साधारणादिधर्मस्यज्ञानमशयकारणम् । दोषोऽप्रमायाजनकप्रमायास्तुगुणोभवेत् ॥ पित्तदूरत्वादिरूपोदोषोनानाविध स्मृत । इ० भा० प० ॥

भ्रमणम्। न० अनवस्थितौ ॥ गमनविशेषे । पर्यटने ॥

भ्रमणी । स्त्री० कारण्डिकायाम् । जलौकायाम् ॥ अधीशितु क्रीडाव्यायाम् । अधीशितु क्रीडादौ॥

भ्रमत्कुटी । स्त्री० तृणादिच्छत्रे ॥ कावार्याम्। जङ्गमकुट्याम् ॥

भ्रमर । पु० कीटविशेषे । मधुपे मधुव्रते । द्विरेफे । चञ्चरीके ॥ कामुके ॥ वेधनशस्त्रे । वर्मा० इ० भा०॥ भ्रमति । भ्रमु० । अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चिदित्यर ॥

भ्रमरक । पुं० भृङ्गे । मधुलिहि ॥ गिरिके । कालमूषिके ॥ चूर्णकेशे । अलके । ललाटलम्बितचूर्णकुन्तले ॥ जलभ्रमे ॥ भ्रमरइव । इवेप्रतिकृताविितिकन् ॥ भ्राम्यतिवा । भ्रमु० अर्तिकमीत्यर । स्वार्थेकन् ॥

भ्रमरकीट पु० कीटान्तरे । कुम्भारी० इ० भा० ॥

भ्रमरच्छली । स्त्री० लताविशेषे । भृङ्गाह्वायाम् ॥ भृङ्गच्छलीचकटुका

तिक्ताद्दीपनरोचनीति। रा० नि०।

भ्रमरप्रिय । पु० धाराकदम्बे ॥

भ्रमरमारी । स्त्री० मालवदेशप्रसिद्धपुष्पवृक्षविशेषे । मासपुष्पिकायाम् ।

भ्रमरविलसितम् । न० भ्रमरविलसितायाम् । म्भौन्लौग स्याद्भ्रमरविलसितम् ॥

भ्रमरविलसिता । स्त्री० त्रिष्टुप् ११ छन्द प्रभेदे । यथा । मौगौनौगौ भ्रमरविलसिता ॥ य० मुग्धे मानपरिहरनचिरात्तारुण्यं सफलयतु हरि । फुल्लावल्लीभ्रमरविलसिताभावेशोभाकलयतिकिमुताम् ॥

भ्रमरा । स्त्री० भ्रमरच्छल्याम् ॥

भ्रमरातिथि । पु० चम्पके ।

भ्रमरानन्द । पु० वकुले । अतिमुक्तके ॥ रक्ताम्लाने ॥

भ्रमरालक । पु० भ्रमरके । कुरुले । ललाटस्थितचूर्णकुन्तले ॥

भ्रमरावलिका । स्त्री० भ्रमरावल्याम् ॥

भ्रमरावली । स्त्री० अतिशक्वरीप्रभेदे ॥ भुजसङ्गतशङ्खसुवर्णलसद्वलया० कारपुष्पसुगन्धवतीरसनारुचिरा । कनकद्यनूपुरचारुतराजयतिभ्रमराव-लिकाभुजगाधिपदुर्ललिता ॥ यथा । सखिसम्प्रतिकम्प्रतिमौनमिदंविहितम्० मदनेनधनु सशरसुकारेनिहितम् । नतिशालिनिकिंवनमालिनिमानकथा० रतिनायकनायकट खमुपतिष्ठथा ॥

भ्रमरिका । स्त्री० बालानाक्रीडाविशेषे ॥ येनभूरपिभ्रमतीवभाति । भाषामाञ्जी० इ० भा० ।

भ्रमरी । स्त्री० भ्रमरयोषिति । भौंरी० इ० भा० ॥ षट्पद्याम् ॥ जतुकायाम् ॥ पुत्रदात्याम् ॥ भ्रामया स्याने॥

भ्रमरेष्ट । पु० श्योनाकप्रभेदे ॥

भ्रमरेष्टा । स्त्री० भूमिजम्ब्वाम् भाग्र्याम्॥

भ्रमरोत्सवा । स्त्री० माधव्यालतायाम् ॥

भ्रमासक्त । पु० शस्त्रमार्जके ॥

भ्रमि । स्त्री० भ्रमणे ॥ जलनिःसरणमार्गे ॥ यन्त्रविशेषे ॥ भ्रमणम् । भ्रमु० । इककृष्यादिभ्य ॥ भ्रमे सम्प्रसारणञ्चेतीन् । वाहुलकात्सम्प्रसारणाभाव ॥

भ्रमित । त्रि० घूर्णिते । भ्रमणकारिते ॥

भ्रमी । त्रि० भ्रमविशिष्टे ॥

भ्रष्ट । त्रि० गलिते । च्युते । इत्यादित. पतिते ॥ यर्थाद्भ्रष्टातीर्थयात्रानुगच्छेत्तस्याद्भ्रष्टोरौरववैव्रजेत्॥ । योगभ्रष्ट सम्यधृतिश्चगच्छेद्राज्याद्भ्रष्टोमृगयावैव्रजेत् ॥

भ्राज । पु० कात्यायनप्रणीतश्लोके ॥ भ्राजानामश्लोकाद्भतिमहाभाष्यम् ॥

भ्राजकम् । न० पित्ते ॥

भ्राजमान । त्रि० दीप्यमाने ॥

भ्राजिष्णु । त्रि० अलङ्कारादिनादी

भियुक्ते ॥ दीप्तिशालिनि । विभा
जि ॥ भ्राजते । तच्छील । भ्राज
दीप्तौ । भुवश्चेतिचकारात् । भ्राजे
रपिष्णुच् ॥ स्वप्रकाशचिद्रूपे ॥
भ्राता । पु० सहोदरे ॥ भ्राजते० वि
भर्तिवा । भ्राज् डुभृञ्० । वा ।
नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृ
पितृदुहितृ । इतिसाधु ५
भ्रातरौ । पु० २०० सहोक्त्याभ्रातृभ
गिन्यो । भ्राताचस्वसाच । । भ्रा
तृपुत्रौस्वसृदुहितृभ्यामित्येकशेष
स्वसाचभ्राताचेतिवा ॥
भ्रातृकम् । त्रि० भ्रातुरागतेधनादौ
॥ ऋतष्ठञ् ॥ ङीपि० भ्रातृकी ॥
भ्रातृयोग्ये ॥
भ्रातृज । पु० भ्रातृपुत्रे ॥ भ्रातुर्जात
। पञ्चम्यामितिड ॥
भ्रातृजा । स्त्री० भ्रातुष्पुत्र्याम् । भ्रात्री
यायाम् ॥ टाप् ॥
भ्रातृजाया । स्त्री० भ्रातृपत्न्याम् ।
प्रजावत्याम् ॥ भ्रातु जाया ॥
भ्रातृपत्नी । स्त्री० प्रजावत्याम् ॥ भ्रा
तापतिर्यस्याइतिविग्रहे० नित्य स
पत्न्यादिष्विति० भ्रातृपतिशब्दस्य
नान्तादेशे० ऋन्नेभ्यइतिङीप् ॥
भ्रातृपुत्र । पु० भ्रातृजे ॥
भ्रातृभगिन्यौ । स्त्री० भ्रात्रो ॥ भ्रा
ताचभगिनीच ॥
भ्रातृवल । त्रि० भ्रातृमति ॥ भ्रा
तारःसन्ति । अन्येभ्योपिदृश्यतइ
ति० वलच् । सञ्ज्ञायामित्यनुवृत्तेर्वल
इतिनदीर्घ ॥
भ्रातृव्य । पु० भ्रातृपुत्रे ॥ भ्रातु
रपत्यम् । भ्रातुर्व्यच्च ॥ शत्रौ ॥
व्यन्सपत्ने ॥
भ्रातृश्वशुर । पु० पतिज्येष्ठभ्रात
रि । जेठ० भासुर० इ० भा० ॥
भ्रातृस्थानम् । न० सहोदरगृहे ॥ लग्ना
त्तृतीयभवने ॥ भ्रातु स्थानम् ॥
भ्रात्रीय । पु० भ्रातृजे ॥ भ्रातुरपत्य
म् । भ्रातुर्व्यच्चेति० चाच्छ ॥
भ्रान्त । पु० मत्तद्विपे ॥ राजधुस्तू
रे ॥ न० भ्रमणे ॥ त्रि० भ्रमान्वि
ते ॥ भ्रान्तिमापन्ने ॥ अद्वितीय-
ब्रह्मतत्त्व नजानन्तियदातदा । भ्रा
न्ताएवाखिलास्तेषांक्वमुक्तिः क्वइ
वासुखम् ॥ भ्रमे 'कर्त्तरिक्त ।
अनुनासिकस्यक्विझलो क्ङितिति०
इ० दीर्घ ॥
भ्रान्ति । स्त्री० भ्रमे । मिथ्यामतौ
। अतस्मिंस्तज्ज्ञाने ॥ युक्तिहीनप्र
काशत्वाद्भ्रान्तेर्नह्यस्तिलक्षणम् ।
यदिस्याल्लक्षणंकिञ्चिद्भ्रान्तिरेवन-
सिध्यति ॥ भ्रान्तिभाजिभवतिक्वविवेक ' ॥ भ्रमणे । अनवस्थितौ ॥
भ्रमणम् । भ्रमु० । क्तिन् । अनुना
सिकस्येतिदीर्घ ' ॥
भ्रान्तिदर्शनम् । न० असाधनेसाधनत्व

दुर्बो ॥ साधर्म्यसाधनत्वबुद्धो ॥ भ्रान्त्यादर्शनम् ॥ शुक्तिकायारजतवद्विपर्ययज्ञाने ॥

भ्रान्तिमान् । त्रि० भ्रान्तिविशिष्टे ॥ भ्रान्तिरस्यास्ति । मतुप् ॥ ङीपि० भ्रान्तिमती ॥ पु० अलङ्कारविशेषे ॥ भ्रान्तिमानन्यसंवित्तत्तुल्यदर्शने । तदिति० अन्यद्प्राकरणिकं निर्दिश्यते० तेनसमानम्सर्थादिश्प्राकरणिकमाश्रीयते । तस्यतथाविधसादृश्यसत्यांयदप्राकरणिकतयासंवेदनम्०सभ्रान्तिमान् । नचैवरूपकम्प्रथमातिशयोक्तिवा०तत्रवस्तुतोभ्रमस्याभावात् । रूपचार्थानुगमेनसञ्ज्ञाया प्रवृत्तस्तत्रस्पष्टमेव प्रतिपन्नत्वात् । उदाहरणम् । कपालमार्जार पयइतिकराल्लेढिशशिमस्तरुच्छिद्रप्रोतान्बिसमितिकरीसङ्कलयति । रतान्ते तल्पस्थान्हरति वनिताप्यंशुकमितिप्रभामत्तश्चन्द्रो जगदिदमहोविभ्रमयति ॥

भ्रान्तिहर । पु० मन्त्रिणि ॥ त्रि० भ्रमनाशके ॥

भ्रामक । पु० जम्बुके । फेरौ ॥ धूर्त्ते ॥ सूर्यावर्त्ते ॥ अश्मप्रभेदे । चुम्बक० इ० भा० प्र० ॥ त्रि० भ्रमजनके ॥

भ्रामर । पु० चुम्बक० इ० प्र० पाषाणे । भ्रामके ॥ न० शुक्रवर्णे मधुनि ॥ भ्रमरैः कृतम् । क्षुद्राभ्रमरेत्यादिनाऽञ् ॥ किञ्चित्सूक्ष्मं प्रसिद्धं भ्य षट्पदेभ्योलिभिश्चितम् । निर्मलस्फटिकाभयत्तन्मधुभ्रामरस्मृतम् ॥ भ्रामरं रक्तपित्तघ्नं मूत्रजाड्यकरंगुरु । स्वादुपाकमभिष्यन्दिविशेषात्पिच्छिलंहिमम् ॥ रतबन्धान्तरे । यथा । तत्कटिसमधिरूढवल्लभ स्याद्धृषादिपशुमस्थितिस्थित । चक्रवद्भ्रमतिकुञ्चितत्रिकोभ्रामरं निगदितसमुन्नतम् ॥ नृत्यविशेषे । रासे । मण्डलनृत्ये । हल्लीसे ॥ त्रि० भ्रमरसम्बन्धिनि ॥ अण् ॥

भ्रामरी । स्त्री० अपस्मारिणि । इति कुल्लूकभट्टः ॥

भ्रामरी । स्त्री० पार्वत्याम् ॥

भ्रामित । त्रि० आघूर्णिते ॥

भ्राष्ट्र । पु० भर्जनपात्रे । अम्बरीषे । भडसा० इ० भाड० इ० भा० ॥ भृज्ज्यतेऽत्र । भ्रस्जपाके । भ्रस्जिगमिनमिहनिविश्यशांवृद्धिश्चेति०ष्ट्रन्० इविश्च ॥

भ्रियमाण । पुं० पोष्यमाणे ॥

भ्रुकुंस । पु० भ्रूकुंसे ॥ भ्रूकुंसे । स्त्रीवेशधारिणिनर्त्तके । नचनिआ० इ० भा० ॥ भ्रुवाकुंसोभाषणमस्य । कुंसोऽस्त्रोऽङ्गोपावस्य तिसूत्रे० ब्रूयङ्गुवङ्भाविनामव्ययामाद्येति

वक्तव्यमितिनिषेधोत्तरपठितेन । अभ्रुकुसादीनामितिवक्तव्यमिति वार्त्तिकेनतन्निषेधाद्भ्रस्व ॥ एवं भ्रुकुटिशब्देपिबोध्यम् ॥
भ्रुकुटि । स्त्री० भ्रकुटी । भ्रूकुम्याम् । क्रोधादिनाललाटसङ्कोचने ॥ कुटेरिगुपधात्किदितीन । भ्रुवो कुटि । भ्रुकु सवत्प्रक्रिया ॥
भ्रुकुटी । स्त्री० भ्रुकुटौ । भ्रुवो कौटिल्ये ॥ कुटेरिगुपधादितीन् । कृदिकारादितिङीष् । भ्रुवो कुटी ॥ अभ्रुकुसादीनामितिवार्त्तिकाद्भ्रस्व ॥
भ्रू । स्त्री० नेत्रोपरिभागस्थरोमराज्याञ्चिल्लिकायाम् । भौ० इ० भा० ॥ भ्रमु० । भ्रमेस्वडू । टिलोप ॥ यद्वा । भ्रमति । भ्रमुचलने । भ्रमेस्वडू ॥ यद्वा । भ्राम्यति । क्विप् । ऊङ्मादीनामिति० गम' क्वाविव्यश्च वार्त्तिकेन०मलोपऊङ्चादेश ॥
भ्रूकुस । पु० भ्रूकुसे । भ्रुकुसे । नर्त्तनिआ० इ० भा० ॥ भाषणा र्थकचुरादिण्यन्तात कुसेरेरच् । भ्रुवाकु सोभाषणमस्य । इकोहृस्वोऽङ्योगालवस्येतिसूत्रे०इयङ्०वङ् भाविनाम' धानाञ्चनेतिवार्त्तिकाद्भ्रस्व नषेध ॥
भ्रूकुटि । स्त्री भ्रुकुम्याम् ॥ भ्रुवो कुटि इयङुवङ्भाविनामिति निषेधाद्भ्रस्वोनभवति ॥
भ्रूकुटी । स्त्री० भ्रकुम्याम् । भ्रुकुटौ ॥ कुटेरिगुपधादितीन् । कृदिकारादितिङीष् । भ्रुवो कुटी । इयङुवङ्भाविनामितिह्रस्व निषेध ॥
भ्रूण । पु० स्त्रीगर्भे । उदरस्थजन्तौ ॥ डिम्भे । अर्भके ॥ गर्भिण्याम् ॥ श्रोत्रियद्विजे ॥ भ्रूणते । भ्रूण आशाविशङ्कयो । घञ् ॥
भ्रूणहत्या । स्त्री० गर्भस्थबालकहनने ॥ यथा । त्रिविवाह कृत येननकरोतिचतुर्थकम् । कुलानिपातयेत्सप्तभ्रूणहत्याव्रतञ्चरेत् ॥
भ्रूणहा । त्रि० गर्भस्थबालकहन्तरि ॥ भ्रूण हतवान् । हन० । ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ ब्रह्महणि ॥ भ्रूणहा० वरिष्ठब्राह्मणहन्तोच्यत इतिव्याख्यानात् ॥
भ्रूभङ्ग । पु० भ्रूविक्षेपे । भ्रुवः कौटिल्ये ॥ भ्रुवोभङ्ग ॥
भ्रेष । पु० अध पाते । यथोचितात० भ्रंशे ॥ भ्रेषणम् । भ्रेषृ चलने । घञ् ॥ चलने ॥
भ्रेषणम् । न० चलने ॥
भ्रौणहत्यम् । न० भ्रूणघ्नोभावे ॥ ष्यञ् । दाण्डिनायनेतिनिपातनात्तकारादेश ॥

+ —*— +

म । पुं० मकारे ॥ यमे ॥ समये ॥ विषे ॥ मधुसूदने ॥ चन्द्रशेखरे । शम्भौ ॥ ब्रह्मणि ॥ चन्द्रमसि ॥ मन्त्रे ॥ मङ्गले ॥ त्रिगुरौ० ऽऽऽ० ॥

मंहिष्ठ । त्रि० मंहनीये । पूजनीये ॥

मकर । पुं० नक्रे । यादः प्रभेदे । मगर० इतिभाषाप्रसिद्धे ० भाषायांमध्येभगवद्विभूतौ ॥ निधिप्रभेदे ॥ दशमराशौ । आकोकेरे ॥ क्षयाति । कृशिसायाम् । यथा याम् । मनुष्यार्थाकार । पृषोदरादि ॥ यद्वा । मकरे । मत्सिमण्डले । यत् । आगमशास्त्रस्यानित्यत्वान्नुम् । मकराति । राहोने । बातोनुपेतिक ॥ दर्पयोऽप्यु, क्त । सारस्वतकोषे ॥ चदृधूमे ॥

मकरकुण्डलम् । न० मकराकृतिकर्णाभरणे ॥

मकरकेतन । पुं० कामदेवे ॥ मकर केतनं यस्य ॥

मकरध्वज । पुं० कदर्पे । अनङ्गे ॥ मकरोनक्रोध्वजोयस्य ॥ रससिन्दूरविशेषे । चन्द्रोदये ॥ तस्याकारप्रकारोन्यत्रसिन्दूरचिन्तामणौ ॥

मकरन्द । पुं० पुष्परसे ॥ मकरमपि द्यति० कामजनकत्वात् । दोघवखण्डने । बातोनुपेतिक । पृषोदरादि ॥ यद्वा । मकरमप्यन्दति । अदिबन्धने । कर्मण्यण् । शकन्ध्वादि ॥ कुन्दपुष्पवृक्षे ॥ न० किञ्जल्के ॥

मकरमुखी । स्त्री० प्रणालयाम् । पय स पद्व्याम् ॥

मकरन्दवती । स्त्री० कृष्णवृन्तायाम् । पाटलापुष्पे ॥ मधुविशिष्टायाम् ॥

मकरव्यूह । पुं० मकराकृतिवत्सैन्यविन्यासे ॥ वराहव्यूहविपर्यये-अमकरव्यूहोभवति । तेनाऽयं यस्माञ्भयभयेसतिगच्छेत् ॥

मकराकर । पुं० समुद्रे ॥ मकराणामाकरः ॥

मकराकार । पुं० मत्स्याकारके । षड्यन्त्रे ॥

मकराङ्क । पुं० समुद्रे ॥ कामदेवे ॥

मकराधिप । पुं० शनिग्रहे ॥ मकरराशिविशेषस्याधिप ॥

मकरालय । पुं० अब्धौ ॥ मकराणां मकरोपलक्षितानांजलजन्तूनामालयः ॥

मकरी । पुं० समुद्रे ॥ मकरा सन्त्यस्मिन् । अतइनिठनाविति० इनि ॥

मकुटम् । न० मुकुटे । किरीटे ॥ मकतेऽनेनवा । मकि० । बाहुलकादुटः । आगमशास्त्रस्यानित्यत्वान्नुम् ॥

मकुति । स्त्री० शूद्रशासने ॥

मकुर । पु० मुकुरे । दर्पणे ॥ वकुलद्रुमे ॥ कुलालदण्डे ॥ कोरके ॥ मङ्कते । मकि० । मकुरदर्दुराविति साधु ॥

मकुल । पु० न० मुकुले ॥ वकुलद्रुमे ॥

मकुष्ठ । पु० वनमुद्गे । मौठ० द्र० प्र० व्रीहिविशेषे ॥ मकुष्ठोवातलोग्राही कफपित्तहरोलघुः । वातिजिन्मधुर पाकेक्रमिकृज्ज्वरनाशन ॥ चि० म थरे ॥

मकुष्ठक । पु० वनमुद्गे । मयुष्ठके । मकुष्ठे ॥ मङ्कते० मङ्क्यतेवा । मकि० । बाहुलकादुनुमभावश्च । तिष्ठति । ष्ठा० । कुन् । मकुष्ठा-सौस्थकश्च । पूर्वपदादितिष ॥

मकूलक । पु० मुकूलके । लघुदन्त्यामोषधौ ॥ मङ्कते । मकि० । खर्जपिञ्जादिभ्यऊरोलचाविति०-पिञ्जादित्वादूलच् । स्वार्थेकन् ॥

मक्कल । पु० शूलरोगविशेषे ॥ यथा । सूतायाहृच्छिरोवस्तिशूलमक्कलसञ्ज्ञितम् । यवक्षारं पिबेत्तत्र मस्तुनोष्णोदकेनवा ।

मक्का । स्त्री० खुराशानाभिधे देशे ॥

मक्कुलम् । न० शिलाजतुनि ॥

मक्केश । पु० } खुराशानदेशस्थे
मक्केश्वर । पु० } शिवे ॥

मक्कोल । प० शिलाधातौ । सितोपले । मक्का० खडियामाटी० गोलू० द्र० भा० ॥

मक्ष । पु० स्वदोषाच्छादने ॥

मक्षवीर्य्य । पु० पियालवृक्षे ॥

मक्षिका । स्त्री० कीटविशेषे । गन्धलोलुपायाम् । वमनीयायाम् । मक्खी० द्र० भा० ॥ मशति । मशशब्दे रोषकृतेच । इनिमशिभ्या सिकन् ॥ मक्षतिवा । मक्षरोषसङ्घाते । कुन्० खुल्वा ॥

मक्षिकामलम् । न० सिक्थके ॥

मक्षीका । स्त्री० मक्षिकायाम् ॥

मख । पु० यज्ञे ॥ मखन्तिदेवाअत्र अनेनवा । मखइतौ । हलश्चेति० घञ् । सञ्ज्ञापूर्वकत्वान्नवृद्धिः ॥ यद्वाक्वचिदपवादविषयेप्युत्सर्गोभिनिविशते० इतिघञ्विषयेपिघुसौ तिघ । यद्वा । मह्यते । मह० । नश्चेहलोपश्च० सञ्ज्ञायांतिखोहलोपश्च॥

मखत्राता । पु० श्रीरामचन्द्रे॥ मखानात्राता ॥

मखवह्नि । पु० प्रणीते । यज्ञाग्नौ॥

मखानल । पु० महावीरे । यज्ञाग्नौ ॥

मखान्नम् । न० पद्मबीजाभे । पानीयफले । मखाना० द्र० भा० ॥ मखान्न पद्मबीजस्यगुणैस्तुल्यंविनिर्दिशेत् ।

मखासुहृत् । पु० शिवे । मखस्यदक्ष यज्ञस्यअसुहृत् ०शत्रु ॥

मगण । पु० त्रिगुरौ०SSS ॥

मगध । पु० बन्दिनि ॥ मागधे । वंशपरम्पराशंसकि ॥ मगध्यति०या चते । मगधपरिवेष्टने । कण्ड्वादिर्य गन्त । अच् । यस्यहलइतियलोप ॥ मगधा पु०भूम्नि० कीकटदेशे ॥ यथा । व्यासेश्वरंसमारभ्यतप्तकु गडान्तक शिवे । मगधाख्योभवेद्देशो याचायानहिदुष्यति ॥ दक्षोत्तरक्र मेणैवक्रमात्कीकटमागधौ ॥ मगधा नानिवासोजनपद ० मगधा । निवासोऽस्यजनपदेलुप् । लुपियुक्त वद्भाव ॥

मगधा । स्त्री० पिप्पल्याम् ॥

मगधेश्वर । पु० जरासन्धनृपे । म गधदेशाधिपमात्रे ॥ मगधानादेश विशेषाणामीश्वर ॥

मगधोद्भव । त्रि० मगधदेशजाते ॥

मगधोद्भवा । स्त्री० पिप्पल्याम् ॥ मग धेउद्भवोयस्य ॥

मग्न । त्रि० जलान्त । प्रविष्टे । आ प्लुते । स्नाते ॥ मज्जति । टुमस्जो शुद्धौ । क्त । ओदितश्चेति०निष्ठा नत्वम् । तस्यासिद्धत्वात्०स्कोरिति सलोप । चो कु ॥

मघ । पुं०द्वीपान्तरे ॥ देशान्तरे । म ग ०नामकस्ले च्छस्थाने ॥ न० पुष्प विशेषे ॥

मघवा । पु० इन्द्रे । शक्रे ॥ मह्यतेप् ज्यते । महपूजायाम् । श्वन्नुक्षन् पूषन्प्लीहन्नित्यादिना०कनिन् कवि रितिमनोरमायाम्पुटम् ॥ निपा तनात्०हस्यघोवुगागमश्च । मघवा नौ०मघवान ॥ मघवावहुलमिति मितिवादशपक्षेतु० मघवान्मघ वन्तौ० मघवन्त ० इत्यादिबो ध्यम् ॥ विमानाद्वादशचक्रवर्त्यन्त र्गतचक्रवर्त्ति विशेषे

मघवती । स्त्री० इन्द्राण्याम् ॥

मघा । स्त्री० दशमनक्षत्रे ॥ अत्रजात स्यफलयथा । कठोरचित्त पितृमातृ भक्तस्तीव्रस्वभावस्त्वनवद्यविद्य चे ज्जन्मभ यस्यमघाऽनघ स्यात्सति सदारातिविनाशदक्षा ॥ वहुवचना न्तोप्यदृश्यते ॥ यथा नवोढवीनवा न्नैर्यतश्चश्राद्धैस्तथा । पितर स्य हयन्त्यन्नमष्टकासुमघासुर्च ति ॥ म घायांपिण्डदानेनज्येष्ठपुत्रोविनश्य तीत्येकवचनान्तोपि ॥ औषधविशे षे ॥

मघाभव । पु० शुक्राचार्ये ॥

मघाभू । पु० शुक्राचार्ये ॥

मघी स्त्री० धान्यविशेषे ।

मघोनी । स्त्री० इन्द्राण्याम् ॥

मङ्कुर । पु० दर्पणे । मुकुरे । मङ्कते मर्कि० । वाहुलकादुरच् ॥

मङ्क्षि । त्रि॰ शठे ॥ मङ्कते । मङ्कि॰ । वङ्क्र्यादित्वात्साधु ॥

मङ्घणम् । न॰ लङ्घनार्थे ॥ इति हारावली ॥

मङ्क्षु । अ॰ शीघ्रे ॥ भृशार्थे ॥ मज्जति । टुमस्जोशुद्धौ । वाहुलका त्सु । मस्जिनशोरितिनुम् । स्कोरितिसलोप ॥

मङ्क्षुणम् । न॰ अङ्घाणार्थे ॥ इति त्रिकाण्डशेष ॥

मङ्ग । पु॰ नौमस्तके ॥ मङ्गति । मगिसर्पणे । पचाद्यच् ॥

मङ्गल । पु॰ अङ्गारके । कुजे । इत्यमरः ॥ अस्यवारेजातस्यफल यथा । उग्र प्रतापीक्षितिपालमन्त्रीरणप्रियोवक्रवचा सरोष । सत्वान्वित शूरगणप्रणेताकुजस्यवारेप्रभवोमनुष्य ॥ न॰कल्याणे ॥ सर्वार्थरक्षणे ॥ अगर्हिताभिप्रेतार्थसिद्धौ ॥ यत्खलु क्रियमाणमेवमनप्रह्लादन समीहितसाधनञ्चतन्मङ्गलमुच्यतइतिव्याख्याकारा ॥ आशीर्नमस्क्रियावस्तुनिर्देशोवापितन्मुखमित्यालङ्कारिकोक्ते . काव्यादिमुखे क्रियमाणे ॥ यथाहभगवान्भाष्यकार . । मङ्गलादीनिमङ्गलमध्यानिमङ्गलान्तानिशास्त्राणिप्रथन्ते वीरपुरुषाण्यायुष्मत्पुरुषाणिच भवन्तिअध्येतारश्चप्रवक्तारोभवन्ती तिमङ्गलानुष्ठानप्रयोजनानि ॥ प्रशस्ताचरण नित्यमप्रशस्तविवर्जनम् । एतद्धिमङ्गल प्रोक्तमृषिभिस्तत्त्वदर्शिभि ॥ लोकेऽस्मिन्मङ्गलान्यष्टौब्राह्मणोगौर्हुताशन । हिरण्य सर्पिरादित्यआपोराजातथाष्टम ॥ एतानिसतत पश्येन्नोचेद्दर्च्यादिना यजेत् । प्रदक्षिणन्तुकुर्वीततथाचायुर्नहीयते ॥ अपिच । रोचन चन्दन हैमम्मृदङ्गदर्पण मणिम् । गुरुमग्नि तथासूर्यंप्रात पश्येत्सदाबुध ॥ मङ्गति॰दुरदृष्टमनेन । मगि सर्पणे॰ गतौवा । मङ्गेरलच् ॥ अशुभानिनिराचष्टे तनोतिशुभसन्तति म् । स्मृतिमात्रेणयत्पुसाब्रह्मतन्मङ्गल विदुरितिविष्णुपुराणम ॥ त्रि॰कल्याणवति ॥

मङ्गलग्रहम् । न॰ मेषराशौ ॥ वृश्चिकराशौ ॥ मङ्गलस्यहतीयग्रहस्यगृहम् ॥

मङ्गलचण्डिका । स्त्री॰) दुर्गायाम् ॥
मङ्गलचण्डी । स्त्री॰ ) यथा । प्रधानाशस्वरूपाचदेवीमङ्गलचण्डिका । प्रकृतेर्मुखसम्भूतासर्व्वमङ्गल दासदा ॥ सृष्टौमङ्गलरूपाचस हारेकोपरूपिणी । तेनमङ्गलचण्डी सापण्डितै . परिकीर्त्तितेतिभागवतम् ॥

मङ्गलच्छाय । पुं॰ प्लक्षवृक्षे ॥

मङ्गलपाठक । पु० स्तुतिपाठके । वन्दिनि ॥
मङ्गलप्रदा । पु० दुर्गायाम् ॥ हरिद्रायामितिकश्चित् ॥ त्रि०मङ्गलदातरि ॥
मङ्गलप्रस्थ । पु० भारतवर्षस्यपर्वतान्तरे ॥
मङ्गलमालिका । स्त्री० स्त्रीभेदे ॥ मङ्गलायामालिका ॥
मङ्गला स्त्री० उमायाम् । काश्यान्याम् ॥ गयायांमङ्गलास्मृतेतिदेवीगीता ॥ सितदूर्वायाम् ॥ साध्व्याम् ॥ करञ्जभेदे ॥ हरिद्रायाम् ॥ नीलदूर्वायाम् ॥ वसाहेम्नाद्वविशेषे ।
मङ्गलागुरु । न० अगुरुचतुष्टयान्तर्गतागुरुविशेषे ॥ यथा । मङ्गल्यामल्लिकागन्धामङ्गलागुरुवाच्या । मङ्गल्यागुरुशिशिरागन्धाढ्यायोगवाहिका ॥
मङ्गलाचरणम् । न० ग्रन्थाद्यारम्भे मङ्गलकरणे ॥ मङ्गलाचरणशिष्टाचारात्फलदर्शनाच्छ्रुतितश्चावश्य कर्त्तव्यमित्याद्युर्व्याख्याकाराः ॥
मङ्गलाह्वा । स्त्री० दूर्वायाम् ॥
मङ्गलिकाक्षीरणम् । न० असाहस्य कथायाम् ॥
मङ्गल्य पु० त्रायमाणायाम् । अश्वत्थे ॥ बिल्वे ॥ मसूरके जीवके ॥ नारिकेले ॥ कपित्थे ॥ रीठाकरञ्ज ॥ न० दधनि ॥ चन्दने ॥ मङ्गलागुरुणि ॥ सिन्दूरे ॥ स्वर्णे ॥ त्रि० प्रियकरे ॥ रुचिरे ॥ साधौ ॥ मङ्गलेसाधु । तत्रसाधुरितियत् ॥
मङ्गल्यक । पु० मसूरे । स्वार्थेकन् ॥
मङ्गल्यकुसुमा । स्त्री० शङ्खपुष्प्याम् ॥ मङ्गल्यानिकुसुमान्यस्याः ॥
मङ्गल्यनामधेया । स्त्री० जीवन्त्याम् । शाकश्रेष्ठायाम् ॥
मङ्गल्या । स्त्री० मल्लिगन्धागुरुणि शम्याम् ॥ अधःपुष्प्याम् ॥ मिश्याम् ॥ शुक्लवचायाम् ॥ रोचनायाम् । प्रियङ्ग्वाम् ॥ शङ्खपुष्प्याम् । माषपर्ण्याम् ॥ जीवन्त्याम् ॥ ऋद्धिनामौषधौ ॥ वचायाम् ॥ हरिद्रायाम् ॥ शीघ्रायाम् ॥ दूर्वायाम् ॥ मङ्गलेसाधु । तत्रसाधुरितियत् ॥ गौर्याम् । शिवायाम् । भवान्याम् ॥ शोभनानिचश्रेष्ठानियादेवीददतेहरे । भक्तानामार्त्तिहरणीमङ्गल्यातेनसास्मृता ॥
मङ्गिनी । स्त्री० नावि । नौकायाम् ॥
मचर्चिका । स्त्री० प्रशस्ते ॥ मश्मश्चर्चति । चर्चअध्ययने । ग्वु

त् ॥ यथा । प्रशस्तोब्राह्मण ० ब्राह्मणमचर्चिकारूढिशब्दत्वात्० प्रश सावचनैर्स्ति तिसमास ॥

मच्छ । पु० मत्स्ये ॥

मज्जका । स्त्री० मज्जायाम् ॥ मज्जैवस्वार्थेक ॥

मज्जकृत् । न० अस्थिनि ॥

मज्जा । पु० वृक्षसारे । वृक्षादेरुत्तम स्थिरभागे ॥ फलमज्जगुणायथा । यस्ययस्यफलस्येहवीर्यं भवतियादृशम । तस्यतस्यैववीर्यंणमज्जानमपिनिर्दिशेत् ॥ अस्थिमध्यगतधातौ । अस्थिसारे ॥ मज्जस्वरूपमाह । अस्थियत्स्वाग्निनापक्व तस्यसारोद्भवोघन । य स्वेदवत् पृथग्भूत समज्जेत्यभिधीयते ॥ स्थानन्तु । स्थूलास्थिषु विशेषेण मज्जात्वभ्यन्तरेस्थित । इति ॥ अस्यगुणायथा । बलशुक्ररसश्लेष्म मेदोमज्जविवर्द्धन । मज्जाविशेषतोऽस्थ्नाञ्चबलकृत्स्नेहनेहित ॥ मज्जत्यस्थिषु । टुमस्जोशुद्धौ । श्वन्नुक्षिन्निति साधु ॥ शिरोस्थिमध्ये पिण्डितस्नेहे । मस्तिष्के ॥

मज्जनम् । न० स्नाने ॥ मज्जत्यनेन । टुमस्जो० । बहुलमन्यत्रापीति युच् ॥ मज्जायामितिशब्दचन्द्रिका ॥

मज्जसमुद्भवम् । न० वीजे । शुक्रे ।

मज्जसम्भव । पुं० शुक्रे ॥

मज्जा । स्त्री० वृक्षसारे । अस्थिगत धातौ ॥ मज्जते पचाद्यजन्तात् टाप् । मज्जोन्तामज्जयासहेति० द्विरूप ॥

मञ्जाज । पु० भूमिजगुग्गुलौ ॥

मञ्जारस । पु० शुक्रे ॥

मञ्जासारम् । न० जातीफले ॥

मञ्जिका । स्त्री० मज्जकायाम ॥

मञ्च । पु० खटवायाम ॥ कर्णाव शे । माचा०माजा० इ०भा० ॥ उच्चमण्डपविशेषे ॥ दोलायमान गोविन्द मञ्चस्थ मधुसूदनम् । रथस्थ वामन दृष्ट्वापुनर्जन्मनविद्यते इति पुराणम ॥ मञ्चते । मचिधारणोच्छायपूजनेषु । पचाद्यच् ॥

मञ्चक । पु० इन्द्रकोषे । उच्चमण्डपे ॥ खट्वायाम् ॥

मञ्चकाश्रय । पु० मत्कुणे ॥

मञ्चमण्डप । पु० शस्यरक्षार्थकुटीरे । कुट्रङ्गे ॥

मञ्चिका । स्त्री० आसन्द्यायाम् ॥

मञ्जर । पु० वल्लरी ॥ मुक्तायाम् ॥ तिलकद्रुमे ॥ वल्याम् । लतायाम् ॥

मञ्जरि । स्त्री० वल्लर्याम् ॥ मञ्जुत्वमृच्छति । ऋगतौ । अच् । शकन्ध्वादि ॥

मञ्जरी । स्त्री० तिलकद्रुमे ॥ स्थूलमुक्तायाम् ॥ वल्लरी ॥ तुलस्यामृडी ॥

ष् ॥

मञ्जरीनम्र । पुं० वेतसवृक्षे ॥

मञ्जा । स्त्री० मञ्जर्याम् ॥

मञ्जि । पुं० मञ्जर्याम् ॥

मञ्जिका । स्त्री० वारसुन्दर्याम् । वेश्यायाम् ॥

मञ्जिफला । स्त्री० कंदल्याम् ॥

मञ्जिष्ठा । स्त्री० विकसायाम् । जिङ्ग्याम् । समङ्गायाम् । मजीठ० इ० भा० प्र० औषधौ ॥ मञ्जिष्ठा मधुरातिक्ताकषायस्वर्यवर्णकृत् । गुरुरुष्णाविषश्लेष्मशोथयोन्यक्षिकर्णरुक् । रक्तातीसारकुष्ठास्रविसर्पव्रणमेहनुत् ॥ मञ्जौशोभनेवर्णे तिष्ठति । स्था० । सुपिस्थइतिक । अस्त्राम्बेतिषत्वम् ॥ यद्वा । अतिशयेनतमञ्जिष्ठा ॥

मञ्जी । स्त्री० मञ्जर्याम् ॥

मञ्जीर । पुं० मन्थानदण्डरज्जुबन्धनार्थस्तम्भे । कुटरे ॥ पुं० न० नूपुरे ॥ मञ्जति । मजिध्वनौ० सौत्र । बाहुलकादीरन् ॥ शुर्वमरे०ऽ, ॥

मञ्जरीधा । स्त्री० वर्णवृत्तान्तरे ॥

मञ्जु । त्रि० मनोज्ञे ॥ मञ्ज्यते । मजि० । बाहुलकादुः ॥

मञ्जुकेशी । पुं० श्रीकृष्णे ॥ त्रि० मनोज्ञचिकुरविशिष्टे ॥

मञ्जुकेशी । स्त्री० स्वर्गवेश्याभेदे ॥

मञ्जुगमना । स्त्री० हंस्याम् ॥ त्रि० सुन्दरगामिनि ॥

मञ्जुघोष । पुं० शिवे ॥ उपास्यदेवताविशेषे ॥ पूर्वजिने ॥ बुद्धानां देवताभेदे ॥ मञ्जु घोष शब्दोऽस्य ॥ शोभनशब्दे ॥ त्रि० शोभनशब्दवति ॥

मञ्जुपाठक । पुं० शुके । कीरे ॥ त्रि० सुन्दरपाठकर्त्तरि ॥

मञ्जुप्राण । पुं० ब्रह्मणि ॥

मञ्जुभद्र । पुं० पूर्वजिनविशेषे ॥ कामदर्पे । मञ्जुघोषे ॥ शिवे ॥

मञ्जुभाषिणी । स्त्री० अतिजगतीछन्द प्रभेदे ॥ यथा सजसाजगौ भवतिमञ्जुभाषिणी ॥ अमृतोर्मिशीतलकरेणलालयस्तनुकान्तिरोचितविलोचनोत्करे । नियतकलानिधिरसीतिसत्रवीमुदमच्युतेव्यधितम ञ्जुभाषिणी ॥सुनन्दिनीतिशम्भौ॥

मञ्जुमणि । पुं० पुष्परागे । पोखराज० इ० भा० ॥

मञ्जुल । पुं० जलरङ्कौ ॥ न० जलाभ्रसे । शैवाले ॥ निकुञ्जे ॥ त्रि० मञ्जुनि ॥ मञ्जु० मञ्जुत्वंलाति । ला० । का ॥ मञ्जुमञ्जुलमस्यास्तीतिन्वा । सिध्मादित्वाल्लच् ।

मञ्जुवक्त्र । त्रि० सौन्दर्यमयुक्त ॥

मञ्जुवाक् । त्रि० मधुरवचने ॥

मञ्जुश्री । पुं० मञ्जुघोषे ॥ म-

अजुर्मनोच्चाश्रीर्यस्य॥

मञ्जुषा । स्त्री० मञ्जूषायाम् । पिटके ।

मञ्जूषा । स्त्री० पिटके । दार्वादिनिर्मितपेटके ॥ पाषाणे । प्रस्तरे ॥ मञ्जिष्ठायाम् ॥ हिरण्यादिनिचेपाधारे ॥ मञ्जत्यचवा । टुमस्जोमस्जिनु मृचेत्यूषन् ॥

मटची । स्त्री० मर्दनहेतुभूतेपाषाणवद्दृष्ट्यादौ ॥ अशन्याम् ॥

मटस्फटि । पु० दर्पारम्भे ॥

मट्टकम् । न० गृहमस्तके ॥

मठ । पु० छात्रादिनिलये ॥ मठन्त्यत्र । मठमदनिवासयो हलश्चेतिघञ् । सञ्ज्ञापूर्वकत्वान्नवृद्धि ॥ यद्वा । मठतिनिवासयति । पचाद्यच् ॥ माठ० इतिख्यातेपक्वान्नविशेषे ॥ यथा । समितामर्दयेदाज्येर्जलेनापिचसन्नयेत् । तस्यास्तुवटकङ्कृत्वापचेत्सर्पिषिनीरसम् ॥ एलालवङ्गकर्पूरमरिचाद्यैरलङ्कृते । मज्जयित्वासितापाकेततस्तञ्चसमुद्धरेत् ॥ अयप्रकार ससिद्धोमठइत्यभिधीयते ॥ मठस्तुवृंहणोवृष्योबल्यसुमधुरोगुरु । पित्तानिलहरोरुच्योदीप्ताग्नीनासुपूजित । समिताशर्करासर्पिर्निर्मिताअपरेप्रिये । प्रकाराअमुनातुल्यास्तेपिचैतद्गुणास्मृता ।

मठर । पु० मुनिविशेषे ॥ शौण्डे ॥ मन्यते । मनज्ञाने । मनुतेवा । मनुअवबोधनेवा । वञ्चिमनिभ्या किञ्चेतिअरठोन्तादेशश्च ॥

मडक । पु० मडुवा० इ० प्र० शस्ये

मड्डु । पु० वाद्यप्रभेदे मज्जति० मज्जन्तिशब्दायचवा । टुमस्जोशुद्धौ ॥ भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्यउ । पृषोदरादि ॥ डमरुरेवमड्डुमड्डुरित्युच्यते ॥ चुचुक० इ० गौडेषुयस्यप्रसिद्धि ॥

मड्डुक । पु० मड्डुवाद्ये ॥ स्वार्थे क ॥ मर्दले ॥

मणि । पु० स्त्री० अश्मजातौ । रत्ने ॥ मुक्तादौ ॥ अजागलस्तने ॥ लिङ्गाग्रे ॥ अलिञ्जरे ॥ योन्यग्रभागे ॥ स्तने । मणिबन्धे ॥ मण्यते । मणशब्दे । सर्वधातुभ्यइन् ॥

मणिकम् । न० अलिञ्जरे , माट० इ० भा० प्र० ॥ मणति । मण० । इन् । स्वार्थेयावादित्वात्कन् । सञ्ज्ञायाकोवा ॥

मणिकार । पु० मणिकारे ॥

मणिकर्णिका । स्त्री० काश्यन्तर्गतप्रधानतीर्थे ॥ इश्वोविश्वेश्वरोदेवो स्नातव्यामणिकर्णिका ॥

मणिकर्णिकेश्वर । पु० काश्यन्तर्गतशिवलिङ्गविशेषे ॥ मणिकर्णिकाया ० मणिकर्णिकायावाईश्वर

मणिकाननम् । न० कण्ठे ॥ रत्नवने

मणिकार । पुं० वैकटिके । मणिघटितालङ्कारादिकर्त्तरि । जौहरी इ० भा० । मणिकार० इति च ॥ मणिं करोति । कृ+अण् । कर्मण्यण् ॥ न्यायचिन्तामणिकर्त्तरि ॥

मणिकूट । पुं० पर्वतविशेषे ॥ यथा । मणिकूटस्याथगिरेर्गन्धमादनकस्य च । मध्ये वसति लौहित्यो ब्रह्मपुत्र समाश्रित ॥ ब्रह्मद्वीपस्थे गिरिविशेषे ॥

मणिखनि । स्त्री० मण्याकरे ॥ मणेः खनि ॥

मणिगुणनिकर । पुं० अतिशर्करी १५ प्रभेदे ॥ यथा । वसुमुनियतिरिति० मणिगुणनिकर . । यथा । नरकरिपुरवतु० निखिलसुरगति० रमितमहिमभरसहजनिवसति । अनिबधिमणिगुणनिकरपरिचितिसरिदधिपतिरिवधृततनुविभव ॥

मणिग्रीव । पुं० कुवेरात्मजे ॥ मणिरिवग्रीवायस्य ॥ त्रि० रत्नकण्ठे ॥

मणिच्छिद्रा । स्त्री० मेदायाम् ॥ ऋषभाख्यौषधी ॥

मणितम् । न० रतिकूजिते । मैथुनकालीनवाक्ये ॥ रतिकालिकस्त्रीणाक ठकूजितविशेषे ॥ मणनम् । मण० । भावेक्त ॥

मणितारक । पुं० सारसपक्षिणि ॥

मणिद्वीप । पुं० क्षीराब्धिमध्येपद्मरागादिमणिमयान्तरीपे । त्रिपुरसुन्दर्यावासस्थाने ॥ भुवनेश्वर्यास्थानम् इ० देवीगीता । ब्रह्मलोकादूर्ध्वभागे सर्वलोकोऽस्तिय . श्रुत । मणिद्वीप सएवास्तियत्रदेवी विराजते ॥ सर्वस्मादधिकोयस्मात्सर्वलोकस्तत स्मृत । पुरापराम्बयैवाय कल्पितो मनसेच्छया । सर्वादौ निजवासार्थं प्रकृत्यामूलभूतया । कैलासादधिकोलोकोवैकुण्ठादधिकोत्तम ॥ गोलोकादपिसर्वस्मात् सर्वलोकोधिक स्मृत । नैतत्समस्त्रिलोक्यान्तु सुन्दरं विद्यते क्वचिदित्यादिमादेवीभागवतेद्वादशस्कन्धे १० अध्यायेऽस्यवर्णन द्रष्टव्य ॥

मणिनाग । पुं० तीर्थविशेषे ॥

मणिपर्वत । पुं० गिरिविशेषे ॥

मणिपुष्पक । पुं० सहदेवाख्यपाण्डवस्य शङ्खे ॥

मणिपूरम् । न० षट्चक्रान्तर्गतनाभिमध्यस्थदशदलेतृतीये चक्रे ॥ मणिवद्भिन्नं तत्पद्मं मणिपूरं तथोच्यते ॥ देशविशेषे ॥

मणिबन्ध . । पुं० प्रकोष्ठपाण्यो . सन्धिस्थाने । करग्रन्थौ । कलाइ० इ० भा० । हस्तमूले ॥ मणिर्बध्यतेऽत्र । बन्ध+घञ् । हलश्चेति घञ् न० ॥ वृहती ९ छन्द . प्रभेदे ॥ यथा ।

आदितुरीय पञ्चमकषष्ठमथान्त्य स्या दृग् रचयेत् । इन्द्रियवेदैर्श्च विरति-स्तन्मणिबन्ध प्राहफणी ॥ मणिमध्य मितिनामान्तरम् ॥

मणिबन्धनम् । न० हस्तमूले ॥

मणिभद्र । पु० जिनानाप्पूर्वं यक्षवि शेषे । जम्भले ॥ कुवेरसेनापतौ ॥

मणिभूमि । स्त्री० कुट्टिमे। रत्नस्य ख नौ ॥

मणिमञ्जीरम् । न० रत्नमयनूपुरे ॥

मणिमण्डप । पु० रत्नमयगृहे ॥

मणिमध्यम् । न० वृहती ६ छन्दोभे दे । मणिबन्ध ॥ लक्षणयथा । स्या न्मणिमध्यं चेद्भसा. । यथा । का लियभोगाभोगगतस्तन्मणिमध्यस्फो तरुचा । चित्रपदाभोनन्दसुतस्ता रु ननर्त्त सो रमुख ' ॥

मणिमन्थम् । न० सैन्धवलवणे ॥ पर्व तविशेषे ॥

मणिमान् । त्रि० मणिविशिष्टे । रत्न भूषिते ॥ पु० तीर्थं स्वे नवर्णितेप र्वतविशेषे ॥

मणिमन्दिरम् । न० बहुमूल्यप्रस्तरयु क्तगृहे ॥

मणिमाला । स्त्री० हारे ॥ स्त्रीणादन्त क्षतान्तरे ॥ लक्ष्म्याम् ॥ जगती-१२ छन्दोभेदे । यथा । त्यौत्यौम णिमालाछिन्नागुहवक्षो ' ॥ यथा । प्रह्वामरमौलौरत्नोपलक्लृप्ते ०जातप्र तिबिंबाशोणामणिमाला । गोविन्द पदाब्जे राजीनखराणामास्तामममचि त्तध्वान्तं शमयन्ती ॥ मणीनां ० मा ला ० मालेवबा ॥

मणिरागम् न० हिङ्गुले ॥

मणिव । पु० नागविशेषे ॥ मणि रस्यास्ति । अन्येभ्योपिदृश्यतइति व ॥

मणिवर । पु० हीरके ॥

मणिबीज । पु० दाडिमवृक्षे ॥

मणिसर । पु० मुक्ताहारे॥

मणी । स्त्री० मणौ ॥

मणीचकम् । न० इन्दुकान्ते । चन्द्र वर्णरूप्ये ॥ पु० मत्स्यरङ्कख गे ॥

मणीव । अ० मणितुल्ये ॥

मणीवकम् । न० पुष्पे । कुसु मे ॥

मण्टपी । स्त्री० क्षुद्रोपोदक्याम् ॥

मण्ठ . । पु० पक्वान्नविशेषे । मठे । माठ० इ० भा० ॥ मण्ठते । मठि शोके । शोकद्वाध्यानम् । पचाद्य च् ॥

मण्ड । पु० पञ्चाङ्गुले । एरण्डवृक्षे ॥ शाकभेदे ॥ मस्तुनि ॥ भूषा याम् ॥ सारे ॥ पिच्छे ॥ दर्दुरे ॥ भक्तादिभवरसे ॥ तल्लक्षणं यथा भक्तैर्विनाद्रवोमण्ड पेयं भक्तस मन्वितम् ॥ अपिचास्यलक्षणविधि

गुणाश्चलतण्डुलानांसुसिद्धानांचतुर्द
शगुणे जले । रस सिक्थैर्विर
हितोमण्डइत्यभिधीयते ॥ शुण्ठी
सैन्धवसंयुक्तोदीपन . पाचनश्चस
। अन्नस्यसम्यक्सिद्धस्याच्छो याम
ण्डस्सिद्धता ॥ पेयायूषयवागूनां
विलेपीभक्तयोरपि । तस्य गुणाः ।
मण्डोग्राहीलघुः शीतोदीपनोधा
तुसाम्यकृत् ॥ ज्वरसन्तर्पणोवल्य
पित्तश्लेष्मापह । अपिच शुद्धो
धनोवस्तिविशोधनश्चप्राणप्रद शो
णितवर्द्धनश्च । ज्वरापहारीकफ
पित्तहन्तावायुं नयेदष्टगुणोहिम
ण्ड ॥ लाजमण्डोग्निजननोदाह
तृष्णानिवारण ज्वरातीसारशम
नोऽशेषदोषामपाचन ॥ वाट्यम
ण्डोग्निजनन . शूलानाहविनाश
न । पाचनोदीपनोहृद्य . पित्त
श्लेष्मानिलापह , वाट्यमण्डोभृष्टय
वमण्ड ॥ न० मस्तुनि ॥ मण्ड
ने ॥ पु० न० सर्वेषामन्नदध्या
दीनामग्ररसे । मांड० क्ष० भा०
॥ सारे ॥ पिच्छे ॥ मण्डयति ।
मण्डिभूषायाम् । पचाद्यच् ॥ म
ण्डते० मण्डाते वा । अच्० घञ्
वा ॥ मन्यते वा । मनज्ञाने ।
अमन्नाड्ड' ॥

मण्डक । पु० मांडे० मांडा० म
ण्डाकृतिप्रसिद्धखाद्यपदार्थे ॥ त
द्विधानं यथा । वारिणाकोमलांकृ
त्वा समितां साधु मर्दयेत् । हस्त
लालनया तस्या लोप्त्रीं सम्यक् प्रसा
रयेत् ॥ अधोमुखघटस्योपरि न्यस्
त प्रक्षिपेद्धि । मृदुनावह्निना
साध्य सिद्धोमण्डकउच्यते ॥
दुग्धेनसाज्यखण्डेनमण्डकं भक्षयेन्न
र । अथवासिद्धमांसेनसततकपट
केनवा ॥ मण्डकोऽत्र गुरुर्हृद्योबल्यो
रुचिकरोभृशम् । पाकेपिमधुरोग्राही
लघुर्दोषत्रयापह ॥ गीताङ्गवि
शेषे ॥ यथा । जयप्रिय कामा
पद्मकमल सुन्दरस्तथा । मङ्गलो
वल्लभश्चेतिमण्डका षट् प्रकीर्त्ति
ता ॥ एषांविशेष सङ्गीतदा
मोदरेद्रष्टव्य ॥

मण्डनम् । न० प्रसाधने । भूषणे ॥
चतुर्थ मण्डन वासोभूषामाल्यानु
लेपनै . ॥ मण्ड्यतेऽनेन । मण्डि०
। ल्युट् ॥ कौतिभूमिभुजां नति
मुपचतांक्षीरकङ्गनामांभूतिर्दम्य
श्यो शिशवोरक्षकविताबुधे .
प्रसादोगिराम् । लावण्य वपुष
स्मृति ' सुमनस ' शान्तिर्द्विजस्य
क्षमाशक्तस्य द्रविण गृहाश्रमवतांस्वा
स्थ्य सतांमण्डनम् ॥ त्रि० भूष
याकर्त्तरि अलङ्करिष्णौ । मण्ड
नशील . । मण्डि० । त्यु मण्डाद्यर्थे
भ्यश्चेतियुच् ॥

मण्डनता । स्त्री० प्रसाधनत्वे ॥
मण्डप । पु० न० जनाश्रये । जन विश्रामसद्मनि । मण्डनम् मडि । घञ् । मण्ड पाति । पारक्षणे । आतोऽनुपसर्गेक ॥ देवादिद्सवेश्मनि ॥ त्रि० मण्डपानकर्त्तरि ॥ मण्ड पिवति । पा० । क ॥
मण्डपी । स्त्री० निष्पाव्याम् ।
मण्डयन्त । पु० नटे ॥ वधूसमूहे । अन्ने ॥ अलङ्कारे । भूषणे ॥ मण्डयति । मडिभूषायाञ्चर्यञ्च । तॄभूवह्विसील्यादिना० झच० सच्चषित ।
मण्डयन्ती । स्त्री० योषिति । वध्वाम् ॥ नव्याम् ॥ षित्वान्ङीष् ॥
मण्डयमान । त्रि० मण्डनकुर्वाणे ॥ मण्डयति० तच्छील । मडि० । ताच्छील्यवयोवचनशक्तिषुचानश् ॥
मण्डरी । स्त्री० चुर्चुर्याम् ॥
मण्डल । पु० कुक्कुरे ॥ सर्पप्रभेदे ॥ न० परिधौ चन्द्रसूर्ययोर्वेष्टिवेष्टने । चन्द्रसूर्ययोरुत्पातजरश्मिमण्डले ॥ य० वातेनमण्डलीभूता सूर्या चन्द्रमसो कराः । मालाभाव्योम्निसन्वन्तो परिवेश प्रकीर्तितश्चति ॥ चक्रवाले । मण्डलाकारेणपरिणतेसमूहमात्रे ॥ चतुरस्रादौ ॥ यथा। चतुरस्रंत्रिकोणञ्चावर्त्तुलचार्द्धचन्द्रकम् । कर्तव्यमानुपूर्व्येण ब्राह्मणादिषुमण्डलमिति ॥ कोठरोगे । मण्डलवत् कुष्ठे ॥ देशे ॥ समन्तादिशतियोजने । चत्वारिंशद्योजनेवादेशश्चतिकेचित् ॥ द्वादशराजके ॥ द्वादशराजमु द्वादशराजमण्डलतुकामन्दकेनोक्त । यथा । अरिर्मित्रमरेर्मित्रमित्रमित्रमत परम् । तथारिमित्रमित्रच अविजिगीषो पुर स्थिता ॥ पार्ष्णिग्राह स्मृत पश्चात्ताक्रन्दस्तदनन्तरम् । आसारावनयोश्चैवविजिगीषोस्तुपृष्ठत मण्डलम् ॥ अरेश्चविजिगीषोश्चमध्यमोभूम्यनन्तर । अनुग्रहेसंहतयो समर्थौव्यस्तयोर्वधे ॥ मण्डलाद्वहिरेतेषामुदासीनोबलाधिक । अनुग्रहेसहताना व्यस्तानाञ्चवधेप्रभु ॥ पश्चविजिगीषो पुर सरा । पार्ष्णिग्राहाक्रन्दपार्ष्णिग्राहासाराक्रान्दासाराश्चेतिपृष्ठतश्चत्वार । मध्यमोदासीनौद्वौ । विजिगीषुरेकश्चेत्येवद्वादशराजमण्डलम्भवति ॥ गोले ॥ चक्रे॥ सङ्घाते ॥ नखाघाते । गदायुद्धेगतिभेदे ॥ धन्विकास्थानपश्चकान्तर्गतस्थितिविशेषे ॥ यथा । मण्डलाकारपादाभ्यामण्डलस्थानमीरितम्॥ व्याघ्रनखाख्यगन्धद्रव्ये ॥ व्यूहविशेषे । यथा । तिर्यग्वृत्तिश्चदण्डस्याद्भोगोन्वावृत्तिरेवच । मण्डलसर्वतोवृत्ति पृथग्वृत्तिरसहत ॥ मडयति। मडि० । वृषादित्त्वात्कल ॥ मडं

भूपांलातिवा । मडते॰ इतिवा ॥ यद्वा । मडमस्यस्य । सिध्मादित्वा ल्लच् ॥ त्रि॰ निवहे । विम्बे ॥
मण्डलकम् । न॰ बिंबे ॥ कुष्ठभेदे । मण्डलाकारकुष्ठे । कोठे ॥ दर्पणे ॥ मण्डलाकारव्यूहे ॥ पु॰ कुक्कुरे ॥ मण्डलमिव । इवेप्रतिकृताविति कन् ॥
मण्डलनृत्यम् । न॰ हल्लीषे । मण्डलाकारनृत्ये ॥
मण्डलपत्रिका । स्त्री॰ रक्तपुनर्नवाया म् ॥
मंडलसङ्क्रम । पु॰ राशिसङ्क्रमे ॥
मंडलाग्र । पु॰ कृपाणे । खड्गे ॥ मंडलमग्रमस्य ॥
मंडलायितम् । न॰ वर्तुले ॥
मंडलाधीश । पु॰ मंडलेश्वरे । मध्यमे॥
मंडलिका । स्त्री॰ परिधौ ॥ मंडलात् स्वार्थेक । कात्पूर्वस्येकार ॥ मंडल्याम् ॥ स्वार्थेके॰ कोण ॥
मण्डली । पु॰ भुजङ्गे ॥ बिडाले ॥ जाहके ॥ गोनासे॰ सर्पे ॥ वटवृक्षे॥
मण्डली । स्त्री॰ मण्डलाकारेणपरिधृतसमूहे ॥ दूर्वायाम् ॥ गौरादित्वान्ङीष् ॥
मण्डलेश । पु॰ एकजन्मनि । भयापहे । मण्डलेश्वरे ॥ शाण्डक्यादेर्व्या स्थाने ॥ मण्डलस्येश : ॥
मण्डलेश्वर । पु॰ नृपान्तरे ॥ भूम्यादि शाधिपे ॥ चतुर्योजनपर्यन्तमधिकारीनृपस्य च । योराजातच्छतगुणः सएवमण्डलेश्वर ॥ मण्डलस्यश रिमित्रादिरूपस्यदेशस्यईश्वर ॥
मण्डहारक । पु॰ शौण्डिके ॥ मण्डसुराग्ररसम्हरति । ण्वुञ् । कर्मण्यण् । स्वार्थेक ॥
मण्डा । स्त्री॰ आमलक्याम् ॥ सुरायाम् ॥ मण्डे पचाद्यजन्ताट्टाप् ॥
मण्डित । पु॰ बौद्धगणाधिपविशेषे ॥ त्रि॰ भूषिते ॥ मंडते । मडि॰ क्त ॥
मण्डुक । पु॰ सङ्ग्रहे ॥
मण्डूक । पु॰ गढवर्चसि । दर्दुरे । भेके । शोणके ॥ मुनिविशेषे ॥ न॰ बन्धविशेषे ॥ मण्डयति॰ जलाशयम्॰ मण्डतेवा । मडि॰ । शलिमण्डिभ्यामूकण् ॥
मण्डूकपर्ण । पु॰ पत्रोर्णे । श्योनाकवृक्षे ॥ शोणके ॥ मण्डूकइवपर्णमस्य ॥ कपीतने ॥
मण्डूकपर्णी । स्त्री॰ मञ्जिष्ठायाम् ॥ ब्राह्म्याम् ॥ गोजिह्विकौषधौ ॥ आदित्यभक्तायाम् ॥ मण्डूकवत्पर्णमस्या । पाककर्णेतिङीष् ॥
मण्डूकमाता । स्त्री॰ ब्राह्म्याम् ॥
मण्डूका । स्त्री॰ मञ्जिष्ठायाम् ॥
मण्डूकी । स्त्री॰ मण्डूकपर्ण्याम् ॥ धृष्टायां

षिति । भेक्याम् ॥ ब्राह्मयाम् ॥ सूर्यभक्तायाम् ॥

मडूरम् । न० लौहमले । सिंहाणे । शिङ्घाणे ॥ ध्मायमानस्यलोहस्यमलमडूरउच्यते । यल्लोहयद्गुणप्रोक्तं तत्किट्टमपितद्गुणम् ॥ शतोर्द्धमुत्तमकिट्टंमध्यञ्चाशीतिवार्षिकम् । अधमम्षष्ठिवर्षीयंततोहीनोविषोपमम् ॥ मूण्डते ।मडि० । खर्जूरादित्वादूर ॥

मडोदकम् । न० चित्तरागे ॥ आतर्पणे । आलिम्पने ॥

मतम् । त्रि० सम्मते ॥ ज्ञाने ॥ अर्चिते ॥ शिष्टसम्मते ॥ तर्किते ॥ मन्यते । मनज्ञाने । मतिबुद्धिपूजार्थेभ्यश्चेतिवर्तमानेक्त ॥ न० अभिप्राये ॥ निश्चये ॥

मतङ्ग । पुं० मुनिविशेषे ॥ मेघे ॥

मतङ्गकेदार । पु० तीर्थविशेषे ॥

मतङ्गज . । पु० गजे । हस्तिनि ॥ मतङ्गात्करिणोजात । जनी० । पञ्चम्यामजाताविति ड ॥

मतल्लिका । स्त्री० प्रशस्ते ॥ मत० मतिम्० अलति । अलभूषणादौ । ण्वुल् । पृषोदरादित्वाटल्ल । प्रशस्त पुरुष ० पुरुषमतल्लिका । मतल्लिकायारूढिशब्दत्वात्० प्रशंसावचनैश्चेतिसमास ॥

मतानुज्ञा । स्त्री० निग्रहस्थानभेदे ॥ तस्यलक्षणयथा । स्वपक्षेदोषाभ्युपगमात्परपक्षेदोषप्रसङ्गोमतानुज्ञा । इ० गो० सूत्रम् । ६२ ॥ अस्यार्थ । दोषाभ्युपगमात्० दोषमनुकृत्येत्यर्थ । यथाशब्दोनित्य श्रावणत्वादित्युक्ते ०ध्वनावनैकान्तिकत्वेन हेत्वाभासोयमित्युक्तौ० शब्दोऽनित्य कृतकत्वादितिसाधितेध्वनेरपिपक्षत्वान्नदोष इत्युक्तौ० असिद्धत्वात्तवापिहेत्वाभासोयमित्युक्तौ० सोयंमतानुज्ञयानिगृहीत स्यादप्रतिषिद्धमनुमतभवतीतिस्वपक्षे दोषाभ्युपगमात् ॥ इति ॥ ६२ ॥

मति । स्त्री० इच्छायाम् ॥ धियि ॥ बुद्धौ । यद्यद्यच्चक्षेजन्मतन्मतिस्तादृशीभवेत् ॥ स्मृत्याम् ॥ श्रुतस्यमनने ॥ मतिकरौषध यथा । पाठाहेजीरकेकुष्ठमश्वगन्धाजमोदकम् । वचात्रिकटुकश्चैवलवणाचूर्णमुत्तमम् ॥ ब्राह्मीरसेभावितञ्चसर्पिर्मधुसमन्वितम् । मासाहभक्षितकुर्यान्म ्[illegible] मतिपरामितिगरुडपुराणम् ॥ मन्यतेअनया । मनज्ञाने । क्तिन् ॥ मतिर्मनन तर्कोमन्तव्यविजयश्च इरइति छान्दोग्यमहाभाष्यम् ॥ आर्ये ॥ शाकभेदेइत्यजयपाल ॥ अतीतानुस्मृतिर्मेधातत्कालग्राहिणीमति । शुभाशुभविचारज्ञाप्रज्ञाधीरैरुदाहृतेतिविशेष ॥

मतिगर्भ । त्रि० प्रतिभासारे ॥
मतिदा । स्त्री० ज्योतिष्मत्याम् ॥ शि
मृडीक्षुपे ॥
मतिभ्रम । पु० भ्रमे ॥ मतेर्भ्रम ॥
मतिभ्रान्ति । स्त्री० मतिभ्रमे । मि
थ्यामतौ । मतेर्भ्रान्ति ॥
मतिमान् । त्रि० प्राज्ञे ॥
मतिविभ्रस । पु० उन्मादरोगे ।
मतेर्भ्रंसोनाशोयेन ॥
मतुवर्थीय । पु० मत्वर्थीयेषुप्रत्ययेषु ॥
बाहुलकान्मतुवर्थशब्दाच्छ ॥ शेषि
कान्मतुवर्थीयादितियथा ॥
मत्कुण । पु० मकनाद्भूतिख्यातेनि-
र्विषाणेभे । कालेग्यजातदन्ते गजे ॥
नि श्मश्रुपुरुषे ॥ उद्दंशे । रक्त
पायिनि । रक्ताङ्गे । मञ्चाश्रये०
कीटविशेषे । उडुस० माकुण०
खटमल० ड्रु०चभाषा ॥ नारिकेले ॥
जङ्घात्राणे । जङ्घासम्बद्धवाससि ॥
मत्कुणा । पु० निर्लोमयोनौ ॥
मत्कुणारि । पु० इन्द्राशने । भङ्गा
याम् ॥
मत्त । पु० प्रभिन्ने । क्षरन्मदेहस्ति
नि । गर्जिते ॥ धुस्तूरे ॥ कोकिले ॥
महिषे ॥ त्रि० हृष्टे ॥ मदिरामत्ते
॥ शौण्डे माद्यतिस्म । मदोहर्षे
; गत्यर्थेतिक्त । नध्याख्येतिनत्व ॥
मत्तकाशिनी । स्त्री० अत्युत्तमनार्याम्
। वरवर्णिन्याम् ॥ मत्ता० क्षीवे
वकाशतेभाति । काशृदीप्तौ । कत्त
र्युपमानइतिणिनि ॥
मत्तकासिनी । स्त्री० वरारोहायायो
षिति ॥ मत्तेवकासते । कासृशब्द
कुत्सायाम० कसगतिशासनयोर्वा
। कर्त्तर्युपमानइतिणिनि ।
मत्तकीश । पु० हस्तिनि ॥
मत्तवारण । पु० प्रक्षिप्तकाटकुञ्जरे ।
मत्तगजे ॥ न० प्रासादवीथीनावर
गडे । कोठेकावरडा० हु०भा० ॥
अपाश्रये । प्राङ्गनावरणे ॥ पूगचूर्णे ॥
मत्तमयूर । पुं० अतिजगती १३ छ
न्द प्रभेदे । यथा । वेदैरन्ध्रैर्म्तौस
यगामत्तमयूर । यथा । लीला
नृत्यन्मत्तमयूरध्वनिकाम्तम् ० नृ
त्यन्नीपामोदिपयोदानिलरम्यम् ।
रासक्रीडाहृष्टमनागोपवधूभि ०
कंसध्वंसीनिर्जनवृन्दावनमाप ॥
मत्तमातङ्ग । पु०दण्डकप्रभेदे ॥ यथा ।
आदितोरागणाखे च्छयायवदत्ता
सप्तमत्तमातङ्गनामामहादण्डक स
न्मते०स्वान्तरेनसमादायमोदायचे
तोविधेहिप्रभोभारतीरीतिविश्रान्ति
भूस्त्वयत । विस्फुरत्सङ्गरप्राङ्ग
णेनागराजीसचीत्कारफूत्कारधाराकु
लेसावधानोयथा० पन्नगाधीशशुद्ध
प्रबुद्धेकबुद्धिप्रकाशप्रवृत्तेवदद्दृत्तथा
स्तेऽपिनित्ययथा ॥
मत्तमातङ्गलीलाकर । पुं० दण्डकप्र

भेदे ॥ यथा । यत्तरेफ पर खे
च्छयागुम्फित ॥ सस्मृतोद्दण्डकोम
त्तमातङ्गलीलाकर ॥ हेमगौरे
वसानोऽशुकेइन्द्रनीलासितेवर्ष्मणि
स्पष्टदिव्यानुलेपाङ्कितो॰हारतारा
शुवद्योनभास्विचमालाञ्चितोभव्यभू
षोज्वलाङ्ग समसीरिणा । अङ्ग-
नाभाम्बरेणेन्दुकुन्दाभदेहेनलीला
परीहासहासोर्मिकौतूहले क
सरङ्गाद्रिगः पातुनश्चक्रपाणिर्गति
क्रीडयामत्तमातङ्गलीलाकर ॥

मत्ता । स्त्री॰ मदिरायाम् ॥ मदेनमू
ढायाम् ॥ पङ्क्तिच्छन्द १० प्रभे
दे ॥यथा। चं यामत्तामभसगस्टष्टा ॥
यथा । पीत्वामत्तामधुमधुपाली॰-
कालिन्दीयेतटवनकुञ्जे । उद्दीव्य
न्तीव्रजजनरामाकामासक्तामधुजि
तिचक्रे ॥

मत्ताक्रीडम् । न॰ विकृतिच्छन्द , २३
प्रभेदे ॥ यथा । मत्ताक्रीड वस्विष्वा
शायतिमयुगगयुगमनुलघुगुरुभि
॥ यथा । मुग्धोन्मीलन्मत्ताक्रीड
मधुसमयसुलभमधुरमधुरसात्॰गा
नेयानेकिञ्चितच्छन्दत्पद्मरुणनयन
युगलसरसिजम् । रासोल्लासक्रीड-
त्कम्द्रजयुवतिवलयविहितभुजरस
म्॰सान्द्रानन्द वृन्दारण्ये स्मरजह
रिमनघचरणपरिचयम् ॥

मत्तालम्ब । पु॰ प्राङ्गनावरणे । अ
पाश्रये । प्रगीवे । मत्तवारणे ॥

मत्तेभगमना । स्त्री॰ स्त्रीविशेषे । म
त्तगजगामिन्याम् ॥ मत्तेभवद्गम
नयस्या सा ॥

मत्पूर्व । त्रि॰ मदीयप्राचीने ॥

मत्यम् । न॰ दात्रादिमुष्टौ । वरटे ।
वैटा॰इ॰भा॰ ॥ मतज्ञानम्॰तस्य
करणम्॰भाव साधन वा । मत
जनहलात्करणजल्पकर्षेषु॰इतिय
त् ।

मत्वर्थीय । पु॰ मतुवर्थीयेप्रत्यये ॥
मत्वर्थाच्छ । बहुलवचनादकार-
लोप ॥

मत्स । पु॰ मत्स्ये ॥

मत्सगण्ड । पु॰ गलग्रहे । मत्सघण्ट
इ॰गौ॰दे॰प्र॰व्यञ्जनविशेषे ॥

मत्सर । पु॰ मात्सर्ये । अन्यशुभद्वे
षे ॥ क्रोधे ॥ वैरे ॥ त्रि॰असह्यप
रसम्पत्तौ । परोत्कर्षासहनपूर्विका
यास्वोत्कर्षवाञ्छायाम् । स्वप्रयो
जनप्रतिसन्धान विनापराभिमतनि
वारणेच्छायाम् ॥ अन्यशुभद्वेषव
ति ॥ कृपणे ॥ माद्यतिपरहृच्छे ।
मदीहर्षे । कृधूमदिभ्य किदिति
सर ॥ मत्सरहर्षहेतुमितिवेदभा
ष्यम् ॥ आत्मधिक्कारविशेषे ॥ य-
था । निन्दन्तिमासदालोकाधिग-
स्तुममजीवनम् । इत्यात्मनिभवेद्य
स्तुधिक्कार सचमत्सर ॥

मत्सरा । स्त्री० मक्षिकायाम् ॥
मत्सरी । त्रि० अन्यशुभद्वेष्टरि । कृपणेऽपि । दुर्जने । पिशुने । सूचके । नीचे । द्विजिह्वे । खले ॥ मत्सरोऽस्यास्मिन् वा । इनि ॥
मत्सी । स्त्री० मत्स्यस्त्रियाम् ॥ मत्स्यशब्दात्स्त्रीत्वेच्छायां गौरादित्वात् ङीषि० सूर्यतिष्येति यलोपे सति मत्सीति रूपम् ॥
मत्स्य । पु० मीनान्तरे ॥ अभिस्य यादवे । नारायणे ॥ द्वादशराशौ । मीने ॥ अष्टादशपुराणान्तर्गते चतुर्दशसहस्रश्लोकात्मके पुराणविशेषे ॥ दशावतारान्तर्गते प्रथमावतारे ॥ मत्स्याः भूम्नि । देशविशेषे ॥ पुलिन्दादुत्तरे भागे कच्छाच्च पश्चिमे शिवे । मत्स्यदेशः समाख्यातो मत्स्यवाहुल्यकारकः ॥ मत्स्या नानिवासो जनपदः मत्स्याः । अणो लुप् । लुपि युक्तवद्भाव ॥ देशविशेषे ॥ विराटनगरे ॥ माद्यति । मदी० । ऋतन्यञ्जीति मदे स्यन् । जनिदेस्यादिना० शो वा । स्वरभेदः ॥ पु० स्त्री० जलजन्तुविशेषे । पृथुरोमणि । झषे । मीने । वैसारिणे । अण्डजे । मच्छी० इ० भाषा ॥ रोहिताद्यास्तु ये जीवास्ते मत्स्याः परिकीर्त्तिताः ॥ अथ तेषां गुणाः । यथा । मत्स्याः स्निग्धोष्णमधुरा गुरवः कफपित्तलाः । वातघ्नाश्च वृष्याश्च रोचकाबलवर्द्धनाः ॥ अध्वव्यवायसक्तानां दीप्ताग्नीनां च पूजिताः ॥ शुष्कमत्स्या न बल्याः स्युर्दुर्जरा विड्विबन्धनाः । दग्धमत्स्यो गुणैः श्रेष्ठः पुष्टिकृद्बलवर्द्धनः ॥ सूक्ष्ममत्स्यास्तु । भर्जितास्तिलतैले न सर्वसम्भारसम्भृताः । सूक्ष्मामत्स्याः स्वादुरसा दोषत्रयनिवर्हणाः । पर सूक्ष्मास्तु ये तेषु ते सर्वे पुंस्त्वनाशनाः ॥ अथ कूपादि मत्स्यानां गुणाः । कौपमत्स्याः शुक्रमूत्रकृच्छ्रघ्ना विवन्धदाः । सरोजा मधुराः स्निग्धा बल्या वातविनाशनाः ॥ नादेयाश्च वृष्या मत्स्याः गुरवोऽनिलनाशनाः ॥ रक्तपित्तकराश्चोष्णाः स्निग्धोष्णाः स्वल्पवर्चसः ॥ चौडया पित्तहरा स्निग्धा मधुरा लघवो हिमाः । ताडागा गुरवो वृष्याः शीतला बलमूत्रदाः ॥ ताडागवन्निर्भरजा बलायुर्मतिदृक्कराः ॥ अथर्तुविशेषे मत्स्यगुणाः । यथा । हेमन्ते कूपजा मत्स्याः ० शिशिरे सारसा हिताः । वसन्ते तु नादेयायीष्मे चौड्यसमुद्भवाः ॥ तडागजास्तु वर्षासु ताश्च पथ्या नदीभवाः । नैर्झरा शरदि श्रेष्ठा निश्रेणीयमुदाहृतम् ॥ अपि च । त्रि शल्कानि

न्दितामत्स्या सर्वे शल्कयुताह्विता । वपु स्थैर्य्यकरावीर्य्यबल पुष्टिविवर्द्धना ॥ कूटकुल्याजल निर्भररतडागवापीजलेषु येमत्स्या । तेऽतिजडानादेयायथोत्तर लघुतरास्तुदेया ॥ चाराम्बुमत्स्या गुरवोविदाह्निनोविष्ट भदास्तेलव णार्णवादिजा । नानाश्रिता स्वादुजलस्थिताश्चपिन्नैयाजडास्ते पितथाश्रिताङ्गमे ॥ चुद्रमत्स्या स्वादुरसादोषत्रयविनाशना । लघुपाकारुचिकरा सर्वदाबेहि तामता । अतिसूक्ष्मा पुंसत्व हरारुच्या कासानिलापहा । मत्स्याण्डगुणास्तु । मत्स्यग र्भोभृशवृष्य स्निग्ध पुष्टिकरो गुरु । कफमेद प्रदोवल्योम्ला निलघ्नो हनाशन ॥ अथरन्धन प्रकारा मत्स्यखण्डानिसङ्ग्रह्यचालयेत्प्रथम जले । ततोवि शनतक्राभ्यावहुश चालयेतपुन ॥ गन्धनाशनप्रकारस्तु । हरिद्रा शुण्ठीधान्याककटुतैलैर्विमर्दये त् । प्रचाल्यहिङ्गुनालिम्पेद्गन्ध स्तेनोपशाम्यति ॥ मत्स्योत्तमरन्ध नन्तु । तप्तेतैलेचिपेडान्य कास मर्दसहिङ्गुकम् । भृष्ट सलवणा त क्रे मत्स्य चिप्त्वापुन पचेत् । अर्द्ध पक्के चिपेदम्ल सिद्धचूर्ण्यसनागरम् ।

दग्धहिङ्गुविनि चिप्यसाधयेन्मत्स्य मुत्तमम् ॥ मत्स्यपिष्टिकातु । गत त्वक्कण्टकोमत्स्योवेसवारेणसयुत । शिलायापेषितोभूय प्रोच्य तैमत्स्यपिष्टिका ॥ तैलेविपाचयेत्प स्चाच्चतुर्थसाम्लसयुतम् । वेसवारेण सयुक्त शिलाय पेषयेत्पुन ॥ अ नयापूर्ववत्कुर्य्यान्मासस्येवप्रकार का । वटिकावटकाद्याश्वसूपका रधियाचिता ॥ मत्स्यपूरणम् तक्रेणखिन्नमत्स्यस्यखण्डान्प्रचाल्य पेषयेत् । वीजपूराद्रैमरिचैर्हिङ्गुसै न्धवजीरकै ॥ सयुक्ताकटुतैलाद्यै र्घृतैपक्वाथचूर्णयेत् ॥ मत्स्यपुटपा कस्तु । गतत्वक्चालितमत्स्य कद लीफलवेष्टितम् । मृदालिप्तपुटेपक्क सञ्जातदाडिमादिना ॥ यञ्चमत्स्य पु टेपक्कजीरतण्डुललेपितम् । तापि कायापुन पक्क समिश्रमरिचादि ना किंचिददन्त्यमृतमस्तिपुरेसुरा णाकिंचिद्दन्तिवनिताधरपल्लवेषु । ब्रूमोवयसकलशास्त्रविचारबुद्ध्या जम्बीरनीरपरिपूरितमत्स्यखण्डेद्भ तिमणिमिश्र ॥ मत्स्यभक्षणनिषेधो यथा । योयस्यमासमश्नातिसत न्मासादउच्यते । मत्स्याद सर्वमा सादस्तस्मान्मत्स्यान्विवर्जयेत् ॥ शि श्यम्यपश्चिमेभागेमत्स्यभुक्पतितो भवेत् । अन्यथकामतोजग्ध्वासोपवा

सस्त्याहवसेत्॥ अन्नानतस्तदर्हम् ॥ मत्स्यभक्षणप्रतिप्रसवो यथा । मत्स्यान्सशल्कान्भुञ्जीतमासरौरवमेव च । निवेद्यदेवताभ्यश्चब्राह्मणेभ्यश्चनान्यथा ॥ सफरसिंहतुण्डश्चतथा पाठीनरोहितौ । मत्स्यास्त्वेतेसमुद्दिष्टाभक्षणायतपोधने ॥ प्रोक्षित भक्षयेदेषांमांसञ्चद्विजकाम्यया । यथाविधिनियुक्तश्चप्राणानामपिचात्यये ॥ इतिकौर्म्मेउपरिभागे १६ अध्याय ॥ अपिच । पाठीनरोहितावाद्यौनियुक्तौहव्यकव्ययो । राजीवान्सिंहतुण्डांश्चशल्कांश्चैवसर्वश ॥ इतिमनु ॥ अनिवेद्यनभोक्तव्यमत्स्यमांसञ्चयद्भवेत् । अत्र विष्ठापयोमूत्र यद्विष्णोरनिवेदितम ॥

मत्स्यकरण्डिका । स्त्री० मत्स्यरक्षणपात्रे । मत्स्याधान्याम् । कुवेण्याम् । खालु इ० इ० गौ० दे० भा० ॥

मत्स्यगन्धा । स्त्री० व्यासदेवस्यमातरि ॥ तोयपिप्पल्याम् । लाङ्गल्याम् ॥ मत्स्यस्यगन्धइवगन्धोऽस्या । उपमानाच्चेतिइत्त्वाभावश्छान्दस ॥

मत्स्यगर्भ । पुं० मत्स्याण्डे ॥

मत्स्यघण्ट । पु० मत्स्यघटितव्यञ्जनविशेषे । गलघण्ट ॥

मत्स्यजालम् । न० आनाये । जाले ॥

मत्स्यखण्डिका । स्त्री० मत्स्यण्डाम् । राव० इ० भा० ॥ मत्स्यखण्डिकाखंडसिता क्रमेणगुणवत्तराइतिवाग्भट । मत्स्यण्डीव । स्वार्थेकन ॥

मत्स्यण्डी । स्त्री० फाणिते राव० इ० काशीभाषा ॥ तत्तद्रूपम् ॥ यथा । इक्षोरसीय सम्यक्कोघन किञ्चिद्द्रवान्वित । मन्दं यतस्यन्दतेतस्मान्मत्स्यण्डीतिनिगद्यते ॥ मत्स्यण्डीभेदिनीवल्यालघ्वीपित्तानिलापहा । मधुरावृष्यौवृष्यारक्तदोषापहास्मृता ॥ मत्स्याण्डाकारत्वात् । मत्स्यण्डी । शकन्ध्वादि ॥ मदसुरवात्स्यन्दते । स्यन्दू प्रस्रवणे । कर्म्मण्यण् । ङीप् । पृषोदरादि ॥

मत्स्यधानी । स्त्री० मत्स्याधान्याम् । कुवेण्याम् ॥ मत्स्याधीयन्तेच । करणाधिकरणयोरितिधाञोल्युट् ॥

मत्स्यध्वज । पु० मत्स्याकारेध्वजे ॥ गिरिकामरूपप्रसिद्धपर्वते ॥ यथा । मणिकूटाचलात्पूर्वंमत्स्यध्वजकुलाचल । निर्दग्धोयत्रमदनोहरनेत्राग्निनापुनरित्यादिकालिकापुराणे ॥ ८१ अध्यायेऽस्ति ॥

मत्स्यनाशक । पु० कुररपक्षिणि । त्रि० मीननाशककर्त्तरि ॥

मत्स्यनाशन । पु० कुररपक्षिणि ॥

मत्स्यपित्ता । स्त्री० कटुरोहिण्याम्, कृष्णभेद्याम् । कटुकायाम् ।। मत्स्यानांपित्तमिवतत्स्वादुत्वात् ॥

मत्स्यप्रलेह । पुं० मत्स्यसव्यञ्जनान्तरे ॥ विषिश प्रलेहे ॥

मत्स्यबन्धी । पु० कैवर्त्ते । धीवरे ॥

मत्स्यबन्धनी । स्त्री० कुवेण्याम् । मत्स्याधान्याम् ।

मत्स्यमण्डक । पुं० व्यञ्जनान्तरे । मत्स्यस्यपिष्टिकाकृत्वापर्णस्यामरुण्डलाकृतिम् । आसुरेणसमुत्स्विन्नासयुक्ताधूलनेनतु । मत्स्यमण्डकमुच्यते सूदशास्त्रे विचक्षणैः ॥

मत्स्यरङ्क । पु० ) पक्षिविशेषे । मत्स्याशिनि । जलमङ्गौ । मणीचकि । माचराङ्गा० इ०गौ०दे०भा० । मच्छरङ्ग० इ०दे०भा० ॥

मत्स्यराज । पु० विराटनृपे । रोहितमत्स्ये ॥ मत्स्यानाराजा । टच् ॥

मत्स्यविन्ना । स्त्री० कटुकायाम् ॥

मत्स्यवेधनम् । न० वडिशे ॥ विध्यतेऽनेन । विधविधाने । करणेतिल्युट् । मत्स्यानावेधनम् ॥

मत्स्यवेधनी । स्त्री० मद्गुपक्षिणि ॥ वडिशे ॥

मत्स्यसन्तानिक । पु० मत्स्यव्यञ्जनविशेषे ॥ यथा । दग्धाङ्गारेसलवणोवेसवारैरुपस्कृत । साद्रकं कटुतैलेनमत्स्यसन्तानिकोभवेत् ॥

मत्स्यसुता । स्त्री० उत्तरायाम् । परीक्षिन्मातरि ॥ सत्यवत्याम् ॥

मत्स्याक्षी । स्त्री० तोयपिप्पल्याम् ॥ सोमलतायाम् । ब्राह्म्याम् ॥ यथा ब्राह्मीवयस्थामत्स्याक्षीमीनाक्षीसोमवल्लरी । मत्स्याक्षीशिशिरारुच्या व्रणदोषचयापहा ॥ इतिराजनिघण्ट ॥ गण्डदूर्वायाम् ॥ हिलमोचिकायाम् ॥ मत्स्यस्याक्षीवपुष्पमस्या । मत्स्यशब्द स्वाङ्गवयवेगौण । बहुव्रीहाविति षच् । ङीष् ॥ मच्छेछी० इतिलोकप्रसिद्धौषधौ ॥ मत्स्याक्षीग्राहिणीशीताकुष्ठपित्तकफास्रजित् । लघुस्तिक्ताकषायाचस्वाद्वीकटुविपाकिनी ॥

मत्स्याद्खग । पु० मत्स्यान्अत्ति । अद० । क्विप् । मत्स्याद्चासौखगश्च ॥

मत्स्यादनी । स्त्री० लाङ्गल्याम् । तोयपिप्पल्याम् । मत्स्याक्ष्याम् ॥ मत्स्यैरद्यते । अद० । ल्युट् । क्विप् । ङीप् ॥

मत्स्याधानी । स्त्री० मत्स्यरक्षार्थपात्रे । कुवेण्याम् । खारयी० खालुइ०इ०गौ०देशभा० ॥ मत्स्याआधीयन्तेऽत्र । डुधाञ्० । करणाधिकरणयोरितिल्युट् ॥

मत्स्याशन । पु॰ मत्स्यरङ्कविहङ्गमे ॥

मत्स्योडरी । स्त्री॰ मत्स्यरव्यञ्जनान्तरे ॥ कासमर्दकचूर्णेनमत्स्यपिष्टिर्नियोजिता । भर्जिताकटुतैलेनमत्स्योडरीइतीरिता ॥

मत्स्योदरी । स्त्री॰ सत्यवत्याम् । व्यासमातरि ॥ काशीस्थतीर्थविशेषे ॥

मथन । पु॰ गणिकारिकायाम् ॥ न॰ दध्यादिविलोडने । विलो॰ना॰ इ॰भा॰ ॥ मथति । मथे विलोडने । ल्युट् ॥

मथितम् । न॰ निर्जलेसरोवर्जितेविलोडितेदधिनि ॥ सरोदकविहीमन्तुमथित कफपित्तनुत ॥ त्रि॰ आलोडिते ॥ घृष्टे । निघृष्टे ॥ मथ्यतेस्म मथे॰ । क्त ॥

मन्थ । पु॰ मन्थानदण्डे ॥ मथ्यतेऽनेन । मन्थविलोडने । मन्थइति॰ इनि कित । कितत्वान्नलोप ॥ मन्थामन्थानदण्डेचवज्रे वातेपिचस्मृत ॥

मथुरा । स्त्री॰ मधुपुर्याम । श्रीकृष्णजन्मभूमौ । मधुरायाम ॥ मथति । मथे॰ । मन्दिवाशिमथिचतीच्युरच ॥ मथुराचविलोमेनसध्यमोनयदक्षरम, योनस्मरतिलोकेस्मि स्नम्बध्य तन्मुखोपरि ॥

मथुरेश । पु॰ श्रीकृष्णे ॥

मथूरा । स्त्री॰ मथुरायाम ॥

मद । पु॰ रेतसि ॥ कस्तूर्याम् ॥ गर्वे । अहङ्कारे ॥ विद्यामदोधनमदस्तथैवाभिजनोमद । एतेमदामदान्धानातएवहिसतादमा ॥ हर्षे । आमोदे ॥ इभदाने । गजगण्डजले । दाने ॥ यथा । करात्कटाभ्यामेढ्राच्चनेत्राभ्याञ्चमदस्रुति । करान्नासारन्ध्राभ्याम् ॥ मद्ये ॥ मादकद्रव्यसेवनजन्ये विकारविशेषे ॥ चैव्ये । मत्ततायाम् ॥ यथा । स्वामदात्प्रकृतिमेतिहिसर्व इतिस्वाभाविकधर्म्मप्रकाशन मदधर्म्म उत्कर्षरहितस्वेप्युत्कर्षविशेषाध्यारोपे ॥ अशास्त्रीयविषयसेवनोन्मुखत्वे ॥ मदनम्॰ माद्यत्यनेनवा । मदीहर्षे । मदोऽनुपसर्गइत्यप् ॥ मदयतिवा । अच् ॥ नदे ॥ कल्याणवस्तुनि ॥ इतिधरणि ॥ बुद्धेर्मोह समभवदहङ्कारादभून्मद । तस्य लक्षण यथा । अह महात्माधनवान्मत्तुल्य कोस्तिभूतले । इतियज्जायतेचित्तेमद प्रोक्त सकोविदै ॥

मदक । पु॰ मद्यासवे ॥

मदकट । पु॰ षण्डे । गोपलौ ॥

मदकार । पु॰ आनन्दजनके ॥

मदकल । पु० अन्तर्मदगजे । मदो त्कटे ॥ त्रि० मदेनव्यक्तवचने ॥ मदेनकलते । कलशब्दसङ्ख्यान योः । अच् ॥ मदेसति० कलो ध्वनिर्यस्येतिवा ॥

मदगन्ध । पु० सप्तच्छदवृक्षे ॥ मद सदृशोगन्धोस्य ॥

मदगन्धा । स्त्री० सुरायाम् ॥ अतस्या म् ॥

मदगमना स्त्री० महिष्याम् ॥

मदघ्नी । स्त्री० पूतिकायाम् ॥

मदच्युत् । पु० अमृतरसच्यावयित रि० अमृतरूपे सोमे ॥ मद मदकर मानन्दकर रसममृतरूप च्यावयत्य सौमदच्युत् ॥

मदन । पु० मन्मथे । कामदेवे ॥ वसन्ते ॥ धूस्तूरे ॥ पीण्डीतके । मरुवके । श्वसने । मयनफलइति भाषा ॥ मदनोमधुरस्तिक्तोवीर्यो ष्णोलेखनोलघुः । वातकृद्विद्रधि हर प्रतिश्यायव्रणात्मक ॥ रूच कुष्ठकफानाहशोथगुल्मव्रणापहः ॥ सिक्थके । मधूच्छिष्टे । मैण० मोम० इतिचभाषा ॥ मदन मृदु सुस्निग्ध भूतघ्न व्रणरोपणम् । भग्न सन्धानकृद्वातकुष्टवीसर्परक्तजित ॥ माषे ॥ खदिरे ॥ लग्नात्सप्त मभवने ॥ आलिङ्गनविशेषे ॥ तत् स्वरूप यथा । नायकोनायिकाया कण्ठे हस्त दत्त्वा० द्वितीयहस्ततस्या मध्यदेशेदत्त्वायदाश्लिषति० इति कामशास्त्रम् ॥ मदयति मदीह र्षग्लेपनयो । ल्यु ॥ न० ज ले ॥

मदनकाकुरव । पु० पारावते ॥

मदनगृह । न० लग्नात्सप्तमगृहे ॥ मात्रावृत्तप्रभेदे ॥ यथा । प्रथम कुरुषटकलमन्ते कुण्डलमिहमध्ये वसुतुरगधर सन्तापहरम० दशवसु भुवनाष्टभिरच्चरणमभिभवतिवि रामोयदिललित कविबलयहितम फणिनायकभणित जगणविरहित चतलारि शत्कलकलित भुवनेमहि तम० वृत्त रसनिवह तन्मदनगृह नरप तिस सदिलभ्यपद गुरुशोकगदम ॥ य था । विरहानलतप्तासीदतिसुप्तारवि तनलिनदलतल्पतले मरकतविम ले० करकलितकपोल गलितनिचो ल नयनतिसततरुदितेनेनिशाम निमेषदृशा । नसखीमभिनन्दति रुजमनुबिन्दतिनिन्दतिहिमकर करनिकर परितापकरम्० मनुते हृदिभार मुक्ताहार दिवसनिशा करदीनमुखी जीवितविमुखी ॥

मदनगोपाल । पु० श्रीकृष्णे ॥

मदनचतुर्दशी । स्त्री० चैत्रशुक्लचतुर्द श्याम् ॥

मदनत्रयोदशी । स्त्री० चैत्रशुक्लत्रयो-

दश्याम् ॥
मदनद्वादशी । स्त्री० चैत्रशुक्लद्वादश्याम् ॥
मदनपाठक । पु० कोकिले ॥
मदनभवनम् । न० लग्नात्सप्तमस्थाने ॥
मदनमोहन । पु० श्रीकृष्णे ॥
मदनरस । पु० शृङ्गारे ॥
मदनललिता । स्त्री० अष्टिसञ्ज्ञकच्छन्द १६ प्रभेदे ॥ म्भौनोम्नौगोमदनललितावेदैः षड्ऋतुभिः । यथा। विभ्रष्टस्रग्गलितचिकुराधौताधरपुटा॰म्लायत्पत्रावलिकुचतटोच्छ्वासोर्मितरला । राधात्यर्थमदनललितान्दोलाऽलसवपुः कंसारातेरतिरसमहोत्सवऽतिचटुलम्॥
मदनलव । पु० अस्ताशे ॥ मदनस्त्लव ॥
मदनशलाका । स्त्री० कामोद्दीपकभैषज्ये ॥ सारिकायाम् ॥ कोकिलायाम् ॥
मदनसारिका । स्त्री० पक्षिप्रभेदे । सारिकायाम् । चित्रलोचनायाम् । सालिक्॰ हू॰ गौ॰ भा॰
मदना । स्त्री० सुरायाम् ।
मदनायक . । पुं० कोद्रवे ॥
मदनाङ्कुश । पु० नखे ॥ लिङ्गे ॥
मदनाडी । स्त्री० गजदानशिरायाम् ॥ तात्रसप्तधयथाहपाल । करात्कटाश्यामिद्वाचनेत्राभ्याञ्चमदच्युतिरिति ॥
मदनायुध । पु० भगे ॥ योनौ ॥
मदनायुष । पु० कामवृद्धिक्षुपे ॥
मदनालय । पु० कुसुमधनुषोमन्दिरे । स्मरागारे । भगे ॥ मदनभवने ॥
मदनावस्था । स्त्री० उद्वेगरूपायाकामावस्थायाम् ॥ कथतस्यालाभोभविष्यतीति ॥
मदनी । स्त्री० सुरायाम् ॥ कस्तूर्याम् ॥ अतिमुक्तके ॥
मदनीय । त्रि० मदकारिणि । मदयति । मदी॰ । कृत्यल्युटोबहुलमिति कर्त्तरि अनीयर् ॥
मदनीया । स्त्री० धातक्याम् ॥
मदनेच्छाफल । पु० वक्षरसाले ॥
मदनोत्सव । पु० सुवसन्तके । होलाकायाम् । होली॰ हू॰ भा॰ ॥
मदनोत्सवा । स्त्री० स्वर्गवेश्यायाम् ॥
मदप्रयोग । पु० करिणामदोद्गमे । व्यस्तारे ॥
मदनभञ्जनी । स्त्री० शतमूल्याम् ॥
मदमूढबुद्धि । त्रि० मदेनविपरीतप्रज्ञे ॥ मदमूढबुद्धिषुविवेकिताकृत ॥
मदयन्तिका । स्त्री० मल्ल्याम् ॥
मदयन्ती । स्त्री० मल्ल्याम् ॥ वनमल्लिकाया ॥

मदयिता । त्रि० मादके ॥ मदयति । मदी० । लट शतृ ॥

मदयित्नु । पुं० कामदेवे ॥ शौण्डिके ॥ मेघे ॥ न० मद्ये ॥ मदयति । हर्षयति० क्लेपयतिवा । मदी० । स्तनिहृषिपुषिगदिमदिभ्योणेरित्नु- रिति० इत्नुच् । णेरयादेश ॥

मदलेखा । स्त्री० उष्णिक् ७ छन्द प्रभेदे ॥ मसगा स्यान्मदलेखा । यथा । रक्षे बाहुविलग्नाहन्तीन्द्राम्म दलेखा । लग्नाभून्मुरशत्रौकस्तूरी- रसचर्चा ॥

मदविक्षिप्त । पु० मत्तहस्तिनि ॥

मदव्यायाम । पु० मदाधिक्ये ॥

मदशाक । पु० उपोदक्याम् ॥

मदसार । पु० तूदवृक्षे । ब्रह्मका ष्ठे ॥

मदस्थलम । न० )
मदस्थानम । न० )मद्यपानस्थले । शु ण्डायाम् । पानगृहे ॥

मदहस्तिनी । स्त्री० महाकरञ्जे ॥

मदहेतु । पु० धातक्याम ॥ मदस्य कारणे ॥

मदाढ्य । पु० तालवृक्षे ॥ त्रि०मद युक्ते ॥

मदाढ्या । स्त्री० लोहितझिण्ट्याम ॥

मदातङ्क । पु० मदात्ययरोगे ॥

मदात्यय । पु० मद्यपानजन्यरोगवि शेषे । पानात्यये । मदव्याधौ ॥ निदानानितु । विषस्यैगुणाहृष्टा सन्निपातप्रकोपणा । तएव- मद्येहश्यन्ते विषे तुबलवत्तरा ॥ तस्मादविधिपीतेनतथामात्राधिकेनच । युक्तेनचाहितैरन्नै रकालेसेवितेनच । मद्येनखलुजायन्ते मदात्ययमुखागदा ॥ अविधिप्रयुक्तमद्य- विकारान्तरमप्युत्पादयतीत्याह । निर्भुक्तएकान्ततएवमद्य निषेव्यमाण मनुजेनेनित्यम् । उत्पादयेत्कष्टतमान् विकारानुत्पादयेच्चापिशरीरभेदम् ॥ इत्यन्तरमप्याह । क्रुद्धेनभीतेनपिपासितेनशोकाभितप्तेनबुभुक्षितेन । व्यायामभाराध्वपरिक्षतेनवेगावरोधाभिहितेनवापि ॥ अत्यम्लरूक्षावततोदरेणसाजीर्णभुक्तेनतथाऽबलेन । उष्णाभितप्तेनच सेव्यमान करोतिमद्य विविधान्विकारान् ॥ तेचविकाराग्रन्थान्तरे- ज्ञातव्या ॥ चिकित्सातु । मद्योत्थानान्तुरोगाणामद्यमेवहिभेषजम् । यथादहनदग्धानादहन स्वेदन हितम् ॥ मिथ्याविहितमद्येनयोव्याधिरुपजायते । मद्येनैवनिपीतेनमद्येनसहशाम्यति ॥ विशेषोन्यत्रद्रष्टव्य ॥

मदामद । पु० परमेश्वरे ॥ आत्मनि ॥ आत्माहिसमदोऽमदश्च०सहर्षोऽहर्षश्च०विरुद्धधर्मवानतोदेशि

कोपदेशं विनाऽशक्योज्ञातुम् ॥

मदाम्नात । पु० गजढक्कायाम् । हा थौपरकाडङ्का०ढू०भा० ।

मदाम्बर । पु० मत्तहस्तिनि ॥

मदायुध । पु० चतुर्दन्ते । ऐरावते ॥

मदार । पु० द्विरदे । हस्तिनि ॥ शूकरे ॥ धूर्त्ते । कामुके ॥ मत्तहस्तिनि । गन्धभेदे ॥ नृपान्तरे ॥ माद्यति । मदी० । अगिमदिमन्दिभ्यआरन् ॥ वन्धनविशेषे ॥

मदामर्द । पु० मल्लभेदे । राजशौवे ॥

मदालसा । स्त्री० मार्कण्डेयपुराणप्रसिद्धायाम्गन्धर्वकन्यायाम ॥यथापुत्रकारित ॥

मदालापी । पु० कोकिले ॥

मदाश्रय । त्रि० मदैकशरणे ॥

मदाह्वय । पु० कस्तूर्याम् ॥

मदिर । पु० रक्तखदिरे ॥ मदयति । मदि० । किरच् ॥

मदिरा । स्त्री० मादकद्रव्यविशेषे । सुरायाम् । हलिप्रियायाम् । वरुणात्मजायाम् । गन्धोत्तमायाम । प्रसन्नायाम् । कादम्बर्याम् । इरायाम् । मद्ये । सुप्रतिभायाम् । मोदिन्याम् । महानन्दायाम् । मैरेये । देवसृष्टायाम । अब्धिजायाम् । द्वादशविधेयं यथा । माध्वीकपानस द्राक्ष खार्जूर तालमैक्षवम् । मैरेय माक्षिकटाङ्क मधूक नारकेलजम ॥ मुख्यमन्नप्रकारोत्थ मद्यानिद्वादशैवच ॥ ऋतुविशेषे पेयमदिरायथा । गौडीतुशिशिरे पेया०पैष्टीहेमन्तवर्षयो । शरद्ग्रीष्मवसन्तेषुमाध्वीग्राह्यानचान्यथा ॥ कादम्बरीशर्करजादिमद्य सुशीतलं हृष्यकर मदाढ्यम् । माध्वीसम स्यात्खर्जूरजात मद्य सुशीत गुरुतर्पणञ्च ॥ अन्यथाकुरुते पान मद्य सन्तापशोषदम् । अन्नदोषमदाद्याद्विकारक मूर्च्छनञ्चतत् ॥ नवजीर्णमद्ययोर्गुणास्तु । मद्य नव सर्वविकारहेतुसर्वन्तुवातादिकदोषदायि । जीर्णं तुसर्वं सकलामयघ्नचूर्णप्रद हृष्यकरञ्चदीपनम् ॥ मद्यप्रयोग कुर्वन्निशूद्रादिषुमहार्त्तिषु । द्विजैस्त्रिभिस्तुनग्राह्यमद्यप्युर्जीवयेन्मृतम् ॥ गौडीपैष्टीत थामाध्वीत्रिविधाचोत्तमासुरा । सैवनानाविधाप्रोक्तातालखर्जूरसम्भवा । तथादेशविभेदेननानाद्रव्यविभेदत । बहुधेयं समाख्याताप्रशस्तादेवतार्चने ॥ अन्येद्वादशधामद्यभेदानाहुर्मनीषिण । उक्तेष्वान्तर्भवन्तीतिनान्येषापृथगीरितम् ॥ प्रायशोभिनव मद्य गुरुदोषलमीरितम् । स्रोतसाशोधन जीर्णं दीपन लघुरोचनम् ।

हर्षं च प्रीणन बल्यं मद्य शोकश्रमा
पहम् । प्रागल्भ्यप्रतिभापुष्टिवीर्य
तुष्टिस्वरप्रदम् ॥ अपिच । सम्यग्
विधिविधानेनसुसमाहितचेतसा ।
पिबन्तिमदिरामर्त्याअमर्त्याएवते
क्षितौ ॥ आकृतिच्छन्द २२ प्र
भेदे ॥ यथा । सप्तभकारयुतैक
गुरुर्गदितेयमुदारतरामदिरा ।
यथा । माधवमासिविकस्वरकेशर
पुष्पलसन्मदिरामुदितैर्भृङ्गकुलैरु
पगीतवनेवनमालिनमालिकलानि
लयम् । कुञ्जगृहोदरपल्लवकल्पित
तल्पमनल्पमनोजरस स्वभजमाध
विकामृदुनर्त्तनयामुनवातकृतोप
गमा ॥ माद्यत्यनया । मदीहर्षे ।
इषिमदिमुदीत्यादिनाकिरच् ॥
मत्तखञ्जने ॥

मदिराक्षी । स्त्री॰ मत्तनेत्रायाम् ॥
मदिरावदक्षिणीयस्याः सा । यथा
। अविदितसुखदुःख निर्गुणं वस्तु
किञ्चिज्जडमतिरिहकश्चिन्मोक्षइ
त्याचचक्षे । ममतुमतमनङ्गस्मे
रतारुण्यघूर्णन्मदकलमदिराक्षीनी
विमोक्षोहिमोक्षः ॥ इतिविटोक्तिः ॥

मदिरागृहम् । न॰ गञ्जायाम् । मद्य
स धानगृहे ॥ मदिराया गृहम् ।

मदिरासख । पुं॰ आम्रवृक्षे ॥

मदिष्ठा । स्त्री॰ मदिरायाम् ॥

मदी । स्त्री॰ चषकवस्तुनि ॥ कृष्यङ्गे ॥

मदीयम् । त्रि॰ मदकरे । हर्षोत्पाद
के । मदीय सर इतिषेदेदर्शना
त् ॥ मामके ॥ ममेदम् । छ ।
मपर्यन्तस्यमादेशः ॥

मदोत्कट । पुं॰ अन्तर्मदेहस्तिनि ।
मदकले ॥ मदेनदानेनाम्बुना॰
उत्कट मत्त ॥ त्रि॰ मदमत्ते ॥

मदोत्कटा । स्त्री॰ मदिरायाम् ॥ मदे
नोन्मत्तायाम् ॥ मदेनउत्कटा ॥

मदोदग्र । त्रि॰ मदोन्मत्ते ॥

मदोदग्रा । स्त्री॰ नार्याम् ॥

मद्गतप्राण । त्रि॰ मद्गजनार्थंजीवने
॥ मद्गता प्राणायस्य ॥

मदोद्धत । त्रि॰ मत्ते ॥ मद
पौरुषादिधर्म तेनउद्धत ॥

मद्गु । पुं॰ कारण्डवे ॥ जलकाके॥
मज्जति । । टुमस्जोशुद्धौ । भृस्ट-
शीत्यु । न्यङ्क्वादित्वात्कुत्वम्।
सस्यजश्त्वेनद ॥ ब्राह्मणेनवन्दि
भार्यायाजनिते ॥

मद्गुर । पुं॰ मगुरी॰ मागुर॰ इ॰
ख्यातेमत्स्ये ॥ मज्जति । टुमस्जो॰
। मद्गुरादयश्चेतिनिपातित ॥ य
द्वा । माद्यति । मदी॰ । मद्गुराद
यश्चेत्युरच्॰ धातोर्गुरादेश । म
द्गुरोवातहृद्वृष्योबल्य कफकरोल
घु ॥ मद्गुर खण्डरहित कटु
तैलेसुभर्ज्जित । माषिमन्थनिशा
युक्तोहिङ्गुनाधूपितोरस । मद्गुरो-

वातश्लापथ्योरुच्योष्णोबल प्रद ' । अग्निसञ्जननोहृद्यस्तद्दुक्ताचशृङ्गिका ॥

मद्गुरक । पुं॰ मद्गुरमीने ॥

मद्गुरसी । स्त्री॰ शृङ्ग्याम ॥

मद्रक्त । त्रि॰ प्रेमणामद्यनुरक्ते ॥

मद्यम् । न॰ सुरायाम् ॥ माद्यन्त्यनेन । मदी॰ गदमदचरेत्यादिनायत् ॥ कखलचषादि यथा । पेयय न्मादकं लोके तन्मद्यमभिधीयते। यथारिष्ट सुरासीधुरासवाद्यमनेकधा ॥ गौडीपैष्टीतथामाध्वीचत्रिविधा चोत्तमासुरा। सैवनानाविधाप्रोक्ता तालखर्जूरसम्भवा ॥ तथादेशविभेदेननानाद्रव्यविभेदत । वहुधेयस माख्याताप्रशस्तादेवतार्चने ॥ तद्द्वादशविधयथाहपुलस्त्य । पानस द्राक्षमाधूककार्खर्जूरतालमैक्षवम् । माध्वीकटाङ्कमार्द्वीकमैरेयनारिकेलिजम् ॥ समानानिविजातीनाम द्यान्येकादशैवतु । द्वादशन्तुसुरा मद्यसर्वेषामधमस्मृतम् ॥ मद्य सर्वंभवेदुष्णं पित्तकृद्वातनाशनम् । भेदनशीघ्रपाकञ्चरूक्षंकफहरपरम् ॥ चाम्लन्दीपनरुच्यं पाचनवासकारिच । तीक्ष्णसूक्ष्मञ्चविशदंव्यवायि चविकाशिच ॥ मद्य नवमभिष्यन्दि त्रिदोषजननकसरम् । चहृद्य बृंहणं दाहिदुर्गन्धंविशदगुरु ॥ जीर्णं तदे वरोचिष्णुक्रमिश्लेष्मानिलापहम् । हृद्यसुगन्धिगुणवल्लघुस्रोतोविशोधनम् ॥ सात्त्विकादिविभेदेनचेष्टाञ्च यामनीषिभि । तैर्भेदास्तु। पर्याया वाग्भवेन्मद्य तामसंराजसप्रियम् । मण्डलार्वाग्राजसतत्तदूर्द्ध सात्त्विकंभवेत् ॥ सात्त्विकेगीतहास्यादिराजसेसाहसादिकम् । तामसेनिन्द्यकर्माणिनिद्राञ्चमदिराचरेत् ॥ विधिनामानयाकालेहितैरन्नैर्यथावलम् । प्रहृष्टोय पिबेन्मद्य तस्यस्यादमृतयथा । किन्तुमद्यस्वभावेनयथैवान्न तथास्मृतम् । अयुक्तियुक्त रागाययुक्तियुक्तयथामृतम ॥ मद्य गन्धस्यनाशायउपायोयमुदीर्यते । मुस्तैलवालगदजीरकधान्यकैलाय श्चर्वयन्सदसिवाचमभिव्यनक्ति। स्वाभाविकमुखजमुत्कतिपूतिगन्ध गन्धञ्चमद्यलशुनादिभवचनूनम् ॥ * ॥ नालिकेरोदकक्षौद्रे ताम्रपात्रे स्थितमधु । गव्यघृतताम्रपात्रस्थमद्यतुल्य घृतविनेतिकर्म लोचनम ॥

मद्यगन्ध । पु॰ बकुलद्रुमे ॥

मद्यद्रुम । पु॰ माडे । ध्वजद्रुमे । वितानके ।

मद्यप । त्रि॰ सुरापे ॥ सुराव्यतिरिक्तमद्यपातरि ॥

मद्यपङ्क । पु॰ सुराकल्के । मेदके ॥ जगले । मेदा॰ हु॰ गौ॰ दे॰ भा॰॥

मद्यपाचनी । स्त्री० धातक्याम् ॥

मद्यपाशनम् । न० उपदंशे । अवदंशे । चखन । पानरोचकभक्ष्ये ॥

मद्यपुष्पी । स्त्री० धातक्याम् ॥

मद्यमण्ड पु० सुरायभागे । मद्यफेने । कारोत्तरे ॥

मद्यवासिनी । स्त्री० धातकीवृक्षे ॥

मद्यबीजम् । न० नानाद्रव्यकृतसुराबीजे । किण्वे । नग्नहु । वाखर० इं०गी टं०भा० ॥ मद्यस्वबीजम् ॥

मद्यसन्धानम । न० अभिषव । आसुती । मद्यच्चावना०इं०भा० ॥

मद्याजी । त्रि० मद्यजापरे ॥ मांय इष्टुशील यस्य । णिनि ॥

मद्यामोद । पु० वकुलवृक्षे ॥ मद्यस्येवामोदोऽस्मिन् ॥

मद्योर्ग । त्रि० मदेकशरणे । मयि सर्वकर्मसमर्पणे ॥

मद्र । पु० हर्षे ॥ देशविशेषे ॥ वैराटपाण्ड्यायोर्मध्ये पूर्वदक्षिणेन तु मद्रदेश समाख्यातोमाद्रीहा तत्रतिष्ठति ॥ मन्दते । मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु । स्फायितञ्चीतिरक् ॥

मद्रक । त्रि० मद्रदेशभवे ॥ मद्रेषु जात । कन् ॥

मद्रकार । पु० मद्रङ्करे ॥ मद्रं करोति डुकृञ् । चेमप्रियमद्रेणु चेतिखच् ॥

मद्रङ्कर । त्रि० चेमङ्करे । शङ्करे ॥ मद्रं करोति । डुकृञ् । चेमप्रियमद्रेणु चेतिखच् ॥

मद्रसुता । स्त्री० माद्र्याम् । नकुलसहदेवयोर्जनन्यांपाण्डुपत्न्याम् ॥

मद्वान् । पु० विधौ० । वायसे ॥

मद्वती । स्त्री० शिवायां ॥

मद्वा । पुं० शिवे ॥ माद्यति । मद्धौ० । आमदौत्यादिनावनिप् ॥ राजवत्०रूपाणि ॥

मद्वरी । स्त्री० सुरायाम् ॥ माद्यत्यनया । मद्दौ० । वनिप् । वनोरचेति ङीव्रौ ॥

मद्वर्गीण । त्रि०<br>मद्वर्गीय । त्रि०<br>मद्वर्ग्य । त्रि०

मद्वर्गसम्बन्धिनि ॥ शेषिकेष्वर्थेषु०अशब्देयत्खावन्यतरस्यामित्यनेनक्रमात०खछयत्प्रत्यया ॥

मधु पु० मधुद्रुमे । मधूके मधुवा०इं०भा० ॥ वसन्तर्त्तौ ॥ दैत्यविशेषे ॥ यद्धत्वा०विष्णुर्मधुसूदनोऽभूत ॥ चैत्रेमासि ॥ जीवाशोके ॥ असुरविशेषे ॥ सचशत्रुघ्नेन हत । यस्यनाम्नामथुरा०मधुपुरीति ख्यातिगता ॥ मधुयष्ट्याम् ॥ न० क्षीरे ॥ जले । मद्ये ॥ मधुररसे ॥ इक्षौ ॥ वर्णवृत्तान्तरे ॥ यथा । इयमपि । लघुमधु ॥ यथा । रतिमथ । वरतनु ॥ कर्मफले ॥मन्यन्ते-

एतम् । मनस्थाने । फलिपाटीस्थु धश्चान्तादेश ॥ पु०न०माद्वीकम चे ॥ पुष्परसे । मकरन्दे । कुसुमासवे । चौद्रे । माक्षिके । पुष्पासवे । पवित्रे । पित्ये । वरटीवान्ते ॥ मक्षिकावरटीभृङ्गवातपुष्परसोद्भवम् । मधुशीतलघुस्वादुरूक्ष ग्राहिविलेखनम् ॥ चक्षुष्य दीपन स्वर्य्यव्रणशोधनरोपणम् ॥ सौकुमार्यकर-सूक्ष्म परस्रोतोविशोधनम् । कषायानुरसह्लादिप्रसादजनकपरम् ॥ वर्ण्यं मेधाकरवृष्य विशद रोचन हरेत् । कुष्ठार्शं कासपित्तास्रकफमेहक्लमक्रमीन् ॥ मेदस्तृष्णावमिश्वासहिक्कातीसारविग्रहान् । दाह क्षतक्षयांस्तत्तु योगवाह्यल्पवातलम् ॥ माक्षिकभ्रामरचौद्र पौत्तिकछात्रमित्यपि । आर्घ्यमौद्दालकदालमित्यष्टौमधुजातय ॥ एषास्व रूप विज्ञेय स्वस्थानेमनीषिभि ॥ नवमधुभवेत्पुष्ट्यै नातिश्लेष्महर सरम् । पुराण ग्राहकरूक्ष मेदोघ्नमति लेखनम् मधुन, शर्करायाश्चगुड स्यापिविशेषत, । एकसवत्सरेतीते पुराणत्वस्मृतंबुधै ॥ विषपुष्पादपिरससविषाभ्रमरादय । गृहीत्वा मधुकुर्वन्तितच्छीतगुणवन्मधु ॥ विषान्वयात्तदुष्णन्तुद्रव्यं योष्णेनवा-सह । उष्णात्तं ग्रीष्मकालेचसमृत

विषसममधु ॥ मकरन्दस्तमद्यस्तमाक्षिकस्यापिवाचक । अर्द्धर्चादिगणे पाठात्पुन्नपुसकयोर्मधु ॥

मधु । स्त्री० जीवन्तीवृक्षे ॥

मधुक । पु० खगविशेषे । श्रोवदपक्षिणि ॥ वल्ल्यन्तरे । मधुयष्ट्याम् ॥ व शपरम्परायां सक्ते । मागधे ॥ न० क्लीतके । मधुयष्टिकायाम् । त्रपुणि ॥ मध्विव । इवे प्रतिकृतानितिकन् ॥ यद्वा । मधु० मधुर-कायति । के० आतश्रुतिक ॥

मधुकण्ठ । पु० कोकिले ।

मधुकर । पु० भ्रमरे । मधुपे । मधुकरोति० तच्छील । कृञोहेत्विति ट ॥ भृङ्गराजे । भङ्गरा० इ० भा० ॥ कामिनि ॥

मधुकर्कटिका । स्त्री० मिष्टबीजपरे । मधुकर्कट्याम् । मधुकर्कटिकास्वाद्वीरोचनीशीतलागुरु । रक्तपित्तक्षयश्वासकासहिक्काभ्रमापहा ॥ मधुखर्जूरिकायाम् ॥

मधुकर्कटी । स्त्री० मधुकर्कटिकायाम् । मधुकाकरीति०भाषा ॥

मधुका । स्त्री० मधुपाल्याम् । मधुपर्ण्याम् ॥ मधुयष्ट्याम् । टाप् ।

मधुकुक्कुटिका । स्त्री० )

मधुकुक्कुटी । स्त्री० ) जम्बीरविशेषे । मातुलुङ्गायाम् । सुगन्धायाम् । गिरिजायाम् । पूतिपुष्पिकायाम् ॥

मधुकृत्। पु० भ्रमरे॥ मधुकरोति। डुकृञ्०। क्विप्॥ मधुकरमक्षिकायाम्॥

मधुकीट। पु० भृङ्गे। भ्रमरे॥

मधुकोष। पु० मधुमक्षिकाभिकृतमध्वाधारे। मधुचक्री०इ०भा०॥

मधुक्रम। पु० मधुपानावृत्तौ। शश्वन्मधुपानक्रमे। मधुवारे। मधुन क्रम.॥

मधुक्षीर। पु० खर्जूरवृक्षे॥

मधुखर्जूरिका। स्त्री० मधुकर्कटिकायाम्। कोलकर्कटिकायाम्। माध्वीमधुरायाम्॥

मधुगन्ध। पु० वकुले॥

मधुगायन। पु० कोकिले॥

मधुगुञ्जन। पु० शोभाञ्जनवृक्षे॥

मधुघोष। पु० [illegible]॥

मधुच्छदा। स्त्री० मयूरशिखायाम्॥

मधुच्छन्दा। पु० ऋषिविशेषे। विश्वामित्रपुत्रे॥

मधुच्युत्। त्रि० अमृतस्राविणि॥

मधुजम्। न० सिक्थके॥

मधुजम्बीर। पु० मधुरजम्बीरे॥

मधुजा। स्त्री० पृथिव्याम्॥ मधोर्जाता। जनी०। ड.॥ मत्स्यण्डिकायाम्। सितायाम्॥

मधुजित्। पु० विष्णौ॥ मधुदैत्यविशेषम्०अजैषीत्। जि०। सत्सूद्विषेतिक्विप्। तुक्॥

मधुतृण। पु० न०इक्षौ॥

मधुत्रयम्। न० मधुरत्रये॥

मधुदीप। पु० कामदेवे॥

मधुदूत। पु० आम्रवृक्षे॥

मधुदूती। स्त्री० पाटलावृक्षे॥

मधुद्रु। पु० भ्रमरे॥

मधुद्रव। पु० रक्तशिग्रौ॥

मधुद्रुम। पु० मधूके। गुडपुष्पे। महुवा०इ०भा०॥ मधुनामाद्रुम॥

मधुद्विट्। पु० विष्णौ॥

मधुधातु। पु० स्वर्णमाक्षिके॥

मधुधूलि। स्त्री० खण्डे। खाण्ड०इ०भा०॥

मधुधेनु। स्त्री० दानार्थं मध्वादिनिर्मितसवत्सायागवि॥

मधुनाडी। स्त्री० मध्वाधारच्छिद्रे॥

मधुनारिकेल। पु० माध्वीकफले। मधुफले। बहुकूर्चे। हस्वफले। मोहानारल०इ०गौ०दे०भा०। एरनारिकेल०इ०कोकणदेशभा०॥ माध्वीकंनालिकेरफलमतिमधुरदुर्जरंजन्तुकारिस्निग्धं वातातिसारभ्रमश्रमनमथश्वसन वह्निदीप्तं। श्वासश्लेष्मप्रकोपं जनयतिकुरुतेचारुकान्ति बलस्वास्थ्यं देहस्यधत्ते घनमदनकलावर्द्धनं पित्तनाशम्॥

मधुनी। स्त्री० क्षुपविशेषे। घृतमण्डायाम्। वायसोल्याम्। सुमङ्

लायाम् । माकण्डेहाता॰टू॰माक चाडली॰टू॰च॰गौ॰दे॰भा॰ ॥

मधुनेता । पु॰ भ्रमरे ॥

मधुप । पु॰ भ्रमरे ॥ मद्यपे ॥ मधुपिबति । पा॰ । आतोनुपसर्गे॰टू तिक । पिबते सुरासीध्वोरिति- नियमान्नटच् ॥

मधुपति । पु॰ श्रीकृष्णचन्द्रे ॥

मधुपर्क । पु॰ षोडशोपचारपूजा- न्तर्गतषष्ठोपचारे ॥ तत्प्रमाणं य था दधिसर्पिर्जलक्षौद्रसितेताभि स्तुपञ्चभि । प्रोच्यतेमधुपर्कस्तुस- र्वदेवौघतुष्टये ॥ जलन्तुसर्वत स्त्व सितादधिघृतसमम् । सर्वेषा- मधिकक्षौद्र मधुपर्कंप्रयोजयेत् ॥ त द्भवेत्कांस्यपात्रे वारौकाग्रे तभवेन वा । ज्योतिष्टोमाश्वमेधादौपूर्व्वेचे- ष्टे प्रपूजने ॥ मधुपर्कं प्रतिष्ठोय- सर्वदेवौघतुष्टिद । धर्मार्थकाममो क्षासाधक परिकीर्त्तित ॥ मधु पर्क सौख्यभोग्यतुष्टिपुष्टिप्रदाय- क ॥ आज्य दधिमधुमिश्र मधुप र्क विदुर्बुधा । इतिच ॥ न॰दधि- सयुक्तमधुनि । महोदये ॥ मधुना पृच्यते । पृची॰ । घञ् ॥

मधुपर्क्य । त्रि॰ मधुपर्कार्हे ॥ मधु पर्कमर्हति । दण्डादिभ्ययदितियत् ॥

मधुपर्णिका । स्त्री॰ गम्भार्याम् ॥ नी लीवृक्षे ॥ मञ्जिष॰मधुराणिवा॰- पर्णान्यस्या । पाककर्णेतिङीष् । स्वार्थेकन् । वृक्ष ॥ सुदर्शनायाम् ॥

मधुपर्णी । स्त्री ॰ गम्भार्याम् नी- ल्योषधौ ॥ गुडूच्याम् ॥ मधुबीज पूरे ॥ वराहक्रान्तायाम् ॥

मधुपा । स्त्री॰ मद्यपायाम् ॥

मधुपाका । स्त्री॰ षड्भुजायाम् । खर्बूजा॰टू॰भा॰ ॥

मधुपायी । पु॰ भ्रमरे ॥ त्रि॰मधुपा नकर्त्तरि ॥

मधुपालिका । स्त्री॰ गम्भार्याम् ॥

मधुपिपासु । त्रि॰ मधुपातुमिच्छौ ॥ मधुपिपासु । गम्यादित्वाद्दि तीयासमास ।

मधुपीलु । पु॰ महापीलौ । राजपी लौ । महावृक्षे ॥

मधुपुरी । स्त्री॰ मथरायाम् ।

मधुपुष्प । पु॰ मधुद्रुमे ॥ रोध्रे ॥ शिरीषवृक्षे ॥ अशोकवृक्षे ॥ बकु- लवृक्षे ॥

मधुपुष्पा । स्त्री॰ दन्तीवृक्षे ॥ नाग- दन्तीवृक्षे ।

मधुप्रिय । पु॰ बलदेवे । अच्युता ग्रजे ॥ मधुमद्यप्रिययस्य स भू मिजम्बाम् ॥ त्रि॰मद्यप्रिये ॥

मधुफल । पु॰ मधुनालिकेरे ॥ वि- कङ्कतवृक्षे ॥

मधुफलिका । स्त्री॰ मधुखर्ज्जूरिका- याम् ॥

मधुवल्ला । स्त्री० वासन्तीलतायाम् ॥
मधुभार । पु० मात्रावृत्तान्तरे ॥ सगणं विधायजगणं निधाय । सुखसौख्यधाममधुभारनाम ॥ यथा । अयिमुञ्चमानमवधीवधान । भुजपाशकेनभयनाशकेन ॥
मधुभित् । पु० विष्णौ ॥
मधुभुक् । त्रि० मधुपे ।
मधुमक्षिका । स्त्री० सरघायाम् ॥ मधुनोमक्षिका ॥
मधुमज्जा । पु० आखोटवृक्षे ॥
मधुमान् । त्रि० माधुर्यमिति ॥
मधुमती । स्त्री० मूर्वायाम् । काश्मर्याम् ॥ नदीविशेषे ॥ तस्याजलगुणास्तु । चन्द्रभागगुणासास्माद् जल किञ्चमाधुमतमग्निदीपनम् । इति ॥ मध्वस्तिअस्याम् । मध्वादिभ्यश्चेतिमतुप् ॥ उपास्यनायिकाविशेषे ॥ यथा । तथामधुमतीसिद्धिर्जयितेनाश्वसंशय । देवर्चे टीशतशत तस्यवश्याभवन्तिहि ॥ स्वर्गे मर्त्ये चपातालेसयत्रगन्तुमिच्छति । तत्रैवचेटिका. सर्वानयन्तिनात्रसंशय ॥ अपिच । शब्दानेषशृणोतियोजनशतादाविर्भवन्त्यश्रुतास्तेतिवेदपुराणभारतकथागाथादयोवाङ्मया । यत्नातिस्वयमिच्छयाशुचिपदे . शाखाखिकाव्यानिवालोकान्भास्यतिपश्यतिस्फुट
रुचोरलस्थलीभैरवी ॥ उष्णिक्छन्द ७ प्रभेदे ॥ यथा । ननगिमधुमती । यथा । रविदुहितृतटे ०वनकुसुमतति । व्यथतमधुमती० मधुमथनमुदम ॥
मधुमत् । पु० विष्णौ ॥ मधुमथ्नाति । मदे० । क्विप् चेतिक्विप् ॥
मधुमथन । पु० विष्णौ ॥
मधुमल्ली । स्त्री० मालत्याम् ॥
मधुमस्तकम् । न० खाद्यविशेषे । परिमाण्डे ॥
मधुमाक्षिकम् । न० स्वर्णमाक्षिके ॥
मधुमाध्वीकम् । न० मद्ये ॥
मधुमारक । पु० भ्रमरे ॥
मधुमूलम् । न० आलुके । मौआलुइ० गौ०दे०भा०प्रसिद्ध । हिंडगुले ॥
मधुयष्टि । स्त्री० वृक्षौ ॥
मधुयष्टिका । स्त्री० मधुकायाम् । मधुयष्ट्याम् । मुलहठी०मुहलेठीतिख्यातौषधौ ॥ मधुयष्टीव । इवेतिकन् ॥
मधुयष्टी । स्त्री० मधुयष्टिकायाम् ॥ मधुनोयष्टी ॥ गुणान्पश्ययष्ट्याम् ॥
मधुर । पु० मिष्टरसे । गौल्ये । स्वादौ । रसज्येष्ठे गुल्ये ॥ तस्यगुणा . । मधुरं पिच्छलं . शीतोधातुस्तन्यवलप्रद । चक्षुष्योवातपित्तघ्न कुर्यात्स्थौल्यवलक्रमीन् ।

सोतियुक्तोज्वरश्वासगलगण्डादिरोगकृत् ॥ अपिच। मधुररसुरसश्चिनो तिर्कषान्वपुषः स्थौर्यंबलौजवीर्यं दायी। अतिसेवनतः प्रमेहशैत्य जडतामान्द्यमुखान्करोतिदोषान् जीवकौषधौ ॥ रक्तशिग्रौ ॥ राजाम्रे ॥ रक्तेक्षौ ॥ गुडे ॥ शालौ हैमन्तधान्ये । न० विषे ॥ वक्ष्ये ॥ त्रि० रसनाकर्षिणि । स्वादौ । मधुररसयुक्ते ॥ मधुमाधुर्यमस्यास्ति। जषसुणीतिर ॥ मधुमाधुर्य राति वा। आतोनुपेतिक ॥ प्रिये ॥ दधिमधुरमधुमधुरद्राक्षामधुरासितातुमधुरैव। तस्यतदेवहिमधुरव स्तमनीयत्वसलनम् ॥

मधुरक । पुं० जीवकौषधौ ॥ स्वार्थेक ॥

मधुरकण्टक । पुं०मत्स्यविशेषे। कज्जलायाम ।

मधुजम्बीर । पु० मधुजम्बीरे। रसद्राविणि। शर्करके ॥

मधुरत्वच । पु० धवे। पीतफले ॥

मधुरत्रयम्। न० दुग्धसितामाक्षिकेषु ॥ सितामाक्षिकसर्पिःषु ॥

मधुरत्रिफला स्त्री० द्राक्षाकाश्मर्यखर्जूरिफलेषु ॥

मधुरनिस्वना। स्त्री० मधुरस्वरयुक्तायानार्याम् ॥ मधुरोनिस्वनोयस्या ॥

मधुफल । पु० राजवदरे ।

मधुरमासम । न० क्षीरामृते ॥ तद्विधानयथा । घृताम्बुखेदितैमासैश्शुण्ठीचूर्णविनिक्षिपेत्। दुग्धञ्चशर्करोपेतपश्चात्सौगन्धिकक्षिपेत् । नातिसार्द्रनातिशुष्कमिदक्षीरामृतसमृतम् ॥ क्षीरमृतबहुरसरोचकञ्चातिशीतलम् । वातपित्तहरवल्य सुस्निग्धमतिकोमलम् ॥

मधुरवल्ली। स्त्री० मधुबीजपूरे ॥

मधुरस । पु० इक्षौ । मधुर्मधुरोरसोस्याद्यन्ताभ्यावा ॥ तालद्रुमे ॥

मधुरसा। स्त्री० मूर्वायाम् ॥ द्राक्षायाम् ॥ दुग्धिकायाम् ॥ गम्भार्याम् ॥ मधुरसोस्या ॥

मधुरस्रवा। स्त्री० पिण्डखर्जूर्याम् ॥

मधुरा। स्त्री० शतपुष्पायाम्। सौफ० इ० भा० ॥ मिश्रेयायाम् । शालेये। शीतशिवे । सलूफा० इ० गौ० दे० भा० ॥ मधुरोरसोस्या । अर्शआद्यच् ॥ मथुरापुर्याम् ॥ यथा । हत्वाचलवणरक्षोमधुपुत्र महाबल । शत्रुघ्नोमधुरानामपुरींतत्रचकारवै इति मधुकर्कटिकायाम् ॥ मोदायाम् ॥ मधूल्याम् यष्टिकायाम् ॥ काकोल्याम् ॥ शतावर्याम् ॥ वृहज्जीवन्त्याम् ॥ पालङ्क्यशाके ॥ मनोहरायाम् ॥ टाप् ॥

मधुराकृति । त्रि० सौम्यरूपे ॥

मधुराम्ल । पु० )
मधुराम्लक । पु०) आम्रातके ॥

मधुराम्लफल । पु० रेफले । चारे ॥

मधुरालापा । स्त्री० शारिकायाम् ॥

मधुरालाबुनी । स्त्री० राजालाब्वाम्।

मधुरिका । स्त्री० मिस्याम । शालेये । शीतशिवे । धनसौफ० इ० भा० ॥ मधुरीरसोऽस्त्यस्या अच् । स्वार्थे कन् ॥

मधुरिपु । पु० विष्णौ ॥ मधोरसुरविशेषस्य रिपु ॥

मधुरेणु । पु० काटभीवृक्षे ॥

मधुरोदक । पु० सप्तसमुद्राणामेषस मुद्रे । जलसमुद्रे । स्वादूदके ॥

मधुलम् । न० आसवे । मद्ये ॥

मधुलग्न । पु० रक्तशोभाञ्जने ॥

मधुलता । स्त्री० शूलीतृणे ॥

मधूलिका । स्त्री० राजिकायाम् ॥

मधुलिट । पु भ्रमरे ॥ मधुलेढि। लिह आस्वादने । क्विप् ॥

मधुलेही । पु० भृङ्गे । भ्रमरे ॥

मधुलोलुप । पु० भ्रमरे ॥

मधुवटी । स्त्री० तीर्थविशेषे ॥

मधुवनम् । न० मथुरायाम ॥ कदाचिन्मधुसंज्ञेनदैत्येनाधि ष्ठितयत । ततोमधुवनमाख्यातमत्रमत्तीत ले ॥ पुण्यमधुवनतत्रसान्निध्यनित्य दाहरे ॥ मधोवनम् ॥ किष्कि न्धायां सुग्रीवस्यवनविशेषे ॥

मधुवस । पु० कोकिले ॥

मधुवल्ली । स्त्री० यष्टीमधुनि ॥ क्षीत नके ॥

मधुवार । पु० मधुक्रमे । पुनः पुनर्मधुपानपरिपाट्याम् । मधुपाना वसरे ॥ मधुनोमद्यस्यवारोऽवसर । मधुपानावृत्तिरितियावत् ॥

मधुवारुणी। स्त्री० मधुरूपायावारुण्याम् ॥

मधुबीज । पु दाडिमे ॥

मधुबीजपूर । पु० मधुरफलायाम् । महाफलायाम् । मधुकर्कट्याम् । मीठाबिजौरा० इ०भा० ॥

मधुवृक्ष । पु० मधुके । महुवा० इ० प्रसिद्धे । मधुनामावृक्ष ॥

मधुव्रत । पु० भ्रमरे मधुव्रतभक्ष्य यस्य ॥ यद्वा मधुमकरन्दव्रतयति भुङ्क्ते । कर्मण्यण् ।

मधुशर्करा । स्त्री० मधुजातशर्करायाम् । सिताखण्ड० इ० गौ० दे० भा० प्र० द्रव्ये यथा । माध्वीसुतामधूत्थामधुजामधुशर्करा । माक्षीकशर्कराचैवक्षौद्रजाक्षौद्रशर्करा ॥ यद्गुणयन्मधुप्रोक्तं तद्गुणातत्स्र श र्करा । विशेषाद्बलवृष्याचतर्पणाक्षी णदेहिनाम् अपिच । मधुजाश र्कराकक्षाकफपित्तहरीगुरु । छ र्द्यतीसारतृड्दाहरक्तहृत्तुवराहि

मा ॥ मधुनःशर्करा ॥

मधुशाख पु॰ मधुष्ठीले ॥

मधुशिग्रु । पु॰ रक्तशोभाञ्जनवृक्षे । मुनगा॰ इ॰ काश्यादौख्याते ॥ मधु मधुरः शिग्रुः ॥ मधुप्रधान शिग्रुर्वा ॥

मधुशीर्षकम् । न॰ समितानिर्मितेप क्वान्नविशेषे ॥

मधुशेषम् । न॰ सिक्थके ॥

मधुश्रेणी । स्त्री॰ मूर्वायाम् ॥ मधुन श्रेणिरत्र ॥

मधुश्वासा । स्त्री॰ जीवन्तीवृक्षे ॥

मधुष्ठील । पु॰ मधूकवृक्षे । महुवा इ॰ विख्याते ॥ मधुष्ठीवति । ष्ठिवु निरसने । इगुपधेतिक । पृषोदरादि ॥ मधुष्ठीले गर्भेऽस्येतिवा ॥

मधुसख पु॰ कामदेवे ॥

मधुसारथि । पु॰ कामदेवे ॥

मधुसिक्थक । पु॰ स्थावरविषभेदे ॥

मधुसुहृत् । पु॰ कामदेवे ॥

मधुसूदन । पु॰ भ्रमरे ॥ वनमालिनि । श्रीकृष्णे । वैदिककर्ममार्गके भगवति॰दुष्टनिग्रहकर्तरि ॥ मधुनामानमसुरसूदितवान्॰सूदयति मधुं वा । सूदक्षरणे । नन्द्यादित्वा- ल्ल्यु ॥ विष्णुकर्णमलोद्भूतमधुनाममहासुरम् । ब्रह्मणोपचितिकुर्वन्नृजघानपुरुषोत्तम ॥ तस्यतावद्वधादेवतदासर्वेषिमानवा । मधुसूदनमित्याहुर्ऋषयश्चजनार्दनमिति भारते ॥

मधुसूदनी । स्त्री॰ पालङ्कीशाके ॥

मधुस्रव । पु॰ मधूकवृक्षे ॥ मोरटलतायाम् ॥ न॰ तीर्थविशेषे ॥

मधुस्रवा । पु॰ मधूकवृक्षे ॥

मधुस्रवा । स्त्री॰ जीवन्त्याम् । डोडीतिगुर्जरदेशभाषयाप्रसिद्धायाम् ॥ मूर्वायाम् ॥ हंसपद्याम् ॥ मधुयष्टिकायाम् ॥

मधुस्वर । पु॰ कोकिले ॥ मधुर्मधुरः स्वरोयस्यस ॥ मधौस्वरोयस्यवा ॥

मधुहा । पुं॰ विष्णौ ॥ मधुदैत्यविशेषं हन्ति । हन॰ । क्विप्चेतिक्विप् । ब्रह्मभ्रूणवृत्रेषु क्विबितिनियमस्यप्रायिकत्वात् ॥

मधूक । पु॰ गुडपुष्पे । मधुद्रुमे । महुवा॰ इतिख्यातेवृक्षे ॥ अस्यगुणा मधूकपुष्पं मधुरं शीतलं गुरु बृंहणम् । बलशुक्रकरंप्रोक्तं वातपित्तविनाशनम् ॥ फलं शीतं गुरु स्वादु शुक्रलं वातपित्तनुत् अहृद्यं हन्ति तृष्णास्रदाहश्वासक्षतक्षयान् ॥ तन्मज्जगुणास्तत्फलवत् । यथा । यस्ययस्यफलस्यैववीर्यंभवतियादृशम् । तस्यतस्यैववीर्येण मज्जानमभिनिर्दिशेत् ॥ तस्यलगुणा । मधुस्त्वक्रक्तपित्तघ्नीव्रणशोधनरोपणी ॥ मह्यते॰ मन्यतेवा । महपूजाया

म० मनस्थाने । उलूकादयश्चेसाधु ॥ न० यष्टीमधुनि ॥ इ० रा० निर्घण्ट ॥

मधूकपुष्पम् । न० मधुद्रुमस्यकुसुमे॥ मधुच्युतस्थूलमधूकपुष्प सशोधितकेसरधूलिवर्जितम् ।सम्पाचितशुभ्रसिताघृताभ्यासजीरकजीवनदृष्टि जीविनाम् ॥ त्वहृद्यीयसुमधुरमधूकवातहृद्गुरु ।पित्तप्रकोपशमनञ्च हृद्यं रुच्यमुखप्रियम् ॥

मधूच्छिष्टम् । न० सिक्थके ॥ मधुन उच्छिष्टम् ॥

मधूत्थितम् । न० सिक्थके ॥

मधूत्सव । पु० चैत्रावल्याम् ॥

मधूपघ्न । पु० न० मथुरायाम् । लवणपुरे ॥

मधूल । पु० जलजेमधूके । मधूलके ॥

मधूलक । पु० जलजमधूके जल मद्भवा० इतिभाषा । दीर्घपत्रे ॥ मधुलाति । ला० आतोनुपेतिक । अन्येषामपीतिदीर्घ । स्वार्थेकन् । गिरिजातमधूके । गौरशाके । अस्यगुणामधूकगुणतुल्या ॥ मधुरसे ॥ त्रि० तद्वति ॥

मधूलिका । स्त्री० मूर्वायाम् ॥ प्रत्ययस्थादितीत्वम् ॥

मधूली । स्त्री० क्षौतनके ॥ मधुकर्क्याम् ॥ आम्रे ॥

मध्य । पुं० ग्रहस्फुटसाधकाङ्कविशेषे । पु०न०विलग्ने । देहमध्यभागे । मध्यमे । अवलग्ने ॥ हृदयपुण्डरीकाकाशे ॥ त्रि० न्याय्ये । उत्कर्षापकर्षहीने ॥ यथा० मध्यस्थ ॥ अन्तरे॥ अधमे ॥ मध्यमे ॥ यथा । उत्तमाऽधममध्यानिबुद्ध्वाकार्याणिपार्थिव । उत्तमाधममध्येषुपुरुषेषु नियोजयेत् ॥ माध्यायति । ध्यै० । आतोनुपेतिक । यद्वा । मन्यते । मन्० । माशोभाधत्तेवा । अघ्न्यादि ॥ मध्येशरीरादेर्भवम् । असाम्प्रतिके०इत्य ॥ सङ्ख्याविशेषे ॥ यथा॥ १०००००००००००००००० ॥

मध्यगन्ध । पु० आम्रद्रुमे ॥

मध्यत । अ० मध्येइत्यर्थे ॥ आद्यादित्वात्तसि ॥

मध्यदेश । पु० देशविशेषे । मध्यमे ॥ तत्रसीमायथा । हिमवद्विन्ध्ययोर्मध्ययत्प्राग्विनशनादपि । प्रत्यगेवप्रयागाच्चमध्यदेश प्रकीर्त्तित ॥ मध्यश्चासौदेशश्चेतिकर्मधारय ॥ शास्त्रीयस्नानकर्म्मसस्नातोजनोमध्यदेशइतिव्याख्याकारा ॥

मध्यदेशीय. । त्रि० मध्यदेशोद्भवे ॥ मध्यदेशीयजनपदायथा । ताम्रिमेकुरुपाञ्चाला : साल्वाश्चवसजाङ्गला ।शूरसेनाभद्रकाराबोधका. सपटच्चरा ॥ मत्स्या किराता

कुल्यास्वकुलय कान्तिकोशला ।
आवन्त्याश्वभुलिडाश्वलोकाश्चैवाम्ब
कै सह ॥ मध्यदेश्याजनपदा
प्रायश परिकीर्तिता ।

मध्यदेश्य । त्रि० मध्यदेशभवे ॥ दि
गादित्वात्० यत् ॥

मध्यन्दिन । पु० वन्धूकवृक्षे । मध्य
निआ० इ० भा० ॥

मध्यपञ्चमूलकम् । न० पाचनविशे-
षे ॥ यथा । वलापुनर्नवैरण्डसूर्पप
र्णीद्वयेनतु । एकत्रयोजितैनैवस्यान्म
ध्यपञ्चमूलकम् ॥

मध्यम । पु० तन्त्र्युत्थितेकण्ठोत्थि
तेचसप्तस्वराणामध्ये पञ्चमे ॥ मध्य
देशे ॥ मृगविशेषे ॥ रागप्रभेदे ॥
शरीरावस्थाविशेषे ॥ यथा । षोड
शाब्द समारभ्ययावद्वैसप्ततिर्भवेत्
। मध्यम सतुविज्ञेय परतोवृद्ध
उच्यते ॥ यथोक्तम् । तद्वदेवोत्थि
तोवायुरुर कण्ठसमाहत । ना
भिप्राप्तोमहानादोमध्यस्थस्तेनमध्य
म ॥ क्रौञ्चोनदतिमध्यममिति
च ॥ भूपालविशेषे ॥ अरेस्वविजि
गीषोश्चमध्यमोभूम्यनन्तर ॥ पु०
न० अवलग्ने । देहस्यमध्यसेभागे
॥ त्रि०मध्यजे ॥ उत्कृष्टादधमेचै
वापकृष्टादुत्तमेपिच । मध्येभव
। मध्यान्म ॥ ग्रहाणासामयिक
सञ्ज्ञायाम् ॥

मध्यमपाण्डव । पु० अर्जुने ॥

मध्यमभृतक । पु० कृषीवलभृतके
। कृषाण० इ० भा० ॥ यथा ।
उत्तमस्त्वायुधीयोत्रमध्यमस्तु कृषी
वल । अधमोभारवाहीस्यादित्ये
षत्रिविधोभृत ॥

मध्यमलोक । पु० भूमौ ॥

मध्यमसङ्ग्रह । पु० स्त्रीसङ्ग्रहणा
ख्यविवादविशेषे ॥

मध्यमहलम् । न० षड्गवे हले ॥

मध्यमा । स्त्री० दृष्टरजोनार्याम् । रज
स्वलायाम् कन्यायाम् ॥ कर्णिका
याम् ॥ अङ्गुलिप्रभेदे । मध्याङ्गुलौ
॥ त्र्यक्षरच्छन्दसि ॥ हृदयोत्थितबु
द्धियुतनादरूपवर्णे । नायिकाभेदे
॥ लज्जामन्मथमध्यस्थामध्योदित
यौवनेतिलक्षणाम् ॥ मध्ये जाताया
म् ॥ अदन्तत्वाट्टाप् ॥ मध्यमस्य
भार्यायाम् ॥ मध्यमस्यस्त्री । पुयो
गलक्षणङीष्वाधित्वाऽजादित्वा
ट्टाप् ॥ बाल्ययौवनयोर्मध्येभवा ।
मध्यान्म । तयोर्मध्येमाशोभाय
स्यावा ॥

मधयमाग्नि । पु० अकार्यमग्निवि
शेषे ।

मध्यमिका । स्त्री० मध्यमायामर्थे ॥
मध्यमैव । कन् ॥

मध्यमीयम त्रि०मधध्य ॥ मध्येभवम्
। मध्यमीयौचप्रत्ययौवक्तव्याविति

मीय ॥

मध्यमेश्वर । पु० काशीस्थे शिवलिङ्ग विशेषे ॥ शर्वाणीमध्यमाभिधे ॥ अत्रशर्वाणीस्थानम् ॥

मध्ययव । पु० षट्श्वेतसर्षपपरिमाणे ॥

मध्यरात्र । पुं० निशीथे । अर्द्धरात्रे ॥ मध्यरात्रे । पूर्वापराधरेतिसूत्रे० सर्वैकदेश कालेनसमस्तेनत्वक्लैव०ज्ञापकस्यसामान्यापेक्षत्वादिलुक्तं समासे० अह . सर्वैकदेशेत्यच् ॥

मध्यलोक । पुं० पृथिव्याम् ॥

मध्यलोकेश । पु० नृपे । राज्ञि ॥ मध्यलोकानामर्त्यानामीश ॥

मध्यस्थ । त्रि० निसृष्टे । मध्यवर्तिनि । विवदमानयोरुभयोरपिहिते षिणि ॥ उभयपक्षरहिते ॥ स्वार्थाविरोधेनपरार्थघटके ॥ यथा । एके सत्पुरुषा परार्थघटका . स्वार्थस्यबाधेनयेमध्यस्था परकीयकार्यकुशला . स्वार्थाविरोधेनये । तेऽमीमानुषराक्षसा . परहितयै स्वार्थतोऽन्यते०येतुघ्नन्तिनिरर्थकपरहिततेकेन जानीमहे ॥ पु० पुरुषे ॥ अत्रैगुख्यात्पुरुषोहिमध्यस्थ । सुखीहिसुखेनतृप्यन्० दुःखीचदुःख विषन्नमध्यस्थाभवति । तदुभयरहितोमध्यस्थइति० उदासीनइतिचाख्यायते ॥ म

ध्येतिष्ठति । शा० । क ॥

मध्यस्थलम् । न० कटिदेशे ॥ यथा । कुचौमरिचसन्निभौसुरजमध्यमध्यस्थलीचहीतिमिरमञ्जरीसहचरीनरीनृत्यते । इति ॥

मध्या । स्त्री० मध्यमायाम् ॥ त्यवरायाम् वृत्तौ ॥ नायिकाभेदे ॥

मध्याह्न । पु० अह्नोमध्यभागे । त्रिधाविभक्तदिनस्यमध्यभागे । पञ्चधाविभक्तस्याह्नस्तृतीयभागेवा ॥ अह्नोमध्यम् । सङ्ख्याविसायेतिज्ञापकात्समास ॥

मध्येचित्तम् । अ० चित्तमध्ये ॥ मध्यचित्तस्येतिविग्रहे० पारेमध्येषष्ठ्यावेति०अव्ययीभाव ० निपातनादेदन्तत्वम् ॥

मध्वद । पु० कर्मफलभुजिजीवे ॥ मधुकर्मफलम ० अत्ति । अद० । कर्मण्यण ॥ सञ्ज्ञापूर्वकत्वाद्वृद्ध्यभाव ॥

मध्वाधार । पुं० सिक्थके ॥

मध्वालु । ) न० कन्दविशेषे । मधु
मध्वालुकम् । ) न० रतायुक्तेगेमाव्विते । दीर्घसुषिनीति० भा० । मौआलु इ० गौ० भा० ॥

मध्वासव । पु० मधूकपुष्पजातेमद्ये । माधवके । मधुनि । माध्वीके ॥ मधूकपुष्पंमधु । तस्यासव ॥

मध्वासववणिक । पुं० शौण्डिके ॥

मध्वजा । स्त्री० मद्यं ॥

मन । पु० जटामास्याम् ॥

मनआप । त्रि० मनोज्ञे ॥

मनःप्रग्रहवान् । त्रि० प्रगृहीतमनसि । समाहितचित्ते ॥

मनप्रसाद । पु० विषयचिन्ताव्याकुलत्वराहित्ये ॥ मनस स्वच्छतायाम् ॥ मनस प्रसाद ॥

मन शिल । पु० मन शिलायाम् ।

मन शिला । स्त्री० रक्तवर्णधातुविशेषे । कुनट्याम् । मनोह्वायाम् । नागजिह्विकायाम् । मनसिल० इ० भा० ॥ मन शिलागुरुर्वर्णासरोष्णालेखनीकटु । तिक्तास्निग्धाविषश्वासकासभूतकफास्रनुत् ॥ मन शिलामन्दबलंकरोतिजन्तुं ध्रुवं शोधनमन्तरेण । मलानुबन्धं किलमूत्ररोधं सशर्करं कृच्छ्रगदं चकुर्यात् ॥ तालकस्यैवभेदोऽस्तिमनोगुप्तं तदन्तरम् । तालकंत्वतिपीतस्यात्सविद्रुमामन शिला ॥ अथशोधनम् । पचेत्त्र्यहमजामूत्रे दोलायन्त्रे मन शिलाम् । भावयेत्सप्तधापित्ते रजाया साविशुध्यति ॥ मन शब्दवाच्याशिला । शाकपार्थिवादि ॥

मननम् । न० बुद्धौ ॥ युक्तिभिरनुचिन्तने ॥ ध्याने ॥ असम्भावनाविपरीतभावनानिरासेनयुक्तैरनुचिन्तने ॥ उक्तं ॥ श्रुतस्यार्थस्याद्वितीयवस्तुनोवेदान्तार्थानुगुणयुक्तिभिरनवरतमनुचिन्तने ॥ केवलपुरुषबुद्ध्याऽत्युत्प्रेक्षितशुष्कतर्कव्यावृत्त्यर्थं वेदान्तार्थानुगुणेतिविशेषणम् ॥ अर्थाऽसम्भावनोच्छेदी तर्को मननमीरितम् । वेदशास्त्राविरोधात्तु तर्कोऽन्योऽनर्थकोऽन्तर ॥ आत्मन्यतीतेसर्वस्मात्सर्वरूपेऽथवाततेः कोवन्धः कश्चवामोक्षोनिर्मलंमननंकुरु ॥

मन । न० ज्ञानेन्द्रियविशेषे । बुद्धीन्द्रियाणाम्प्रधानेभगवतोविभूतौ । चित्ते । चेतसि । हृदये । स्वान्ते । हृदि । मानसे ॥ अपिचास्यपर्याया यथाभारते । मनोमहान्मतिर्ब्रह्मापूर्बुद्धि ख्यातिरीश्वर । प्रज्ञासंविच्चितिश्चैवस्मृतिश्चपरिपठ्यते । पर्यायवाचका शब्दामनस परिकीर्त्तिता ॥ इति । न्यायमतेऽस्यगुणा । यथा । परापरत्व सङ्ख्याद्या पञ्चवेगाश्चमानसे । मनोग्राह्यसुखदु खमिच्छाद्वेषोमति कृति ॥ अयौगपद्याज्ज्ञानानांतस्याणुत्वमिहेष्यते । इति ॥ जन्यज्ञानसामान्य प्रतित्वङ्मनोयोग कारणम् । त्वचोयोगोमनसाज्ञानकारणमुच्यते ॥ तस्यनवगुणायथा । धैर्योपपत्तिर्व्यक्तिश्चविसर्ग कल्पनाक्षमा । सद्

सञ्चाशुताचैवमनसोनवगुणा ॥ धैर्यम् १ । उपपत्ति ऊहापोह कौशलम् २ । व्यक्ति स्मरणम् ३ । कल्पनामनोरथवृत्ति ४ । विसर्ग विपरीतसर्गभ्रान्ति ५ । क्षमा ६ । सत्०वैराग्यादि ७ । असत्०राग द्वेषादि ८ । आशुता० अस्थिरत्व म् ९ । इत्यर्थः ॥ अन्तः करणे ॥ अस्यचातुर्विध्ययथा । मनोबुद्धिरह ङ्कारश्चित्त करणमान्तरम् । संशयो निश्चयोगर्वः स्मरणविषयाअमी ॥ तस्याध्यात्मत्वादियथा । अध्या त्म मनइत्याहुः पञ्चभूतात्मधार कम् । अधिभूतञ्चसङ्कल्पश्चन्द्रमाश्चा धिदैवतम् ॥ इति ॥ तस्यस्वरूपय- था । अनिरूप्यंमहश्चज्ञानभेदम- न स्मृतमिति ॥ तस्यप्राशस्त्या प्राशस्त्यानुमापकानियथा । जना नाहृदयस्य सुव्यक्तं वचनेनवै । शिष्ये कलत्रे कन्यायादौहितेबान्ध वेपिच ॥ पुत्रे पौत्रे चवचसिप्रतापे यशसिश्रियाम् । बुद्धौवारिणिवि द्यायाञ्जायतेहृदयनृणाम्इतिब्रह्म वैवर्त्तपुराणम् ॥ तस्यबन्धमोक्ष प्रति हेतुत्वयथा । नदेहोनचजीवात्माने न्द्रियाणिपरन्तप । मनएवमनुष्या णाङ्कारणबन्धमोक्षयो । बन्धस्य- विषयासङ्गिमुक्तं निर्विषयन्तथेति ॥ तच्चनायवीयपरमाणुरूपमितिशिरो मणिमतम् । स्पर्शरहितत्वेसति- क्रियावत्त्वम्बातल्लक्षणम् ॥ अस्यक्लो बत्वमेव नपुंसकमितिज्ञात्वाप्रिया- यैप्रेषितमन । तत्तुतत्रैवरमतेह ता पाणिनिनावयम् ॥ सुखदु खा द्युपलब्धिसाधने०इन्द्रियविशेषे ॥ सङ्कल्पविकल्पात्मिकायामन्त का रणवृत्तौ ॥ तच्चप्रत्यात्मनियतत्वा- दनन्त परमाणुरूपनित्यञ्चेतिता- र्किका ॥ एकैकस्यात्मनएकैकमन इत्यात्मनामनेकत्वान्मनसोऽनेकत्व म् ॥ प्रदीपज्वालासन्तानवृत्तिसन्ता नरूपेणपरिणममानमन्त करणद्र व्य मननात्मकत्वान्मनइत्युच्यते ॥ ए कादशेन्द्रियाणामध्येप्रवर्त्तकमनो वासुदेवविभूति ॥ उभयात्मकमच मन सङ्कल्पकमिन्द्रियञ्चसाध र्म्यात् । एकादशस्विन्द्रियेषुमध्ये मनउभयात्मकम्०बुद्धीन्द्रियङ्क र्मेन्द्रियञ्च । चक्षुरादीनावागादी नाञ्चमनोधिष्ठितानास्वविषयेप्रवृ- त्ते । तदसाधारणेनरूपेणलक्षय ति०सङ्कल्पकमत्रमन । आलो चितमिन्द्रियेणवस्त्विदमितिसम्मु- ग्धम्०इदमेवनैवमितिसम्यक्कल्प यति०विशेषणविशेष्यभावेनविवेच यतीतियावत् । यथाहु । सम्मुग्ध वस्तुमात्रन्तुप्राग्गृह्णात्यविकल्पि तम । तत्सामान्यविशेषाभ्याक-

स्यधिमनीषिणइति ॥ तथा॰अ सिद्धालोचन ज्ञान प्रथम निर्विकल्पकम् । बालमूकादिविज्ञानसदृश शुद्धवस्तुजम् ॥ तत पर पुनर्वस्तुधर्मैर्जात्यादिभिर्यया ॥ बुद्ध्यावसीयतेसापिप्रत्यक्षत्वेनसम्मतेति॥ सोय सङ्कल्पलक्षणोव्यापारोमानस समानासमानजातीयाभ्यां व्यवच्छिन्दन्मनोलक्षयति॥ स्यादेतत् । असाधारणव्यापारयोगिनो यथामहदहङ्कारौनेन्द्रियम्॰एव मनोप्यसाधारणव्यापार नेन्द्रिय भवितुमर्हतीत्यतआहइन्द्रियञ्च॰कुत साधर्म्यात्॰इन्द्रियान्तरै । सात्त्विकाहङ्कारोपादानत्वञ्चसाधर्म्यम् । नत्विन्द्रलिङ्गत्वम्॰महत्तत्त्वादीनामपि॰इन्द्रलिङ्गत्वेनेन्द्रियत्वप्रसङ्गात् । तस्माद्व्युत्पत्तिनिमित्तमात्रमिन्द्रलिङ्गत्वनप्रवृत्तिनिमित्तम ॥ मनुतेऽनेनेतिविज्ञाननिमित्तान्त करणे ॥ युगपज्ज्ञानानुत्पत्तिर्मनसोलिङ्गम् ॥ १६ । इतिगोतमसूत्रम् । युगपत्एककाले॰एकात्मनीतिपूरणीयम्॰ज्ञानानामनुत्पत्तिर्यत सएवधर्मोज्ञानकरणायत्त्व मनसोलिङ्ग लक्षणमित्यर्थ । तथाहि । चक्षुरादिषु विषयसम्बन्धेपि॰यस्मात्स्वभावादेकन्ज्ञान जनयतितत्सम्बन्धात्परज्ञा

न जनयति॰तदेवचाणु निखिलज्ञानजनकसुखादिसाक्षात्कारासाधारणकारण तदेकमिवलाघवात् सिद्धमनइत्यर्थं ॥ लक्ष्मान्नेयमभवम ॥ मनएवमनुष्याणाकारण बन्धमोक्षयो । बन्धायविषयासक्त मुक्त्यैनिर्विषयस्मृतम् ॥ यतोनिर्विषयं नित्य मन कार्यं मुमुक्षुणा ॥ निरस्तविषयासङ्ग सन्निरुद्ध मनोहृदि यदायात्युन्मनीभाव तदातत्परम पदम् ॥ तावदेवनिरोद्धव्य यावद्धृतिगतक्षयम । एतज्ज्ञानञ्चध्यानञ्च शेषोन्यायश्चविस्तर ॥ मन्यतेनेन मनुतेनेनवा । मनज्ञाने॰मनुञ्चवबोधनेवाअसुन् ॥ मनसोनैर्मल्यन्त्वनश्यकरणीयम । यथोक्तंश्रीदेवीभागवते । भ्रमन्सर्वेषु तीर्थेषुस्नात्वास्नात्वापुनपुन । निर्मलनमनोयावत्तावत् सर्वं निरर्थकमिति ॥

मनसा । स्त्री॰ विषहर्याम् । जरत्कारुमुने पत्न्याम् ॥

मनसादेवी । स्त्री॰ कद्रौ । मनसायाम् ॥ अस्या प्रणाममन्त्रोयथा । आस्तीकस्यमुने र्माता भगिनी वासुकेस्तथा । जरत्कारुमुने पत्नी मनसादेवीनमोस्तुते ॥ अस्याध्यान यथा । देवीमम्बामहीनांशशधरवदनांचारुकान्ति वदान्यांहसारूढामुदारामरुणितवसनासर्वदास

वं द्वे व । स्मरास्नामखिडताङ्गीकन
कमणिगणैर्नागरलैरनेकैर्वन्दे ह
साष्टनागामुरुकुचयुगलाभोगिनीं
कामरूपामितितिथ्यादितत्त्वम् ॥

मनसिज । पु० कामदेवे ॥ शृङ्गाररूपे
चमनसिजायतेस्म । जनी० सप्त
म्याजनेर्ड तत्पुरुषे कृतीत्यलुक्
हलदन्तादितिवा ॥

मनसिशय । पु० स्मरे । कामदेवे
। मनसिशेते । शीङ् । अधिकरणे
शेतेरित्यच् । हलदन्तादित्यलुक् ॥

मनस्कार । पु० चित्ताभोगे । मन
स सुखादौ । एकस्मिन्विषयेचि
त्तस्थैर्ये ॥ मनस कारोव्यापार
विशेष । डुकृञ् । भावे घञ् ।
अत कृकमीतिसत्वम् ॥

मनस्ताप । पुं० मन पीडायाम्
अनुतापे । पश्चात्तापे ॥ यथा
। परनिन्दानिजोत्कर्षव्यसनायुक्त
भाषणम् । अयुक्तकर्मकुर्वाणोम
नस्तापैर्विशुद्ध्यतीतिमहानिर्वा
णतन्त्रम् ॥ ब्राह्मणेनयदा देवा
च्छिन्नयज्ञोपवीतकम् । मनस्ता
पेनशुद्धि स्यादापस्तम्बोऽब्रवीत्
मुनि ॥

मनस्ताल । पु० दुर्गाया सिंहे ॥

मनस्थ । त्रि० मनसिस्थितवस्तुनि ॥

मनश्नम् । न० शिवशाबुद्धौ ॥

मनस्वी । पु० शूरे ॥ अभिमानि
नि ॥ मनोऽस्यास्ति । असन्त
त्वाद्विनि ॥ शरभे ॥ त्रि० सुम
नसि । प्रशस्तमनोयुक्ते ॥ प्रश सा
याविनि ॥ क्वचिद्भूमौशय्याक्वचि
दपिचपर्यङ्कशयन क्वचिच्छाका
हार · क्वचिदपिचशाल्योदनरुचि
। क्वचित्कन्थाधारीक्वचिदपिचदि
व्याम्बरधरोमनस्वीकार्यार्थी नगण
यतिदु खनचसुखम् ॥

मनस्विनी । स्त्री० प्रशस्तमनसिस्त्रि
याम् ॥ नान्तलक्षणोङीप् ॥

मनहंस । पु० अतिशक्वरीच्छन्द
१५ प्रभेदे ॥ सगणविधायपयो
धरद्वयमुन्दरम्० भगणततोपिवि
धायचामरतोमरम् । मनहंसहृत्त
मिदक्षपञ्चदशाक्षरम् भणितम्भुज
ङ्गमनायकेनमनोहरम ॥ यथा ।
नवमञ्जुवञ्जुलकुञ्जकूजितकोकि
ले०मधुमत्तचञ्चलचञ्चरीककुलाकु
ले । समयेतिधीरसमीरकम्पित
मानसे० किमुखण्डमानमनोरथे
नविखिद्यसे ॥

मनाक् । अ० अल्पे ॥ मन्दे ॥ मन
नम् । मनद्याने । आक् प्रत्यय ॥

मनाका । स्त्री० करिण्याम् ।
हस्तिन्याम् ॥ मन्यते । मन० ।
बलाकादयश्चेतिसाधु ॥

मनाक्करम् । न० म गल्यायाम् । म-
ल्लिकागन्धयुक्ताऽगुरुणि ॥ त्रि० ई

षत्कार ॥

मनायी । स्त्री॰ मनो पत्न्याम् ॥ मनुशब्दपुंयोगे॰मनोरौवेत्त्यैकारा देशस्ततोङीप्च ॥

मनावी । स्त्री॰ मनाय्याम् ॥ मनो स्त्रीतिपुंयोगेमनुशब्दस्यमनोरौवेत्यौ कारादेशस्ततोङीप्च ॥

मनित । त्रि॰ बुद्धे । ज्ञाते॥ मन्यते स्म । मनुअवबोधने । क्त । यस्य विभाषेत्यस्यानित्यत्वादिट् ॥

मनोकम् । न॰ अञ्जने ॥

मनीषा । स्त्री॰ बुद्धौ धिषणायाम् शेमुष्याम् ॥ ईषणम्॰ईषा । ईष गतिहिंसादर्शनेषु । गुरोश्चहलइत्य प्रत्यय । टाप । मनसईषा । श- कन्ध्वादि ॥

मनीषिका । स्त्री॰ मनीषायाम् ॥

मनीषितम् । न॰ मनीषायामभिनिवि ष्ट मनीषितम् । प्रातिपदिकाद्धात्व र्थेबहुलमिष्ठवच्चेति॰ णिचि॰ तद न्तात्॰ क्त ॥ इच्छायाम् ॥

मनीषी । पु॰ ज्ञे । प्राज्ञे । धीरे । पण्डिते ॥ मनीषाऽस्यास्ति । व्रीह्या दित्वादिनि ॥ यद्वा । मनसईषी चित्तशुद्धिक्रमेणमनसोवशीकर्त्ता ॥ मनसईषितरिसर्वज्ञईश्वरे ॥ पृषोद रादि । ब्रह्मविदि ॥ अकृतफला भिसन्धौ । सत्वशुद्धिद्वारेणमहावा- क्यजन्यात्ममनीषावति ॥ विवेकि नि । प्रमाणकुशले ॥

मनु । पु॰ ब्रह्मण पुत्रे । सचप्र- जापतिर्धर्मशास्त्रवक्ताच ॥ स्वाय म्भुवादिषु ॥ प्रतिकल्पं चतुर्दशम- नवोभवन्ति । तेषानामानियथा । स्वायम्भुव १ सचगायत्र्याब्रह्मणो जात । स्वारोचिष २ । उत्तम ३ । तामस ४ । रैवत ५ । चा क्षुष ६ । सचध्रुवपौत्रातरिपुञ्ज- यातब्रह्मदौहित्र्यावीरणकन्यायावैरि णयाजात । एतेषडतीता । वैव स्वत ७ । अयञ्चसूर्यात्सञ्ज्ञाया जातोवर्त्तमानएव ॥ सावर्णि ८। सतुसूर्याच्छायायाभविष्यति । द क्षसावर्णि ९ । ब्रह्मसावर्णि १० । धर्म्मसावर्णि ११ । रुद्रसावर्णि १२ । देवसावर्णि १३ । इन्द्रसावर्णि १४ । एतेभ विष्यन्ति ॥ मात्स्येनवमादिमनूना नामान्तराण्युक्तानि । यथा॰ रौ- च्य ९ असौरुचिप्रजापते पुत्र । भौत्य १० । असौभूतिप्रजाप- ते पुत्र । मेरुसावर्णि ११ अ सौब्रह्मण पुत्र । ऋतु १२ ऋ तुधामा १३ । विष्वक्सेन १४॥ इतिमात्स्येनवमाध्यायमारभ्यैकवि शत्यध्यायपर्यन्तचतुर्दशमनूनानि- रूपणमस्ति ॥ ब्रह्मणोदिवसेब्रह्म- न् मनवश्चचतुर्दश । भवन्तिपरिम

यस्त्वेषांकालकृतस्तृणु ॥ सप्तर्षय सुरा शक्रोमनुस्तत्सूनवोन्त्पा । एककालेहिसृज्यन्ते स ह्रियन्तेचपूर्ववत् ॥ चतुर्युगाणासङ्ख्यातसाधिकाह्येकसप्तति । मन्वन्तरमनोकाल सुरादीनाञ्चसत्तम ॥ अष्टौ शतसहस्त्राणिदिव्ययासङ्ख्ययास्मृता । द्वापञ्चाशत्तथान्यानिसहस्राण्यधिकानिच ॥ त्रिंशत्कोट्यस्तु सम्पूर्णा सङ्ख्याता सङ्ख्यया द्विज । सप्तषष्टिस्तथान्यानिनियुतानिमहामुने ॥ विंशतिश्चसहस्राणि कालोयमधिकंविना । मन्वन्तरस्य सङ्ख्येयमानुषैर्वत्सरैर्द्विज ॥ मन्वे ॥ मनुष्ये॰ । जिनभेदे ॥ प्रजापतौ ॥ कविविशेषे ॥ स्वायम्भुवप्रणीतस्मृतिविशेषे ॥ मनुते । मनुअव बोधने । शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्चेत्युः ॥ मन्यते । मनज्ञाने । पूर्ववत्॰ उः ॥

मनु । स्त्री॰ मनो पत्न्याम् ॥ मनोस्त्रीतिविग्रहे॰ पुयोगे॰ मनोरौवेत्यौकारैकाराभावे॰ तत्सन्नियोगशिष्टोङीप्चनभवति ॥ पृक्कायाम् ॥

मनुज । पु॰ मनुष्ये ॥ मनोर्जात । जनी॰ । पञ्चम्यामितिड ॥

मनुजपति । पुं॰ नरेन्द्रे । मनुजानापति । ॥ मध्यगुरुसञ्ज्ञायाम्॰ । ऽ । ० ॥

मनुजी । स्त्री॰ मनुष्याम् ॥

मनुभू । पुं॰ मनुष्ये ॥

मनुराट् । पु॰ कुबेरे । निधिनाथे । श्वेतोदरे ॥

मनुषी । स्त्री॰ मानुषस्त्रियाम् । मनुष्यस्यस्त्रीजातौ ॥ योपधप्रतिषेधे॰ गवयहयमुकयमनुष्यमत्स्यानामप्रतिषेधइतियोपधाज्जातेर्ङीष् । हलस्तद्धितस्येतियलोप ॥

मनुष्य । पु॰ मानुषे । मर्त्ये । मनुजे । मानवे । नरे ॥ अयन्तुअर्वाक्स्रोतोब्रह्मणोनवम सर्गएकविधश्च । यथा । अर्वाक्स्रोतस्तुनवम स्तत्रैकविधोनृणाम् । रजोधिका कर्मपराद्दु खेचसुखमानिन ॥ अपिच । तत्रापिध्यायत सर्गसत्याभिध्यायिनस्तत । प्रादुर्बभूवचाव्यक्तादर्वाक्स्रोतस्तुसाधक ॥ यस्मादर्वाक्प्रपद्यन्ते ततोर्वाक्स्रोतसस्तु ते । तेचप्रकाशबहुलास्तमोद्रिक्तारजोधिका ॥ तस्मात्ते दु खबहुला भूयोभूयश्चकारिण । प्रकाशावहिरन्तश्चमनुष्यासाधकास्तुते इतिवह्निपुराणम् ॥ शास्त्रीयज्ञानकर्मयोग्योऽयम् ॥ अत्रपशुमनुष्यविभागोवाराह्याम् ६७ अध्याये ॥ मनोरपत्यम् । मनोर्जातावञ्यतौषुक्च ॥

मनुष्यतीर्थम् । न॰ प्रजापतितीर्थे । कनिष्ठामूले ॥

मनुष्यधर्मा । पु० धनदे । श्रीदे । कुवेरे ॥ मनुष्यस्येवधर्म्म आचार । श्मश्रुलत्वादिर्वास्य । धर्मादनिच्केवलात् ॥

मनुष्ययज्ञ । पु० अतिथिपूजने । नृयज्ञे ॥

मनुष्यलोक । पु० अधिकृतब्राह्मणादिविशिष्टदेहे ॥

मनोगुप्ता । स्त्री० नागजिह्वायाम् । मनःशिलायाम् ॥ मनसागुप्ता । कर्तृकरणसमास ॥ इक्षुप्रभेदे । मनोगुप्तावातहरीतृष्णामयविनाशिनी । सुशीतामधुरातीवरक्तपित्तप्रणाशिनी ॥

मनोज । पु० कामदेवे ॥ मनसिजायतेशृङ्गारादिरूपेणप्रादुर्भवति । जनी० । सप्तम्याजनेर्ड । तत्पुरुषेकृतिबहुलमितिबहुलग्रहणात्लुगभावाभाव ॥

मनोजन्मा । पु० कामदेवे ॥ मनसोजन्मयस्यस ॥

मनोजव । पु० हरौ ॥ मनसोवेगइवजवोयस्यसर्वगतत्वात् ॥ हनुमति मनसोवेगे ॥ त्रि० पितृसन्निभे । पितृतुल्ये । अतिशयवेगवति ॥ जवति । जु सौत्र । अच् । मनोजववेगवद्यस्मिन् ॥

मनोजवस । पु० पितृसन्निभे ॥ मनोजवतेस्मिन् । औणादिकोऽस ॥

मनोजवृद्धि । पु० कामवृद्धिक्षुपे ॥

मनोज्ञम् । न० सरलकाष्ठे ॥ त्रि० शोभने । मनोहरे । सुन्दरे । रुचिरे ॥ मनसाजानाति । इगुपधेतिक । निवृत्तप्रेषणोत्रजानाति ॥

मनोज्ञा । स्त्री० मनःशिलायाम् ॥ राजपुत्र्याम् ॥ बन्ध्याकर्कोटक्याम् ॥ जात्याम् ॥ मदिरायाम् ॥ स्थूलजीरके ॥

मनोनाश । पु० मनसोलये ॥ मनसोनाशोनामवृत्तिरूपपरिणामपरित्यज्यसर्ववृत्तिविरोधिनानिरोधाकारेणपरिणाम ॥ सहस्राङ्कुरशाखात्मफलपल्लवशालिन । अस्यसंसारवृक्षस्यमनोमूलमितिस्थितम् ॥ संकल्पमेवतन्मन्ये सङ्कल्पोपशमेनतत् । शोषयामियथाशोषमेतिससारपादप ॥ प्रबुद्धोस्मिप्रबुद्धोस्मिदुष्टश्चौरोमयात्मन । मनोनामनिहन्म्येनमनसाहचिरहत ॥ इतिजनक ॥ वशिष्ठोप्याह । अस्यसंसारवृक्षस्यसर्वोपद्रवदायिन । उपायएकएवास्तिमनस स्वस्यनिग्रह ॥ मनसोभ्युदयोनाशोमनोनाशोमहोदय । ज्ञोमनोनाशमभ्येतिमनोज्ञस्यहिशृङ्खला ॥ तावन्निशीववेतालावल्गन्तिहृदिवासना । एकतत्त्वदृढाभ्यासाद्यावन्नविजितमन ॥ प्रक्षीणचित्तदर्पस्यनिगृहीतेन्द्रियद्विष । पद्मि

न्यद्रूवद्दिमन्तीयन्ते भोगवासना ॥ इस्तहस्तेनसम्पीड्यदन्तैर्दन्तान्विचूर्ण्यं च । अङ्गान्यङ्गैः समाक्रम्य जयेदादौस्वकमन ॥ एतावतिभूमितलेसुभगास्ते साधुचेतना पुरुषा । पुरुषकथासुचगण्यानजितायैचेत सा खेन ॥ हृदयविलेद्धतकुण्डलव ल्लयकलनाविषोमनोभुजग । य-स्योपशान्तिमागतमुदितमव्ययव न्दे ॥ इति ॥ द्वौक्रमौचित्तनाशस्य योगोज्ञानञ्चराघव । योगस्तद्वृत्तिरोधेहिज्ञानसम्यगवेक्षणम् ॥ असाध्य कस्यचिद्योग कस्यचिज्ज्ञान निश्चय । प्रकारौद्वौततोदेवोजगाद परमेश्वर ॥ इतिच ॥ मनोनाशाभ्यासस्तु॰ अत्यन्ताभावसम्प्रत्तौज्ञातुर्ज्ञेयस्यवस्तुन । युक्त्याशास्त्रैर्यतन्ते येतेप्यत्राभ्यासिन स्थिता ॥ ज्ञातृज्ञेययोर्मिथ्यात्वधीरभावसम्पत्ति ॰ स्वस्वरूपेणाप्यप्रतीतिरत्यन्ताभावसम्पत्ति । युक्तिर्योग । सोयमनोनाशाभ्यास ॥

मनोन्मनी । स्त्री॰ योगिनोऽवस्थाविशेषे ॥ यथा [illegible] [illegible] निमेष [illegible] मनस [illegible] मनोन्मनीसाम [illegible] ॥ चित्तेन्द्रियाणां [illegible] प्रवाहेभिमितिसम

न्ते । निवातदीपायुतनिश्चलाङ्गा-मनोन्मनीसामयिसन्निधत्तामिति ॥

मनोभव । पु॰ कामदेवे ॥ मनसिभवोऽस्य ।

मनोभू । पु॰ कन्दर्पे । मनसा॰ मनस मनसिवाभवति। भुव क्विप् ॥

मनोमय । पु॰ पञ्चकोषान्तर्गततृतीय कोषे । इच्छाशक्तिमति॰करणरूपे मनस्युकर्मेन्द्रियै सहितमनोमय-कोषोभवतीति ॥ अहन्ताममतादेहेगृहादौचकरोतिय । कामाद्यवस्थयाभ्रान्तोनासावात्मामनोमय ॥ आत्मनि ॥ मनोवृत्तिभिर्विभाव्यमानत्वात् ॥ त्रि॰ मन प्राये ॥

मनोयोनि । पु॰ कामदेवे ॥ मनोयोनिरस्य ॥

मनोरथ । पु॰ इच्छायाम् । स्पृहायाम् ॥ मनएवरथोऽत्र । मनसोरथ इववा ॥ मनोरथानांनसमाप्तिरस्तिवर्षायुतेनाप्यथवाब्दलक्षै । पूर्णेषु पूर्णेषुपुनर्नवानामुत्पत्तय सन्तिमनोरथानाम् त्रि॰ मनस्तुष्टिकरे। चित्तपरिकल्पिते॰ चित्तपरिच्छेदेमनस्यन्तर्वर्तमाने ॥

मनोरम । त्रि॰ सुन्दरे । रुचिरे । चारुणि । सुषमे । साधौ । शोभने ॥ मनोरमयति । रम् ॰ । णयन्त । कर्मण्यण् ॥ दक्षिणपश्चिमद्वारगृहे ॥

मनोरमा । स्त्री० मनोज्ञायाम् । का न्तायाम् । मञ्जुलायाम् । मनोह रायाम् । सुन्दर्याम् ॥ वृत्तशक्तिवि शेषे । तारायाम् । लोकेश्वरात्म जायाम् ॥ पङ्क्तिश्छन्द १० प्र- भेदे । यथानरजगैर्भवेन्मनोरमा । यथा । तरणिजातटविहारिणी० व्रजविलासिनीविलासत । मुररि सनु पुनातुव ० सुकृतशालि नामनोरमा ॥

मनोवती । स्त्री० ब्रह्मण पुर्याम् ॥ यथा । चतुर्दशसहस्राणियोजनानां स्वयम्भुव । मध्येमनोवतीनामपु रीलोकेशवन्दिता ॥ याचकाराख्या नुच्चैर्वियन्मार्गान्महश्रिया । सावित्र्या . स्पर्द्धमानेवस्वर्गकामार्ति वर्तिनी ॥ तस्यामुपासतेदेवामुनय स्समहौजस । महायोगेश्वरसिद्धा यमाद्यैर्भूतवैधसम् ॥ मध्ये० इन्द्रा द्यष्टदिक्पानाममरावत्याद्यष्टपुरी णांमध्यइत्यर्थ ॥ इतिमृगेन्द्रसंहि ता ॥

मनोवित् । पु० लोकायतभेदे ॥ सद्भिरा त्मामनएवात्मेतिनिश्चिनोति । म

मनोहर । पु० कुन्दवृक्षे ॥ न० सुव र्णे ॥ त्रि० मनोज्ञे ॥ मनोहरति हरतेरनुद्यमने० इत्यच् ॥

मनोहरा । स्त्री० जातीवृक्षे ॥ स्वर्णयू थ्याम् ॥ मनोज्ञायाम् ॥ टाप् ॥

मनोहर्त्ता । त्रि० मनोहरणकर्त्तरि ॥

मनोहारि । न० सुन्दरवाक्ये ॥ त्रि० मनोहरे ॥ प्रिये ॥

मनोह्वा । स्त्री० मन शिलायाम् ॥ मन शब्देह्वयते । ह्वेञ्शब्दे । आतश्चोपसर्गेइत्यङ् । टाप् ॥

मन्तव्य । त्रि० ज्ञेये ॥ मननीये । भाव्ये । विभावनीये ॥ मन्तव्यश्चो पपत्तिभि ॥

मन्तु । पु० अपराधे ॥ मनुष्ये ॥ प्रजापतौ ॥ न० मन्त्रणायाम् ॥ म न्यते । मनज्ञाने । कमिमनिजनी त्यादिना० तु ॥

मन्ता । पु० मन्त्रिणि ॥ मन्यते । मन । बहुलमन्यत्रापीति० तृच् ॥

मन्त्र । पु० वेदविशेषे ब्राह्मणभिन्ने वेदभागे । याज्यापुरोनुवाक्यादौ । देवेभ्योयेनोह्निश्यहविर्दीयतेतत्र ॥ स्वरतोवर्णतोवाहीनस्समन्त्रस्यानिष्ट फलजनकत्वमुक्तं शिक्षायामहाभाष्ये च । मन्त्रोहीन स्वरतोवर्णतोवा मिथ्याप्रयुक्तोनतमर्थमाह । सवाग् वज्रोयजमानहिनस्तियथेन्द्रशत्रु स्वरतोपराधादितिशिक्षा । दुष्ट ।

शब्द स्वरतइतिभाष्यपाठ । दुष्टान्शब्दान् माप्रयुक्ष्महीत्यधेयव्याकरणमिति ॥ अत्रकैयट । स्वरेणस्वरत । आद्यादित्वात्तसि । मिथ्याप्रयुक्तइति । यदर्थ प्रतिपादनायप्रयुक्तास्ततोऽथान्तर स्वरवर्णदोषात् प्रतिपादयन्नाभिमतमर्थमाहेत्यर्थ । वागेववज्रोहिंसकत्वात्यथेन्द्रशत्रु शब्द स्वरदोषात्यजमानहिंसितवानित्यर्थ । इन्द्रस्याभिचारोऽत्रत्वेणारब्ध । तत्रेन्द्रशत्रुर्वर्द्धस्वेतिमन्त्रऊहित । तत्रेन्द्रस्यशमयिताशातयितावाभवेतिक्रियाशब्दोऽनशत्रुशब्दआश्रितोनतुरूढिशब्द । तदाश्रयणे हिबहुव्रीहितत्पुरुषयोरर्थाभेदः । तत्रेन्द्रादिमिचार्त्वसिद्धे सतिइन्द्रस्यशत्रुर्भवेत्यर्थे प्रतिपाद्येअन्तोदात्त प्रयोक्तव्ये आद्युदात्तत्वेनाप्रयुक्तइत्यर्थान्तराभिधानादिन्द्रएव० वृत्रस्यशातयितासम्पन्न । इन्द्रशत्रुत्वस्यविधेयत्वात्सम्बोधनविभक्तेरनुवाद्यविषयत्वादिहाभाव । यथाराजाभवयुध्यस्वेति । ऊह्यमानस्यचामन्त्रत्वात्यज्ञकर्मणीतिजपादिपर्युदासेमन्त्राणामेकश्रुतिर्विधीयमानानेहभवतीति ॥ * ॥ मन्त्रान्तेकर्मसन्निपातइतिन्याय ॥ प्रयोगसमवेतार्थस्मारकेवेदभागे ॥ मन्त्राणातादृशार्थस्मारकत्वेनैवार्थवत्त्वम् ० नतुतदुच्चारणमदृष्टार्थं सम्भवति । दृष्टफलकत्वे ० अदृष्टकल्पनायाअन्याय्यत्वात् । न चदृष्टार्थ स्मरणस्यप्रकारान्तरेणापि सम्भवान्मन्त्राम्नान व्यर्थ मितिवाच्यम् । मन्त्रैरेवस्मर्त्तव्यमितिनियमविध्याश्रयणात् ॥ देवादीनासाधने । मायावीजादौ ॥ गुह्यवादे । रहसिकर्त्तव्याऽवधारणे । मन्त्रणायाम् ॥ तस्यच०पञ्चाङ्गानिभवन्ति । तानिच । कर्मणामारम्भोपाय ० पुरुषद्रव्यसम्पत्० देशकालविभाग ० विनिपातप्रकार ० कार्यसिद्धिरिति ॥ मन्त्रमूल यतोराज्यमतोमन्त्र सुरक्षित । कुर्याद्यथातन्नविदु कर्मणामाफलोदयम् ॥ गिरिपृष्ठ समारुह्यप्रासाद वारहोगत । अरण्येनि शलाकेवा मन्त्रयेदविभावित ॥ षट्कर्णो भिद्यतेमन्त्रश्चतुष्कर्णस्थधार्यते । द्विकर्णस्यतुमन्त्रस्यब्रह्माप्यन्तेनबुध्यते ॥ मन्त्रते०मन्त्रणे वा । मचिगुप्तभाषणे । घञ् ॥ पद्मरागौ ।

मन्त्रक्रत् । पु० मन्त्रविधि । मन्त्रव्याकरके ॥ मन्त्रानक्रतवान् । सुकर्मपापमन्त्रपुण्येषुक्रञइतिक्विप् ॥ मन्त्रद्रष्टरि ॥ दौत्यक्रति ॥ मन्त्राणांद्रष्टरि०प्रयोक्तरि

च ॥

मन्त्रगण्डक । पु० विद्यायाम् ॥

मन्त्रगूढ । पु० चरे॥ मन्त्रोगूढोय स्मिन् ।

मन्त्रगृहम् । न० मन्त्रणागारे ।

मन्त्रजा । स्त्री० मन्त्रशक्तौ ॥

मन्त्रजिह्व । पु० वह्नौ ॥

मन्त्रज्ञ । पु० चरे ॥ त्रि० । मन्त्रविदि ॥

मन्त्रज्वाल । पु० अग्नौ ॥

मन्त्रणम् । न० मन्त्रे ॥ मत्रि० । भावेल्युट् ॥ मन्त्रणायाम् ॥

मन्त्रणा । स्त्री० मन्त्रे ॥ रहसिकर्त्तव्यावधारणे ॥ तत्रवर्णनीयानि यथा । मन्त्रेपञ्चाङ्गताशक्तिषाड्गुण्योपायसिद्धय । उदयाश्चिन्तनीयास्त्वस्थैर्य्याद्यादिसूक्तय ॥

मन्त्रणागारम् । न० मन्त्रगृहे ॥

मन्त्रद । त्रि० मन्त्रदातरि ॥

मन्त्रदाता । त्रि० मन्त्रप्रदानकर्त्तरि । श्रीगुरौ ॥ अदीक्षितस्यमूर्खस्यनिष्कृतिर्नास्तिनिश्चितम् । सर्वकर्मस्वनर्हस्सनरकेतत्पशोस्थि-ति ॥ जन्मदातान्नदाताचामातान्येगुरवस्तथा । पारेकर्त्तुंनशक्यन्तेघोरेससारसागरे॥ विद्यामन्त्रज्ञानदातानिपुण, पारकर्मणि । नशक्त शिष्यमुद्धर्त्तुमीश्वरस्त्वीश्वरोऽपर ॥

मन्त्रदीधिति । पु० अग्नौ ॥

मन्त्रनिर्णय । पु० मन्त्रनिश्चये ॥ यथा । मन्त्रमूलयतोराज्यंततो मन्त्रसुरक्षितम् । कुर्याद्यथातन्नविदु कर्मणामाफलोदयात् ॥ अर्थानर्थौंद्वियचोभौस शयश्चपरीक्ष्यते । समञ्चइतिविज्ञेय श्रेषाखखलुविभ्रमा ॥ एकमेवविषद्वित्रिभिस्त्रिभिर्वाश्चयभ्यते । सराष्ट्रसम्पद हन्तिराजानमचविभ्रव ॥ कारिष्यन्नप्रभाषेतकृतान्येवतुदर्शयेत् । धर्मार्थकामकार्याणि कृतेमन्त्रोन भिद्यते ॥ गिरिपृष्ठमुपारुह्यप्रासादवारहोगत ॥ स्वपथेनि शला केवातत्रमन्त्रोविधीयते ॥ तत्रसाम प्रयोक्तव्य कार्येषुगुणवत्स्वपि । दानलुब्धेपिभेदस्सशङ्कितेष्वपिनिश्चय ॥ जडमूकाधवधिरास्तिर्यग्योनीन्वयोधिकान् । स्त्रीम्लेच्छव्याधितव्यङ्गान्म न्त्रकालेनिषेधयेत् ॥ इतिसम्यक्कृत प्रोक्ताराजनीतिरियमया । यत्त्रिवर्गाविरुद्धस्याद्राजनीतिस्तदुच्यते ॥ इति युक्तिकल्पतरौनीतियुक्ति ॥

मन्त्रपूत । त्रि० मन्त्रेणपवित्रीकृते ॥

मन्त्रपूतात्मा । पु० गरुडे ॥ त्रि० मन्त्रेणपवित्रात्मनि ॥

मन्त्रवित् । पु० चरे ॥ मन्त्र

मवी

वेत्ति । विद० । क्विप् ॥ त्रि० मवज्ञातरि ॥

मववेश्म । न० मवगृहे । चिन्तो द्वसिते ॥

मवशक्ति । स्त्री० राज्ञाशक्ति विशेषे । ज्ञानबले ॥ सन्ध्या दिषड्गुणयथावत्स्थापन ज्ञानबलम वशक्ति । पञ्चाङ्गम वोम वश क्तिरित्यन्ये ॥

मवस्पृक् । त्रि० म वकारणकस्य शंकर्त्तरि ॥

मवित । त्रि० मवेणसस्कृते । अभिम विते ॥

मन्त्री । त्रि० उपदेष्टरि । साधके ॥ पु० मन्त्रजातकर्त्तव्यनिश्चयकर्त्त- रि । धीसचिवे । अमात्ये ॥ कार्य सहाया सचिवाबुद्धिसहायाश्चम न्त्रिण प्रोक्तादूतिभेद । तल्लक्ष णयथा । मन्त्रीभक्त शुचि शू रोऽनुक्ततोबुद्धिमान्त्क्षमी । आन्वी क्षिक्यादिकुशल परिच्छेदीसुदेश ज ॥ विद्यादिगुणसम्पन्ना विप्रा कार्याश्चमन्त्रिण । यथोक्त कालिकापु राणे । मन्त्रिणस्तुनृप कुर्य्याद्विप्रान् विद्याविशारदान् । विशुद्धाश्चकुलीना श्चधर्मार्थकुशलानृजून् ॥ मन्त्रयेत्तै समकालेनाव्यर्थबहुभिश्चरेत् एकैकै नैवकर्त्तव्य मन्त्रस्तुविनिश्चयम् ॥ व्य स्तैश्चैवसमस्तैश्चवान्यस्यव्यपदेशत

मथ

। स्वयबन्त मन्त्रगृहस्थ लब्धारुह्यम न्त्रयेत् ॥ अरण्येनि शलाकीवान- यामिन्याकदाचन । शिशून्शाखामृ गान्पण्डान्शुकान्वैसारिकास्तथा ॥ वर्जयेत्मन्त्रगेहेषुमनुष्यान्कृता स्तथा । दूषणमन्त्रभेदेषुनृपाणायच जायते ॥ नतत्सम्यक्समाधातुद्द चैर्नृपशतैरपीति ॥ अपिचमत्स्यपुरा णे । बहुभिर्मन्त्रयेत्कामराजामन्त्र- पृथक्पृथक् । मन्त्रिणामपिनोकुर्यात् मन्त्रीमन्त्रप्रकाशनम् ॥ नक्वचित्कस्य विश्वासोभवतीहसदानृणाम । नि श्चयश्चसदाम न्त्रेकार्यएकेनसूरिणा । भवेत्तानिश्चयावाप्ति परबुद्ध्युपु- जीवनात् । एकस्यैवमहीभर्त्तुर्भू य कार्योविनिश्चय ॥ इति ॥ म न्त्रोगुप्तभाषणमस्यास्ति । अतइनि. ॥ शद्वा । अवश्यम न्त्रयते । मन्त्रिगु- प्तभाषणे । आवश्यकेणिनि ॥ य ज्ञादिणिन्यन्तोवा ॥

मन्थ । पु० मन्थानदण्डे ॥ दिवाक रे ॥ साक्तवे । द्रवद्रव्ययुक्तेषुसक्तु षु । यथा । सक्तुभि सर्पिषाभ्यक्तै शीतवारिपरिप्लुतै । नात्यच्छोनाति सान्द्रश्चमन्थइत्यभिधीयते ॥ प्रेय- विशेषेयथा । जलेचतुष्पलेशीतेचुस द्रव्य पलच्चिपेत । मृत्पात्रे मन्थयेत् सम्यक्तस्मात्त्रिपलपिवेत् ॥ चुण चूर्णीकृतमन्थयेत् । मृद्नीयात् ॥

नेत्ररोगे । नेत्रमले ॥ मारणे ॥ मथ्यतेऽनेन । मथिहिंसासङ्क्लेशनयो । हलश्चेतिघञ् ॥ मन्थने ॥

मन्थजम् । न० नवनीते ॥

मन्थदण्ड । पु० मन्थाने । मन्थानदण्डे । रई० इ० भा० ॥

मन्थनम् । न० विलोडने ॥ कुन्थने ॥ पु० मन्थानदण्डे ॥

मन्थनघटी । स्त्री० दधिमन्थनपात्रे ॥

मन्थनी । स्त्री० गर्गर्याम् । मन्थनपात्रे ॥ मथ्यतेऽस्याम् । मन्थविलोडने । करणेतिल्युट् ॥

मन्थर । पु० कोषे ॥ फले ॥ बाधे ॥ मन्थाने ॥ सूचके मन्दगामिनि । योर्व्वार ॥ कोपे ॥ केशे ॥ न० कुसुम्भम् ॥ त्रि० मन्दे ॥ पृथौ ॥ वक्रे ॥ मन्दगामिनि । जडे ॥ सूचके ॥ नीचे ॥ मन्थतिपादौ । मथि० । बाहुलकादरन् ॥

मन्थरा । स्त्री० कैकेय्यादास्याम् ॥

मन्थरु । पु० कुठेरौ । चामरवाते ॥

मन्थशैल । पु० मन्दराचले ॥

मन्था । स्त्री० मेथिकायाम् ॥

मन्थान । पु० मन्थदण्डे । वैशाखे रई० इ० भा० ॥ आरग्वधे ॥ न० गायत्रीच्छन्द ६ प्रभेदे ॥ यथा । कर्णध्वजानन्दमाधायनिस्वस्य । वर्णैरसैर्यत्तु मन्थानमेतत्तु ॥ यथा । शीतांशुवक्त्रायपाथोजनेत्राय । वन्दस्वनन्दस्यभव्यायपुत्राय ॥ मन्थति । मथि० । बाहुलकादानच् ॥

मन्थानक । पु० तृणभेदे । रहिते । दृढमूले । तृणाङ्घ्रिपे ॥

मन्थिनी । स्त्री० दधिमन्थनपात्रे । गर्गर्याम् । कलस्याम् । मथानी० इ० भा० ॥

मन्द । पु० शनैश्चरे ॥ हस्तिजात्यन्तरे ॥ शीर्षपादे । यमे ॥ प्रलये ॥ त्रि० अतीक्ष्णे । अलसे । शीतके ॥ मूर्खे ॥ स्वैरे ॥ अभाग्ये । भाग्यरहिते ॥ रोगिणि ॥ अल्पे ॥ मदरते ॥ खले ॥ अशुद्धचित्तत्वेनज्ञानाधिकारमप्राप्ते ॥ मन्दते । मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु । पचाद्यच् ॥ न० ईषदर्थे ॥

मन्दग । त्रि० मृदुगामिनि । अशीघ्रगे ॥

मन्दगति । पु० शनौ ॥ त्रि० मन्दगामिनि ॥

मन्दगामी । त्रि० मन्दगमनशीले । मन्थरे ॥ मन्दं गच्छति० तच्छील: । गम्लृ० । सुप्यजातौणिनिस्ताच्छील्ये इति णिनि

मन्दजननी । स्त्री० सूर्यपत्न्याम् । शनिमातरि । छायायाम् । तपत्याम् ॥

मन्दट । पु० पारिभद्रवृक्षे ॥

मन्दता । स्त्री० आलस्ये । मन्दत्वे ॥

मन्दनम् । न० स्तोत्रे ॥ मन्दते । मदि । कृपृवृजिमन्दीत्यादिनाक्यु ॥

मन्दप्रज्ञ । त्रि० जडबुद्धौ ॥ मन्दाज्ञाप्रज्ञाधीर्यस्य सः ॥

मन्दभाग्य । त्रि० विघ्नाकुले ॥

मन्दभू । पुं० मन्दभूमौ ॥

मन्दर । पु० मन्थशैले ॥ मन्दारपादपे ॥ स्वर्गे ॥ हारभेदे ॥ मेरोर्द्व्यर्थप्राच्यादिशि तस्य पश्चाशत्सहस्रोच्छ्रायेविष्कम्भशैले ॥ तच्च योजनसहस्रोन्नतिमान् क्षुद्रपादपोस्ति । सुराङ्गनाक्रीडाप्रधानोहि मन्दरः । न० वर्णवृत्तान्तरे ॥ छन्दसिभोयदि । मन्दरमस्ति ॥ शङ्करशङ्कर । वैरिभयङ्कर ॥ त्रि० बहुले ॥ मन्दे ॥

मन्दिरहरिण । पु० जम्बुद्वीपोपद्वीपविशेषे ॥

मन्दसान । पु० अग्नौ ॥ जीवे ॥ निद्रायाम् ॥ मन्दते । मदि० । च्छ्रितविमन्दिसहिभ्य किदित्यसानच् ॥ वेदभाष्ययौगिकार्थएवपुरस्कृत ॥

मन्दा । स्त्री० सङ्क्रान्तिविशेषे ॥ अजादित्वाट्टाप् ॥

मन्दाकम् । न० स्तवने ॥

मन्दाकिनी । स्त्री० वियद्गङ्गायाम् । स्वर्णदाम् । सुरदीर्घिकायाम् ॥ प्रधानधारायास्वर्गेसाचमन्दाकिनीस्मृता । योजनायुतविस्तीर्णाप्रस्थेनयोजनास्मृता ॥ क्षीरतुल्यजलाश्च्छदत्युत्तुङ्गतरङ्गिणी । वैकुण्ठाद्ब्रह्मलोकश्चततः स्वर्गं समागता ॥ सङ्क्रान्तिविशेषे ॥ यथा । बुधेमेषसङ्क्रे तुमन्दाकिनीसानृपाणान्तुसौख्यं भवेत्तत्रमासे ॥ जगतीच्छन्द १२ प्रभेदे ॥ ननररघटितातुमन्दाकिनी । यथा । बलिदमनविधौबभौसङ्गता० यद्जलरुहियस्यमन्दाकिनी सुरनिहितसिताम्बुजस्रङ्निभाहरतुजगद्घ सपीताम्बरः ॥ मन्दमकम् । त्रि० तच्छीलः । वक्रकुटिलायागतौ । सुप्रीतिणिनि । ङीप् ॥

मन्दाक्रान्ता । स्त्री० अत्यष्टिच्छन्द १७ प्रभेदे ॥ मन्दाक्रान्ताम्बुधिरसनगैर्मोभनौतौगयुग्मम । यथा । प्रेमालापे प्रियवितरणे प्रोषितालिङ्गनाद्ये मन्दाक्रान्तातदनुनियतवश्यता मेतिबाला । एवंशिक्षावचनसुधया-राधिकाया सखीनाप्रीत पायात् स्मितसुवदनोदेवकीनन्दनोन ॥

मन्दाक्षम् । न० लज्जायाम् ॥ मन्दमक्षवागाद्यत्र ॥

मन्दाग्नि । पु० अर्कनिष्कासनाथाग्निविशेषे ॥ कफद्वारात्यजठरानले ॥ तल्यनिदानादियथा । मन्दस्तीक्ष्णोथ विषम समश्चेतिचतुर्विधः । कफपित्तानिलाधिक्यात्तत्साम्याज्जाठरोऽनल ॥ विषमोवातजान्रोगांस्तीक्ष्ण पित्तसमुद्भवान् करो

त्यग्निस्तथा मन्दीविकारान्कफसम्भवान् ॥ समासमाग्ने रशितामात्रा सम्यग्विपच्यते । अल्पापि नैव मन्दाग्ने र्विषमाग्ने स्तु देहिनः ॥ कदाचित्पच्यते सम्यक् कदाचिन्न च पच्यते ॥ इति ॥ तस्यौषधं यथा । चित्रकस्याष्टभागानि शूरणस्य च षोडश । शुण्ठ्याश्चत्वारि भागानि मरिचानां द्वयं तथा ॥ पिप्पलीपिप्पलीमूलविडङ्गानां चतुष्टयम् । अष्टौ मूषलि भागाश्च त्रिफलायाश्चतुष्टयम् ॥ द्विगुणेन गुडे नैषां मोदकानि हि कारयेत् । तद्भक्षणमजीर्णं हि पाण्डुरोगञ्च कामलाम् ॥ अतिशोणितमन्दाग्निप्लीहादींश्च निवारयेत् । इ० ॥

मन्दायु । त्रि० अल्पायुषि ॥

मन्दार । पुं० सुरद्रुमविशेषे । पारिभद्रे । निम्बतरौ । बकायन० इ० भा० ॥ अर्कपर्णे । आक० इ० भा० ॥ मन्दते० मोदयति । मदिस्तुत्यादौ । अञ्जिमदिमन्दिभ्य आरन् ॥ मन्दाभरायस्य ॥ यद्वा ॥ मन्दा आराधा रा अस्य सरलत्वात ॥ मन्दमृच्छति वा ऋ गतौ ॥ कर्मण्यण् ॥ मन्दानियर्त्ति । अण् । मन्दै र्य्यते वा । घञ् ॥ तीर्थविशेषे ॥

मन्दारु । पु० पारिजाते ॥ मन्दते । मदि० । बाहुलकादारु ॥

मन्दिकुक्कुर । पु० मत्स्यविशेषे ॥

मन्दिर । पुं० मकरावासे । समुद्रे ॥ जानुपश्चाद्भागे ॥ न० नगरे ॥ अगारे । निशान्ते । वस्त्ये । सद्मनि ॥ देवतागृहे ॥ मन्दते० मन्द्यते० सुप्यतेऽत्र वा । मदि० । इषिमदिमुदी तिकिरच् ॥

मन्दिरपशु । पु० बिडाले ॥

मन्दिरा । स्त्री० मन्दिरे ॥ अजादित्वाट्टाप् ॥

मन्दुरा । स्त्री० वाजिशालायाम् ॥ शयनीयार्थवस्तुनि । मादरी० इ० भा० ॥ मन्दतेऽत्र । मदिस्तुत्यादौ । मन्दिवाशीत्युरच् ॥

मन्देह । पु० राक्षसविशेषाणाम् सज्ञायाम् ॥ यथा । सन्ध्याकाले तु सम्प्राप्ते रौद्रे परमदारुणे । मन्देहा राक्षसा घोराः सूर्यमिच्छन्ति खादितुम् ॥ प्रजापतिकृतः शापस्तेषां मैत्रेय रक्षसाम् ॥ अक्षयत्वं शरीराणां मरणञ्च दिने दिने ॥ ततः सूर्यस्य तैर्युद्धं भवत्यत्यन्तदारुणम् । ततो द्विजोत्तमास्तोयं प्रक्षिपन्ति महामुने ॥ ओङ्कारब्रह्मसंयुक्तं गायत्र्याभिमन्त्रितम् । तेन दह्यन्ति ते पापा वज्रीभूतेन वारिणा इत्यादि विष्णुपुराणे द्रष्टव्यम् ॥

मन्दोदरी । स्त्री० रावणस्य पत्न्याम् । मयासुरस्य पुत्र्याम् ॥

मन्दोदरीश । पु० रावणे ॥ मन्दो

ईर्ष्या 'ईश' ॥

मन्दोदरीसुत । पु० इन्द्रजिति ॥

मन्दोष्णम् । न० ईषदुष्णे ॥ मन्दञ्च तदुष्णञ्च ॥ त्रि० तद्वति ॥

मन्द्र । पुं० गम्भीरध्वनौ ॥ मेघादि-शब्दे ॥ मन्दते । मदि० । स्फायि तञ्चीतिरक् । वाद्यविशेषे । मृदङ्गके ॥ त्रि० गम्भीरध्वनिवति ॥

मन्मथ । पु० कामदेवे । कुसुमायुधे ॥ कपित्थे ॥ मननमत् ० चेतना । मन० । सम्पदादित्वात् क्विप् । गमादीनाम्मावितिनलोप । हृस्वस्येतितुक् । मथतीतिमथ । मथि० । अच । मतोज्ञानस्यमथ मन्मथ ॥ मनोमथ्नातिवा । पृषोदरादि । मिथुनलग्ने ॥ वत्सरविशेषे । ७९॥ सरोग वतथादैविदाहज्वरसमन्वितम् । अभिभूत जगत्सर्वंमन्मथेसुरपूजिते ॥

मन्मथानन्द । पु० महाराजचूते ॥

मन्मथालय । पु० आम्रे ॥

मन्मन । पु० गद्गदध्वनौ ॥ न० दम्पत्यो शनैर्भाषणे ।। सुरतेकर्णमूलेषुयश्चदेशीयभाषया । दम्पत्योर्जल्पित मन्दमन्मनतद्विदुर्बुधा ॥

मन्मनस्क । त्रि० मन्मनसि ॥ मय्येवमन सङ्कल्पात्मकं यस्य ॥

मन्मय । त्रि० मदेकचित्ते ॥ मापरमात्मान तत्पदार्थं त्व पदार्थाभेदे-नसाक्षात्करणशीले ॥

मन्या । स्त्री० ग्रीवाया पश्चाद्भागे० स्थितायांशिरायाम् ॥ गलपार्श्वशिरायाम् ॥ मन्यतेऽनया । संज्ञाया समजेतिक्यप् ॥

मन्याका । स्त्री० मन्यायाम् ॥

मन्यु । पु० क्रुधि ॥ दैन्ये ॥ शोके ॥ यज्ञे ॥ मन्यते । मनज्ञाने । यजिमनिशुन्धिदसिजनिभ्योयुच् ॥ मृगय्यादिर्वा ॥

मन्ये । अ० वितर्के ॥

मन्वन्तरम् । न० दिव्यानायुगानामेकसप्ततौ । किञ्चिदधिकैकसप्ततियुगात्मकेमनो कालविशेषे ॥ एवचतुर्युगाख्यानासाधिकाह्येकसप्तति । कृतत्रेतादियुक्तानामनोरन्तरमुच्यते ॥ मनव स्वायम्भुवादयस्तेषामन्तरमवकाश स्थितिरितियावत् ॥ एकसप्ततिरित्यमरोक्ति । अत्रयद्यपिगणनया० चतुर्युगैनाधिकासङ्ख्यासम्पद्यते० । यत ० दैविकानायुगानान्तुसहस्रब्रह्मणोदिनम् । मन्वन्तर तथैवैक तस्यभागाश्चतुर्दश॥ तत् किञ्चिदधिकादिव्ययुगानामेकसप्ततिरिति० नामविधानेसर्वज्ञनारायणेनोक्तत्वात् । तथापि० अल्पत्वादिह-तथानोक्तमितिबोध्यम् । मन्वन्तर-स्यसङ्ख्यातवर्षाणियथा । त्रि श-

न्तोव्यस्तुवर्णाणामानुषेणद्विजोत्त-मा । सप्तर्षिस्तथान्यांनियुता न्यधिकानितु ॥ विंशतिस्तुसहस्रा-णिकालोय साधिकाविना । मन्व न्तरस्यसंङ्ख्येषालिङ्गेऽस्मिन्क-थितादिजा ॥ यथाङ्का ॥ ३०६७२०००० । एवं चतुर्द्दशमन्व न्तरैर्ब्रह्मदिनं भवति ॥ ब्रह्मणोदिन मध्ये चतुर्द्दशमन्वन्तराणिभवन्ति- । एकोमनुर्यावद्धिकारीभवतिस कालोमन्वन्तरसंज्ञकोभवति । तत्र मनूनानामानि यथा । स्वायम्भुवो मनु पूर्वस्तत स्वारोचिषोमनु । उत्तमस्तामसश्चैवरैवतश्चाक्षुषस्त था ॥ षडेते मनवोऽतीताश्चथ वैवस्वतोमनु । सावर्णा पञ्चरौ च्यश्चभौत्यश्चागामिनस्त्वमी ॥ पुरा णलक्षणं ॥ मन्वन्तर मनुर्देवामनु पुत्रा सुरेश्वर । ऋषयोंऽशाव तारश्चहरे षड्विधमुच्यते ॥

मन्वादि । स्त्री० मासविशेषेषुतिथि विशेषे ॥ अश्वयुक्शुक्लनवमी० कार्त्तिकीद्वादशीसिता । तृतीया चैत्रमासस्य० तथाभाद्रपदस्यच ॥ श्रावणस्याष्टमीकृष्णा पौषस्यैकाद शीतथा । आषाढस्यापिदशमी मा घमासस्यसप्तमी ॥ कार्त्तिकीफा ल्गुनीचैत्री ज्येष्ठोपञ्चदशीसिता । माघमासेकुहूश्चैवकार्त्तिकीचतथै व च ॥ एतामन्वादय प्रोक्तादत्त स्याक्षयकारिका ॥

मपष्ट । पु० )

मपष्टक । पु० ) वनमुद्गे ॥

मपुष्टक । पु० )

मम । अ० षष्ठ्यन्तकप्रतिरूपकमव्यय म् । ममेत्यभिमाने ॥

ममता । स्त्री० मदीयत्वाभिमाने ॥ भावेतल् ॥ ममत्वे ॥

ममतायुक्त । त्रि० कृपणे ॥

ममत्वम् । न० ममतायाम् ॥ भावे त्व ॥

ममापताल । पु० विषये ॥ मव्य ति । मव्यबन्धने । मव्यतेर्यलोपो मश्चापतुट्चालञ्चतिमव्यतेरालप्र त्ययस्तस्यापतुट्० आगमोधातोर्यलो पोमकारश्चान्त्यस्य ॥

मय । पु० दैत्यानांशिल्पिनि । मा याविनाशिल्पिनाञ्चाचार्ये ॥ वेसरे । अश्वतरे ॥ उष्ट्रे । करभे ॥ मीनाति० मयते वा । मीङ्हिंसा याम्० मयगतौवा । पचाद्यच् ॥

मयट । पु० तृणहर्म्ये । तृणयुक्त हर्म्ये ॥

मया स्त्री० चिकित्सायाम् ॥

मयु । पु० किन्नरे ॥ मृगे ॥ मिनो ति । डुमिञ्प्रक्षेपणे । भृमृशीङ् चरित्सरितनिधनिमिमस्जिभ्यउ कृत्यु । मीनातीत्यात्वन्तुबाहुल कात् ॥

मयुराज । पुं० कुवेरे ॥ मयूनाराजा टच् ॥

मयुष्टक । पुं० वनमुद्गे । मकुष्टके । मौठ०कृ०भा० ॥ तिष्ठति । ष्ठा० । क्कुन् । मयुस्थासौष्टकश्च । पूर्वपदादितिषत्वम् ॥

मयूख । पु० किरणे । मौख०कृ०भा० ॥ ज्वालायाम् ॥ शोभायाम् ॥ दीप्तौ ॥ मिमीते । माङ्माने । माङऊखोमयर्च स्यूखप्रत्ययोमयादेशश्च ॥

मयूर पु । वर्हिणे । नीलकण्ठे । शिखावले । केकिनि । मोर०कृ०भा० ॥ अस्यमांसगुणा । यथा । मयूर श्रोत्रनेत्राग्निमेधावर्णस्वरायुषाम् । हितोवल्योगुरुस्रोष्णोवातघ्न. शुक्रमांसद ॥ हेमन्तकालेशिशिरेवसन्तेसेव्य हिमायूरसुशन्तिमासम् । उष्णो हिवर्हिर्विषभोजने श्रवर्षाशरद्ग्रीष्मसुखं त्वपथ्य ॥ एतन्मांसमेरण्डतैलभृष्टं विषतुल्यम् ॥ वर्हिचूडाख्यौषधौ । खराश्वायाम् । काख्याम् ॥ अपामार्गे ॥ मिनातिरोगम् । मीञ्हिंसायाम् । मिनातेरुरन् ॥ यद्वा । मयते । मयगतौ । खजादित्वादूर ॥ मह्यांरौतिवा । अन्येभ्योपीतिड । पृषोदरादि ॥

मयूरक । पुं० अपामार्गे ॥ मयूरे ॥ मयूरशिखायाम् ॥ न०तुल्याञ्जने ॥

मयूरप्रतिकृति ॥ कन् ॥ मयूरकायतिवासादृश्यात् । कै० । आतद्रूतिक ॥

मयूरग्रीवकम् । न० तुत्थे ॥

मयूरग्रीवा । स्त्री० तुत्थे ॥

मयूरचटक । पुं० गृहकुक्कुटे ॥

मयूरचूडम् । न० स्थौणेयके ॥

मयूरचूडा । स्त्री० मयूरशिखायाम् ॥

मयूरजङ्घ । पु० श्योनाके ॥

मयूरतुत्थम् । न० तुत्थे ॥

मयूरपदकम् । न० स्तनादौनखाघाते ॥

मयूरविदला । स्त्री० अम्बष्ठायाम् ॥

मयूरशिखा । स्त्री० वर्हिचूडायाम् । शिखिन्याम् । शिखावलाप्यत्तुपि ॥ मयूराह्वाशिखाप्रोक्तासहस्राङ्घ्रिर्मरुच्छदा । नीलकण्ठशिखालघ्वीपित्तश्लेष्मातिसारजित् ॥

मयूरका । स्त्री० अम्बष्ठायाम् ॥

मयूरी । स्त्री० मयूरस्त्रीजातौ । मोरणी०कृतिभाषा ॥

मरक । पु० मार्याम् । मारकें । मारी०कृतिभाषाप्रसिद्धे मरणे ॥ तस्यकारणादियथा । यावन्मार्तण्डसूनुर्गविधनुषिभषेमन्मथे वास्तिनार्यांतावद्दुर्भिक्षपीडाभवतिचमरकसभयंयातिलोका । हाहाकारातथोर्वीमनुजभयकरीफेकरावैश्च भौमे शून्यग्रामाभवेयुर्नरपतिरहिताभूरिकङ्कालमाला ॥ वक्रचारी

तिरविजोधरणीसुतोवामूलर्क्षंस्त-
मघरेवतिमैत्रभेषु । क्षयोपभङ्गप
तनानिवसेनिकानासर्वत्रलोकम
रण जलधौतदेश ॥ ( ०*० )
मासास्थीनिसमादायश्मशानाद्गृह
वायसा । श्वाशृगालोथवामध्ये
पुरस्यप्रविशन्तिचेत् ॥ विकिर
न्तिगृहादौचश्मशानसामङ्गीभवेत् ।
चोरेणहन्यतेलोक परचक्रस
मागम ॥ सङ्ग्रामश्चमहाघोरो
दुर्भिक्षमरकंतथा । अङ्गतानि
प्रसूयन्तेतस्यदेशस्यविद्रव ॥ दे
वीमाहात्म्यपाठेनभैरवस्यस्तवेनच
। अचशान्तिर्भवेन्नूनतुलस्याविष्णु
पूजनात् ॥

मरकतम् । न॰ हरिद्वर्णमणिवि
शेषे । गारुत्मते । अश्मगर्भे-
। हरिन्मणौ । पन्ना॰ ह॰ सा
धारणलोकभाषाप्रसिद्धे ॥ अस्य
लक्षणयथा ॥ स्वच्छत्वसच्छायस्नि
ग्धगात्रत्वमार्दवसमेतम् । अव्य
ङ्ग वहुरङ्ग शृ गारीमरकतशुभविभृ
यात् ॥ कुलक्षण यथा । शर्करि
लकिलरूक्षमलिनलघुहीनकान्ति
कल्माषम् । त्रासयुतंविकृताङ्ग
मरकतममरोपिनोपभुञ्जीत ॥ प
रीक्षादिकन्त्वन्यत्रद्रष्टव्यम् ॥ म
रकतरत्नमनेन । तु॰ । अ-
न्येत्वपीतिच ॥

मरकतपत्त्रिका । स्त्री॰ )

मरकतपत्त्री । स्त्री॰ पाच्याम् ॥

मरकम । न॰ मरकतमणौ ॥

मरणम् । न॰ वत्सनाभविषे ॥ प
ञ्चतायाम् । कालधर्मे । दृष्टा
न्ते । निधने । मृत्यौ ॥ मर
णचेच्छयाकामदु खितोपिनवा
ञ्छति । रोगग्रस्तोपिदीनोपिन-
मुमूर्षतिकस्तनेतिभागवतम् ॥ अ-
पिच । मरणन्त्वृषिभि प्रोक्त सर्व
रैमङ्गलास्पदम् । यत्तत्समान
वलयोर्योधयोर्युध्यतो किलेति ॥
अनुष्ठानासमर्थस्यवानप्रस्थस्यजीर्य
त । भृग्वग्निजलसम्पातैर्मरण
मनुविधीयते ॥ न्यायमतेन॰ वि
जातीयात्ममन सयोगध्वंसे ॥
उपात्तानांपूर्वासांनिकायविशिष्टा-
नादेहेन्द्रियमनोबुद्ध्यहङ्कारबुद्धिवेद
नानांपरित्यागे ॥ नत्वात्मनोपि
नाश तस्यकूटत्वात ॥ मरण-
प्राणविच्छेदोनतुनाश सतोम
त । मृङ्प्राणत्यागइत्युक्त स
यनष्ट कथत्यजेत् ॥ मृङोल्युट्
॥ लग्नाष्टमभवने ॥

मरत । पु॰ मरणे ॥ म्रियते।
मृङ्प्राणत्यागे । भृमृदृशियजिप
र्विपच्यमितमिनमिहर्यिभ्योऽतच् ॥

मरन्द । पु॰ )

मरन्दक पु॰ ) मकरन्दे ॥

मरहट्टा । पु॰ मात्रावृत्तप्रभेदे ॥ यथा । यादौकुरुषट्कलमथचतुष्कलश्चानन्दमितोपि॰दशवसुकादश भवतिवशमधिकशुभामवलोपि । विशतिनवसङ्ख्यभणितसुमुख्यनन्दितगुणगणकोटिमरहट्टावृत्तकिल्जयकृत्तेकृतरिपुविनतकरोटि ॥ यथा । अभिमतधनदातासिद्धिविधाताजगदन्तरगतशील॰दुरितद्रुमदाशीविश्वविगाहीकल्पचयकृतखील॰भुवनत्रयवदितहरशिरसिस्थिरवास॰दहहुतवहपापदेहिदुरापवमुहृततिमिरविलास ॥

मराकालो । स्त्री॰ हस्तिकाल्याम् ॥

मराल । पु॰ राजहंसे ॥ कारण्डवे ॥ कज्जले ॥ वारिवाहे ॥ तुरङ्गमे ॥ दाडिमीविपिने ॥ त्रि॰ खले ॥ त्रि॰ मसृणे ॥

मरालक । पु॰ कलहंसे ॥

मरिचम् । न॰ कोलके । कृष्णे । ऊषणे । धर्मपत्तने । कालीमिरच॰ इतिभाषा॰ । मरिचकटुकं तीक्ष्णं दीपनकफवातजित् । उष्णं पित्तहरं रूक्षं श्वासशूलकृमीन्हरेत् ॥ तदार्द्रं मधुरपाकिनात्युष्णं कटुकगुरु । किञ्चित्तीक्ष्णगुणं श्लेष्मप्रसेकिस्यादपित्तलम् ॥ म्रियतेविषमनेन । मृङ्प्राणत्यागे । बाहुलकादिच ॥ कक्कोलि ॥ पु॰ मरुवकवृक्षे ॥

मरिचपत्रक । पु॰ अजकर्णे । सालतरौ प्रभेदे ॥

मरिमा । पु॰ मृत्यौ ॥ म्रियते । मृङ्॰ । जनिमृङ्भ्यामिमनिच् ॥

मरिष्यमाण । त्रि॰ आसन्नमरणे ॥

मरीचम् । न॰ वेल्लजे । मरिचे । कृष्णमरिच॰ इ॰ भा॰ ॥ म्रियतेविषमनेन । मृङ्॰ । बाहुलकादीच ॥

मरीचि । पु॰ ब्रह्मणोज्येष्ठमानसपुत्रे॰ मुनिविशेषे ॥ प्रजापतौ ॥ मरुतामध्ये भगवद्विभूतौ ॥ पु॰ स्त्री॰ चन्द्रसूर्ययोः किरणे । गभस्तौ ॥ षट्त्रसरेणुपरिमाणे॰ इतिवैद्या । म्रियतेतमोऽस्मिन् । मृकणिभ्यामीचि ॥ त्रि॰ कृपणे ॥

मरीचिका । स्त्री॰ मृगतृष्णायाम् ॥ ग्रीष्मे मरुदेशसिकतादावर्ककरा प्रतिफलिता दूरस्थानाजलत्व नाभाति॰ तद्वाचिकामृगतृष्णिकेति॰ टीकाकार ॥ मरीचिरिव । इवेप्रतिकृतावितिकन् ॥

मरीचिप । पु॰ तपोविशेषाल्लब्धेतिसत्त्वे तापसान्तरे ॥ चद्रिकापायिनि ॥

मरु । पु॰ गिरौ । पर्वते ॥ धन्वनि । दुर्भिरके । निरुदकदेशे । मारवाड॰ इ॰ भाषा ॥ गुर्जरात्पूर्वभागेतुवारिकातोहिदक्षिणे । म

रुदेशीमहिशाभिवश्वीत्पत्तिपरायण ।। भ्रियन्तेप्राणिनोऽत्र । मृङ्० । भस्मशीत्य ' ॥ मरुवकवत्ती ॥ सूर्य वंशीयभाविनृपविशेषे ॥
मरुक । पु० मृगविशेषे ॥ मयूरे ॥
मरुकान्तारम् । न० रामबाणेनशोषि तेदेशविशेषे ॥ चाफ्रिका० इ० इ ङ्ग्लभा० ॥
मरुज । पु० नखीनामगन्धद्रव्ये व्याघ्रनखाख्ये ॥ त्रि० मरुदेशजा ते ॥
मरुजा । स्त्री० मृगेर्वारौ ॥
मरुटा । स्त्री० )
मरुण्डा । स्त्री० )उच्चललाटायामस्त्रि याम् ॥
मरुत् । पु० समीरे । वायौ ॥ म्रियते ऽनेन० इर्द्देन० विनावा । मृङ्० । मृग्रोरुति ॥ देवे । सुरे ॥ सप्तस प्तकेगणे ॥ मरुवके । न० ग्रन्थिप र्णे ॥ स्त्री० पृक्कायाम् ॥ मरुदग्नि प्रदोहृद्यस्तित्तोष्णा पित्तलोलघु । वृश्चिकादिविषश्लेष्मवातकुष्ठक्रमि प्रशुत् ॥
मरुत । पु० वायौ ॥ अव्युत्पन्नोयम् । मरुत स्पर्शन प्राणाइतिविक्र मादित्यादिकोषात् । कोयवातिस दाक्षिणात्यमरुतइतिकविराज ॥ घण्टापाटलिवृक्षे ॥
मरुत्कर । पु० राजमाषे ॥
मरुत्त । त्रि० वायुविशिष्टे । मरुत सन्त्यत्र । तप्पर्वमरुद्भ्यामितितप् ॥ चन्द्रवंशीयनृपविशेषे ॥
मरुत्तक । पु० मरुवके ॥
मरुत्पथ । पु० आकाशे ॥
मरुत्पुत्र । पु० हनुमति ॥ भीमसेने ॥ मरुत वायो पुत्र ॥
मरुत्प्लव । पु० कण्ठीरवे । सिंहे ॥
मरुत्फलम् । न० घनोपले ॥
मरुत्वान् । पु० इन्द्र । शचीपतौ ॥ मरुतोदेवता सन्त्यस्य । मतुप् । झयइतिवत्वम् । तसौमत्वर्थइतिभ त्वाज्जश्त्वाभाव ॥
मरुत्वतीयम् । न० मरुत्वत्ये हविषि ॥ मरुत्वान्देवतास्य । द्यावापृथिवीशु नासीरमरुत्वदग्नीषोमवास्तोष्पति गृहमेधाच्छचेति० छ० ॥
मरुत्वत्यम् । न० मरुत्वतीये० हविषि ॥ मरुत्वान्देवतास्य । द्यावापृथिवी त्यत्रस्यचकारात्०यत् ॥
मरुत्सख । पु० इन्द्रे ॥ अग्नौ ॥
मरुदान्दोल । पु० धवित्रे ॥
मरुदिष्ट । पु० गुग्गुलौ ॥
मरुद्गण । पु० आवहप्रवाहादिवायु समूहे ॥
मरुद्रुमम् । न० वाततूले । ग्रीष्मह्रा से । बुढियाकोसूत० इ० भा० ॥
मरुद्भवा । स्त्री० ताम्रमूलाक्षुपे । खि राइ इ० गौ० दे० भा० ॥

मरुद्रथ । पुं॰ अश्वे । देवरथे ॥

मरुद्द्रुम । पुं॰ विट्खदिरे । अरिमेदे ॥

मरुद्वर्त्म । न॰ आकाशे ॥

मरुद्वाह । पुं॰ धूमे ॥ वह्नौ ॥

मरुद्विप । पुं॰ उष्ट्रे ॥

मरुन्माला । स्त्री॰ पृक्कायाम् ॥ मरुद्भिर्म्रियते । मलधारणे । घञ् ॥

मरुप्रिय । पुं॰ उष्ट्रे ॥ मरुदेशविशेष प्रियोऽस्य ॥

मरुभू । स्त्री॰ दशेरकेमारवाड॰-इ॰ प्र॰ ॥ निर्जलदेशे ॥

मरुभूरुह । पुं॰ करीरवृक्षे ॥

मरुल । पुं॰ कारण्डवपक्षिणि ॥

मरुला । स्त्री॰ केरलदेशप्रसिद्धायां नद्याम् ॥

मरुव । पुं॰ मरुवके ॥

मरुवक । पुं॰ समीरणे । प्रस्थपुष्पे । फणिज्झके मरवा॰ इ॰ भा॰ प्र॰पुष्पे ॥ पिण्डीतके । श्वसने । करहाटके । मदनद्रुमे । मयनफल इ॰ भाषा ॥ मरु वाति । वा॰ । क ॥ नृसिंह्यसम्भयो ॥ व्याघ्रे ॥ राहौ ॥ खरपत्रे । नागदौना॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ क्षुपविशेषे ॥ त्रि॰ भयानके ॥

मरुसम्भवम् । न॰ चाणक्यमूलके ॥

मरुसम्भवा । स्त्री॰ महेन्द्रवारुण्याम् ॥ क्षुद्रदुरालभायाम् ॥

मरुस्था । स्त्री॰ क्षुद्रदुरालभायाम् ॥

मरूक । पुं॰ मृगविशेषे ॥ मयूरे ॥ मर्त्ये ॥ मारयति॰ म्रियतेवा । मृङ्॰ । मृकणिभ्यामूकोकणाविति उक ॥

मरूद्भवा । स्त्री॰ कार्पास्याम् ॥ यवासे । क्षुद्रखदिरे ॥

मरोलि । पुं॰ मकरे । असिदंष्ट्रके । मगर॰ इ॰ भा॰ प्र॰ यादसि ॥

मरोलिक । पुं॰ मकरे ॥

मर्क । पुं॰ देहे । शरीरे ॥ वानरे ॥ वायौ ॥ मर्चति॰ मर्चयतिवा । मर्चिं सौत्रोधातुरितिवक्ष्य । मर्चशब्दे॰ चौरादिकइति॰ सिद्धौ न्यात्सूत्रेकैयट । इणभीकापाशल्यतिमर्चिभ्य कन् । नचैवणिलो पस्थानिवद्भावात्॰ कुत्वनस्यादितिवाच्यम्॰ पूर्वत्रासिद्धे तदभावात् ॥

मर्कक । पुं॰ गलेगण्डखगे । हाडगिल॰ इ॰ गौ॰ दे॰ भा॰ ॥

मर्कट । पुं॰ वानरे ॥ लूतायाम् ॥ ऊर्णनाभे ॥ खीकरवानरे ॥ गलेगण्डे । हाडगिल॰ इ॰ भा॰ प्र॰ खगे ॥ मर्कति । मर्क सौत्रोधातुर्गत्यर्थः । शकादिभ्योऽटन् ॥ स्थावरविषभेदे ॥

मर्कटक । पुं॰ शस्यप्रभेदे ॥ वानरे ॥ लूतायाम् ॥ मत्स्यविशेषे ॥ दैत्यवि

शेषि ॥ सज्ञायांकन् ॥
मर्कटतिन्दुक । पु० कुपीली ।
मर्कटपिप्पली । स्त्री० अपामार्गे ॥
मर्कटप्रिय । पु० क्षीरवृक्षे ॥
मर्कटवास । पु० आशावर्त्ते ॥ लूतातन्तौ । मकडीकाजाल० हू० भा० ॥
मर्कटशीर्षम् । न० हिङ्गुले ॥
मर्कटास्यम् । न० ताम्रे ॥ वानरमुखे ॥ पु० म्लेच्छविशेषे ॥ त्रि० वानरमुखसदृशमुखविशिष्टे ॥
मर्कटी । स्त्री० करञ्जप्रभेदे । मकडाकरेंजुवा० हू० भा० ॥ शूकशिम्ब्याम् ॥ मर्कटीवविविधचेष्टाहेतुत्वात् । अजमोदायाम् ॥ अपामार्गे ॥ वानर्याम् ॥ गौरादित्वान्ङीष् ॥
मर्कटेन्दु । पु० काकतिन्दुके ॥
मर्कर । पु० भृङ्गराजे ॥
मर्करा । स्त्री० निष्फलायाम् ॥ दर्व्याम् ॥ सुरङ्गायाम् ॥ भाण्डे ॥
मर्क्कू । पु० धावके । रजके ॥ पीठमर्दे । स्त्री० शुद्धौ । मार्ष्टि । मृजूशुद्धौ । मृजेर्गुणश्चेत्यू ॥ मार्जनवा ॥
मर्त्त । पु० मर्त्यलोके ॥ मानुषे ॥ म्रियतेऽत्र । मृङ्० । हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन्निति तन् ॥
मर्त्य । पु० मनुष्ये ॥ म्रियते । मृङ्० । हसिमृग्रिणितितन् । तत स्वार्थेयत् । प्राक्प्रवेशात्० सर्वोहिमर्त्य ॥ मध्यलोके ॥ म्रियन्तेऽत्रेतिमर्त्य । हसिमृग्रिणि० मृङ्धातोस्तन्० मर्त्त । ततोनवसूरमर्त्तयविष्टेभ्य स्वार्थेयत् ॥ मर्त्ते भवोवा । दिगादेराकृतिगणत्वाद्यत् ॥
मर्त्यमुख । पु० यक्षे ॥
मर्त्या । स्त्री० मानुषस्त्रियाम् ॥
मर्त्येन्द्रा । स्त्री० मातरि ॥ अग्निदमन्याम् ॥ राजमातरि ॥
मर्द्दनम् । न० अङ्गसमर्द्दने । पादमर्द्दनादौ । सवाहने ॥ मृदक्षोदे । ल्युट् । वदने ॥ चूर्णने० । त्रि० मर्दयितरि ॥ मर्दयति । मृदक्षोदे० मृदमर्दनेवा । हेतुमण्णिजन्तात्कर्त्तरिल्युट् । बहुलमन्यत्रापीतियुक्त्वा ॥
मर्द्दल । पु० वाद्यप्रभेदे ॥ मर्दलो मादल इति० नेपालिख्यातो० मृदङ्गसजातीय ॥ मर्दमुपमर्दलाति० ला० । आतइतिक ॥
मर्द्दित । त्रि० चूर्णिते ॥ ग्रन्थिते ॥
मर्द्दिता । त्रि० मर्द्दिनि ॥
मर्द्दी । त्रि० मर्द्दितरि ॥
मर्म्मकील । पु० भर्त्तरि ॥
मर्म्मज्ञ । त्रि० मर्मविदि । तत्त्वज्ञे ॥
मर्म्म । न० स्वरूपे । तत्त्वे ॥ यथा ।

मृगयानविगीयतैन्द्रपैरपिधर्म्मागम मर्म्मपारगे । स्मरसुन्दरमायद्यमस्तवधर्म्म सद्योदयोज्ज्वला ॥ सन्धिस्थाने ॥ जीवस्थाने ॥ परक्लेशगाचरलीनवाचलीतकस्यचित् । मनवसीत्सूतकेचनकवैमर्म्मणिस्पृशेत् ॥ अरुषि ॥

मर्म्मर । पु० वस्त्रविशेषे ॥ शुष्कपर्णध्वनौ ॥ वस्त्रपर्णानास्वनिते । मरमरमरडमरड० इतिवभाषा ॥ मर्म्मराति । रा० क ॥ अनुकरणशब्दोवा ॥

मर्म्मरी । स्त्री० पीतदारुणि ॥

मर्म्मरीक । त्रि० दीनजने ॥ म्रियते । मृङ्० । पर्फरीकादित्वादीकन्०धातोर्ह्रस्वंरुक्चाभ्यासस्य ॥

मर्म्मवित् । पु० मर्म्मज्ञे । कार्पटिकि ॥

मर्म्मवेदी । पु० मर्म्मविदि ॥

मर्म्मस्पृक् । त्रि० मर्म्मपीडके । अरुन्तुदे ॥ मर्म्मस्पृशति। स्पृशउपतापे । स्पृशोऽनुदकइति० क्विन् ॥

मर्म्माविध्० द् । त्रि० सन्धिस्थानवेधककर्त्तरि ॥ मर्म्मज्ञे ॥ मर्म्माणिविध्यति । व्यधताडने । क्विप् । ग्रहिज्येतिसम्प्रसारणम् । नहिवृतीतिदीर्घं ॥

मर्म्मिक । त्रि० मर्म्मज्ञे ॥

मर्म्मुर । पु० तुषानले ।

मर्त्य । पुं० मरणधर्म्मणि । मनुष्ये ॥

मर्य्या । अ० सीमायाम् ॥

मर्य्यादा । स्त्री० सीमनि । अवधौ । तेनविनेत्यर्थे ॥ स्थितौ । धारणायाम् । सत्पथस्थितौ ॥ अनुल्लङ्घनीयायाव्यवस्थायाम् ॥ स्थित्यनतिक्रमे ॥ कूलभूमौ ॥ मर्येतिसीमार्थेऽव्ययम् । तन्नदीयते । डुदाञ्० । आतश्चोपसर्गइत्यङ् ॥

मर्ष । पु० क्षान्तौ ॥ मर्षणम् । मृषतितिक्षायाम् ॥ घञ् ॥

मर्षणम् । न० अपराधेसत्यपिकोपानाविष्करणे । क्षमायाम् । मृष० भ०वेल्युट् ॥

मर्षित । त्रि० क्षान्तियुक्ते ॥ मृषेकर्त्तरिक्त । भावेक्तेक्लीबम् ॥

मर्षितवान् । त्रि० क्षान्ते ॥ मृषेकर्त्तरिक्तवतु ॥

मर्षी । त्रि० क्षमाशीले ॥

मल । पु० न० पापे । किल्विषे ॥ विशि । विष्ठायाम् । यथा । मलाशत्तबलपुंसाशुक्रायत्तन्तुजीवनम् । तस्माद्यत्नेनतरक्षेत्यक्ष्मिणोमलरेतसीइति ॥ किट्टे । मण्डूरादौ ॥ स्वेदादौ ॥ वसाशुक्रमसृङ्मज्जामूत्रविट्कर्णविण्नखा । श्लेष्माश्रुदूषिकास्वेदोद्वादशैतेनृणामलाः ॥ वातादिषु ॥ यथा । शरीरदूषणाद्दो

षामलिनीकरणान्मला । धारणा
द्वातवत्तेष्षु वातपित्तकफास्त्रय ॥
सर्वेषामेवरोगाणानिदानकुपिता-
मला । तत्प्रकोपस्यतुप्रोक्त विवि-
धाहितसेवनम् । हरेद्वसन्तेश्लेष्माण
पित्त शरदिनिर्हरेत् वर्षासुशमये
द्वायुप्राग्विकारसमुच्छ्रयात् ॥ अत्र-
विशेषमाहमाधव · कफपित्तानि
ला पूर्वमध्यान्तेषुव्यवस्थिता ।
देहाहोरात्रिवयसासन्धिष्वपिकफा
निलाविति ॥ अस्यार्थ । कफपि-
त्तानिला देहाहोरात्रिवयसापूर्व
मध्यान्तेषुयथासङ्ख्यव्यवस्थिता ।
देहस्य पूर्वभागेशिरआरभ्यवक्षोन्ते-
कफोव्यवस्थित । मध्येआमाशय-
मारभ्यनाभ्यन्ते पित्त व्यवस्थितम् ।
अन्ते नाभ्यधोभागेवायुर्व्यवस्थित
। शिरोमूलत्वात्देहस्येवपूर्वादिक
ल्पना । अह्नस्त्रिधाविभक्तस्यपूर्व-
भागेकफोमध्ये पित्तमन्ते वायु ।
एवरात्रेरपिवयसोपिपूर्वभागेबाल्या
वस्थायाश्लेष्मामध्ये तरुणावस्थाया-
पित्तम्अन्ते वृद्धावस्थायावायु ।
सन्धिष्विति । देहाहोरात्रिवयसा-
मित्येव । तत्रदेहस्यपूर्वभागमध्य
भागयो सन्धौकफोव्यवस्थित म
ध्यभागान्त्यभागयो सन्धौपक्वाश-
याख्योवायु एतच्चयथासङ्ख्यमि
त्यतोलभ्यते । अह्न सन्धौराल्या-

साकमह सन्धि प्रात सन्ध्या
तस्मिन्कफ । अह्नासाकरात्रे
सन्धि सायतस्मिन्वात । वय
सन्धौबाल्यतारुण्ययो सन्धौश्लेष्मा
तारुण्यवृद्धत्वयो सन्धौवायुरिति
॥ मृज्यतेऽसौ । मृजूशुद्धौ । मृजेष्टि
लोपश्चेतिकल ॥ मलयति । मल
तत्करोति । अदन्त । मलतेवा ।
मलधारणे । पचाद्यच् ॥ कर्पूरे ॥
त्रि० कृपणे । कदर्य्ये ॥
मलघ्न । पु० शाल्मलीकन्दे ॥ त्रि०
मलनाशके ॥
मलघ्नी । स्त्री० नागदमन्याम् ॥
मलजम् । न० पूये ॥ त्रि० मलोद्भवे ॥
मलदूषित । त्रि० मलिने ॥ मलेनदू
षित । कर्तृकरणेइतिसमास ॥
मलद्रावी । पु० जयपाले ॥
मलधी । पु० कामिनि ॥
मलन । पु० पटवासे । अशुकालये
॥ न० मर्द्दने । पीडना० मलना०
शु० भा० ॥
मलपूः । स्त्री० काकोदुम्बरिकाया-
म् ॥ मलयूस्तम्भकृत्तिक्ताशीतला
तुवराजयेत् । कफपित्तव्रणश्वित्रकु
ष्ठपाण्डूर्शकामला ॥ मलात्पापा
त् । पुनाति । पूञ्पवने । क्विप् ॥
मलभुक । पु० काके ॥
मलभेदिनी । स्त्री० कटुकायाम् ॥
मलमास । पु० अधिमासे । मलि

ख्युर्घ ॥ यस्मिन्मासेनसङ्क्रान्ति सङ्क्रान्तिद्वयमेववा । मलमास सविज्ञेयोमासस्त्रिंशत्तमोभवेत् ॥ गर्गस्तु । अमावास्याद्वय यत्ररवि सङ्क्रान्तिवर्ज्जितम् । मलमास सविज्ञेयोमास शुद्धाह्युत्तर ॥ तथाचब्रह्मसिद्धान्ते । चान्द्रोमासो-ह्यसङ्क्रान्तोमलमास प्रकीर्त्ति-त ॥ सत्यव्रतस्तु । राशिद्वय यत्र मासेसङ्क्रमेतद्दिवाकर । नाधि मासोभवेदेवमलमासस्तुकेवलम् ॥ एकचमासद्वितय यद्दिस्याद्वर्षेऽधि-कतत्परोऽधिमास : । त्रयोदशस्तु श्रुतिराहमास चतुर्दश क्वापिनचा-स्तिदृष्टम् ॥ अय मासश्चान्द्रएवन-सौर । अतित्रयोदशोमास सच शुद्धानिगद्यते । असौचान्द्रोनसौ र.स्यात्रास्तिसौरत्रयोदश ॥

मलमासत्वम् । न० रविसङ्क्रान्त्य भावविशिष्टचान्द्रमासत्वे ॥

मलय । पु० ऋष्यमूकप्रदेशान्तरे स्वनामप्रसिद्धेऽद्रिविशेषे । आषा ढे । दक्षिणाचले । चन्दनाद्रौ कृतमालाताम्रपर्णी प्रमुखामलयो-द्भवा ॥ शैलाङ्गे ॥ देशविशेषे । मलवार०इ०भा० ॥ आरामे न-न्दनवने ॥ अष्टादशोपद्वीपान्तर्ग-तद्वीपविशेषे ॥ मलते । मलधार-णे । अलिमलितनिभ्य कयन् ॥

ऋषभदेवस्यपत्न्यामपुत्रे ॥

मलयगन्धिनी । स्त्री० उमाया सखी विशेषे ॥

मलयज । पु० राहुग्रहे ॥ पु०न० चन्दने ॥ मलयेजात । सप्तम्याज मेड ॥

मलया । स्त्री० त्रिवृतायामोषधौ ॥

मलयाचल । पु० सह्याद्रिसमीप-स्थे०शैलविशेषे । दक्षिणाचले ॥ सतामसेव्योहिमवान भोगिनाम-लयाचल ॥

मलयानिल । पु० वासन्ते । वसन्त कालिकवायौ ॥

मलयाल । पु० देशविशेषे ॥ यथा । सुराम्बिकांसमारभ्यमलयाद्यन्तग-शिवे । मलयालाभिधोदेशोऽन्नासि द्धिप्रदर्शक . ॥

मलयू । स्त्री० मलयाम् । काकोदु म्बरिकायाम् ॥ मल यवति । युज् गुप्सायाम् । क्विप् । बाहुलका-द्वेष ॥ यद्वा । मलते । मलधा-रणे । बाहुलकाद्य ॥

मलयोद्भवम् । न० चन्दने ॥

मलवर्त्म । न० गुदे ॥

मलविलासिनी । स्त्री०शङ्खपुष्प्या म् ॥

मलहन्ता । पुं० शाल्मलीकन्दे ॥

मला । स्त्री० भूम्यामलक्याम ॥

मलाका । स्त्री० दूत्याम् ॥ कामिन्या

म् ॥ हस्तिन्याम् ॥

मलापकर्षणम् । न० पापमोचने ॥ मलस्यदूरीकरणे ॥

मलापहा । स्त्री० नदीविशेषे ॥ यथा। मलापहाभीमरथीचघट्टगाययथाचक्र्याजलसाम्यगागुणै । मलापहा घट्टगयोस्तथापिपथ्य लघुत्वादुतर - मुक्तान्तिदम् ॥

मलावहम् । न० मलिनीकरणे । पापविशेषे ॥ यथा । कृमिकीटवयोश्च्याभद्यामुगतभोजनम् । फलेध, कुसुमस्तेयमधैर्य्यं चमलावहम् ॥

मलारि । पु० सर्व्वक्षारे । सावन० बू० भा० ॥

मलिनम् । न० दोषे ॥ टङ्कणे । घोले ॥ त्रि० मलयुक्ते वस्तुनि । मलीमसे । कच्चरे । मलदूषिते ॥ यथा । यथाभवतिबालानागगनमलिन मलैः । तथाभवत्यबुद्धानामात्मापिमलिनीमलैरिति ॥ मलैः क्लेशकर्मफलैरात्मा । अन्यच्च लेषैनरजोधूमादिभिराकाशस्त्वथं ॥ नित्यनैमित्तिकक्रियात्यागिनि ॥ कृष्णे ॥ दूषिते ॥ मलोस्यास्ति । ज्योत्स्नातमिस्रेतिसाधु ॥ यथा । मलते । मल० । बहुलमन्यत्रापीतीनच् ।

मलिनमुख । पु० वह्नौ ॥ गोलाङ्गूले० मृगे ॥ प्रेते ॥ त्रि० क्रूरे । खले ॥

मलिनात्मा । पु० कृष्णदेहे ॥ दुष्टचित्ते ॥ नपरिचयोमलिनात्मना प्रधानम् ॥

मलिनाम्बु । न० मस्याम् ॥

मलिनास्य । त्रि० खले ॥

मलिनिमा । पु० कृष्णत्वे ॥ मलिनत्वे ॥ मलिनस्वभाव । इमनिच् ।

मलिनी । स्त्री० रजस्वलायांनार्याम् । ऋतुमत्याम् ॥ मलोऽस्त्यस्या । अतइनिठनौ ।

मलिनीकरणम् । न० मलावहे ॥

मलिम्लुच । पुं० मलमासे ॥ यथा । तमतिक्रम्यतुरविर्य्यदागच्छेत् कथञ्चन । आद्योमलिम्लुचोज्ञेयो द्वितीय प्रकृत स्मृत ॥ यद्वा दर्शान्तमासमतिक्रम्यतत्पूर्वमासान्त्यदर्शान्तराशिस्थ ' सन्सूर्योऽतिवाह्यगच्छेत् मासान्तरे राश्यन्तरसयोग गच्छेत्० तदाद्योऽतिक्रान्तमासोमलिम्लुचोज्ञेय ।मलोसन्म्लोचति० गच्छतीति० मलिम्लुच । द्वितीयस्तुप्रकृत शुभकर्मार्हत्वात् ॥ चौरे ॥ ज्वलने ॥ वाते ॥ मत्स्यते । मल० । बूच् । मलि धृत म्लोचति । म्लुच स्तेये । मूलविभुजादित्वात्क ॥

मलिष्ठा । स्त्री० ऋतुमत्यानार्याम् ॥

मलीमस । पु॰ पुष्पकासीसे ॥ लौहे ॥ मलिने ॥ मलोऽस्यास्ति । ज्योत्स्नातमिस्रेतिसाधुः ॥

मलूक । पु॰ क्रिमिविशेषे ॥

मल्ल । पु॰ पात्रे ॥ कपोले ॥ मत्स्यभेदे ॥ बलीयसि ॥ झल्ल । निच्छिवौ । बाहुयोधिनि॰ मल्लितिनाम्नाप्रसिद्धे ॥ अयश्चव्रात्यात् क्षत्रियात्सवर्णायाजात । यथा ह्मनु । झल्लोमल्लश्चराजन्याद्व्रात्यान्निच्छिविरेवच । नटश्चकरणश्चैव खसोद्रविडएवच ॥ श्रुति ॥ देशविशेषे ॥ यथा । दशार्णानवराष्ट्रञ्चमल्ला शाल्वा युगन्धरा । इति । विराटपर्व्वणि १ अध्याय ॥ वर्णसङ्करजातिविशेषे । माल्ला॰ इ॰ गौ॰ दे॰ भा॰ प्रसिद्धे ॥ अयञ्च॰ लेटात्तीवरकन्यायाजात । इ॰ ब्र॰ वै॰ पु॰ ॥ तन्त्रवाय्याकुन्दकाराज्जात । इ॰ प॰ पु॰ ॥ नियुद्धकुशलोमल्लः स्त्वधृक्सतपरा यण ॥

मल्लक । पु॰ दन्ते ॥ पुं॰ स्त्री॰ दीपाधारे ॥ कौशिकायाम । नारिकेलफलनिर्म्मितेचषके । नरेली॰ इ॰ भा॰ ॥ मल्लते । मल्लधारणे । ण्वुल् ॥

मल्लतूर्य्यम् । न॰ वाद्यविशेषे । मल्ल-स्तम्भे ॥

मल्लनाग । पु॰ ऐरावते ॥ वात्स्यायनमुनौ ॥ कामशास्त्रविशेषे ॥ लेखहारे ॥

मल्लभू । स्त्री॰ मल्लभूमौ ॥

मल्लभूमि । स्त्री॰ रङ्गभूमौ । अखबाटे । अखाडा॰ इ॰ भा॰ ॥ देशविशेषे ॥

मल्लयात्रा । स्त्री॰ माल्लव्याम् । मल्लानायुद्धार्थंप्रयाणे ॥

मल्लयुद्धम् । न॰ नियुद्धे । बाहुयुद्धे । मल्लानासङ्ग्रामे ॥

मल्ला । स्त्री॰ नार्य्याम् ॥ पत्रवल्ल्याम् ॥ मल्लिकायाम् ॥

मल्लार । पु॰ षड्रागाणामध्येद्वितीयरागे ॥ मेघमल्लाररागस्यगानवर्षासुसर्वदा ॥

मल्लारी । स्त्री॰ वसन्तरागस्यरागिण्याम् ॥ यथा । आन्दोलिताचदेशाख्या लोलाप्रथममञ्जरी । मल्लारीचेतिरागिण्योवसन्तस्यसदानुगा ॥ मेघरागस्यरागिण्याम् ।

मल्लि । पु॰ वर्त्तार्हद्विशेषे ॥ स्त्री॰ मल्लिकायाम् ॥ मल्लते । मल्ल॰ । सर्व्वधातुभ्यइन् ॥

मल्लिक । पु॰ मलिनचञ्चुचरणयुक्तेहंसविशेषे । किञ्चिद्धूसरवर्णैश्चञ्चुचरणैरुपलक्षितेहंसप्रभेदे ॥ मल्लते । मल्ल॰ । इन् । स्वार्थेक ॥

मल्लिका । स्त्री॰ तणशून्ये । भूपद्याम् ।

। शतभीरी । वेल्लि० वेला० वेल्ली० इ० प्र० पुष्पवृक्षे ॥ मल्लतिगन्ध० मल्ल्यतेवा । मल्ल० । सर्वधातुभ्यइन् । वाहीष् । स्वार्थेकन् । ह्रस्व । टाप् ॥ मल्लिकोष्णालघुवृष्याति क्ताचकटुकाहरेत् । वातपित्तास्य दृग्व्याधिकुष्ठारुचिविषव्रणान् ॥ मीनविशेषे ॥ मृत्पात्रविशेषे ॥ पानपात्रे ॥ सवैय्यान्तर्गतवृत्तविशेषे ॥ यथा । अशेषगुणाधिकशोभनशोभनसौरभयुद्धविशुद्धयगते•विधेर्हिविधेह्विविवेकनिधेह्विपुरोजगणानिवसत्कलगौस्तुमते । विशोभियशोभिरुपेतितयेतिविनिर्मितमल्लिकयेशरते• निधह्विनिधेह्विमुदह्वदयेसदयेयशवल्लधराधिपते ॥ वर्णवृत्तान्तरे ॥ यथा । हारशङ्कक्रमेणमण्डिताष्टवर्णकेन । वर्धिताकुतूहलेनमल्लिकेपिङ्गलेन ॥ यथा । वेदवेदिवालखिल्यनारदादिसंस्तुताय । अस्तुमेनति सदैवतुभ्यमम्बुजप्रियाय ॥ भूपदीपुष्पे ॥ मल्लिकाया पुष्पम् । पुष्पमूलेषु बहुलमिति• अनुदात्तादेरञोऽणश्चलुप् । लुपियुक्तिवत् ॥ वर्णपात्रे ॥ इ० श० माला ॥

मल्लिकाच । पु० किञ्चिद्धूम्रवर्णैश्चञ्चुचरणैरुपलक्षितेहंसविशेषे ॥ शुक्लवर्णवेष्टितचक्षुर्द्वययुक्ताक्षे ॥ मल्लिकाकारमक्षियस्यशुक्लापाङ्गत्वात् । बह्व्रीहौसक्थ्यक्ष्णोरितिषच् ॥

मल्लिकाख्य । पुं० मल्लिकाख्याभिधेहंसे ॥

मल्लिकाख्या । स्त्री० मोहिन्याम् । चिपुरमालीतिगौडदेशप्रसिद्धेपुष्पे ॥

मल्लिकागन्धम् । न० मल्लिकागुरुणि

मल्लिकापुष्प । पु० कुटजवृक्षे ॥ कवचवृक्षे । करुणालेवु• इ० गौ० दे० भा० ॥ खनामख्यातप्रसिद्धपुष्पवृक्षे ॥

मल्लिगन्धि । न० मल्लिकागुरुणि ॥ मल्लिकापुष्पस्येवगन्धोयस्य । उपमानाच्चेति• इत् ॥

मल्लिपत्रम् । न० छत्राके ॥

मल्ली । स्त्री० मल्लिकायाम् ॥

मल्लीकर । त्रि० चौरे ॥

मल्लु । पु० भालूकी ॥

मवित । त्रि० बद्धे ॥

मशक । पु० कीटविशेषे । वशतुण्डे । सूच्यास्ये । रात्रिजागरदे । मच्छर• इतिभाषा ॥ तन्नाशकधूपोयथा । त्रिफलार्जुनपुष्पाणिभल्लातकशिरीषकम् । लाक्षासर्जरसश्चैवविडङ्गश्चैवगुग्गुलु एतैर्धूपैर्मक्षिकाणामशकानांविनाशनम् ॥ क्षुद्ररोगविशेषे । मशा० इ० भा० प्रसिद्धे ॥ यथा । अवेदनस्थिरंचैवयस्यगात्रेप्रदृश्यते । माषवत्कृष्णमुत्सन्नं मलिनमशकंदिशेत् ॥ स्थिर

म०मचलम् ॥ अश्वचिकित्सायथा । चर्मकीलजतुमणिमशकास्तिलका लकान् । उत्कृत्यशस्त्रेणदहेत्तु चा राग्निभ्यामशेषत ॥ अपिच । ल शुनानान्तुचूर्णं स्वर्णमशकनाशन ॥ इति ॥

मशकी । पु० उदुम्बरवृक्षे ॥

मशहरी । स्त्री० चतुष्क्याम् । शयन तिरस्करिण्याम् ॥

मशुन । पु० कुक्कुरे ॥

मसनम् । न० सोमराजीवृक्षे ॥

मसरा । स्त्री० मसूरे ॥

मसार । ) पु० इन्द्रनील
मसारक । ) पु०मणौ ॥

मसि । स्त्री० लिपिप्रयोजनायाम् । पत्राञ्जने । मस्याम् ॥ मस्यति । मसीपरिणामे । इन् ॥ शेफालिका वृक्षे ॥

मसिकूपी । ) स्त्री० मस्या-
मसिधानम् । ) न० धा-
मसीधाना । ) स्त्री० रे ।
मसिकूपिकायाम्

मसिनम् । न० सपिण्डके ॥

मसिपथ्य । पु० लेखके ॥

मसिप्रसू । स्त्री० मस्याधारे ॥ मस्या प्रसू ॥ लेखन्याम् ॥

मसिमणि । पु० मस्याधारे ॥

मसिवर्द्धनम् । न० रसगन्धे ॥

मसी । स्त्री० मेलायाम् । लिपिसाधन विशेषे । काली० इ०गौ०भा० । स्याही० इ० भाषा० ॥ शेफालिका वृक्षे । मस्यति । मसी० । पचाद्यच् । गौरादित्वान् ङीष् ॥

मसीजलम् । न० मस्याम् ॥

मसीधानम् । न० मस्याधारे ॥

मसीधानी । स्त्री० मस्याधारे ॥

मसीना । स्त्री० स्वनामाख्यातैधान्ये । उमायाम् ॥

मसीश । पु० कायस्थे ॥ मस्याईश ॥

मसुर । पु० मसूरे । मल्लयके ॥ म स्यति० मस्यतेवा । मसी० । मसे श्चुरन् ॥ उपधाणे ॥ मसुरा । स्त्री० वेश्यायाम् ॥ व्रीहिप्रभे दे ॥ टाप् ॥

मसुरी । स्त्री० पापरोगे । मसूर्याम् ॥

मसूर । पु० व्रीहिप्रभेदे । मल्लय-के ॥ मसूरोमधुर पाकेसङ्ग्राही शीतलोलघु । कफपित्तास्रजिद्रू क्षोवातलोज्वरनाशन ॥ मस्यति० मस्यतेवा । मसी० । मसेरूरन्निति पाश्चमिकऊरन् । उपधाने ॥

मसूरक । पु० उपबर्हविशेषे । चातु रे । चक्रगण्डौ । गोलसिर्हा मा०इ०भा० ॥ मसूरे ॥ स्वार्थे क ॥

मसूरविदला । स्त्री० कृष्णात्रिवृतायाम् ॥ मसूरवद्विदलमस्या ॥

मसूरा। स्त्री॰ मसूर०श०॰ प्रसिद्धे व्रीहिभेदे। मसूरव्यके॥ वेश्यायाम्॥ टाप्॥
मसूरिका। स्त्री॰ कुट्टन्याम्॥ मसूरव्यक्ति॥ मसूरीरोगे। शीतलाख्यरोगे॥ मसूराकृतिसस्थाना पिडका स्युर्मसूरिका॥ अतीसारे॥ मशहर्याम्॥ यथोक्तं माधीक्रियायोगसारे। द्रं शायमशकाश्चैवर्षाकालेनिवारयेत्। मसूरिकाभि प्राह्मयमस्य शायिनमुच्युतमिति॥
मसूरी। स्त्री॰ पापरोगे। रक्तवत्याम्। शीतलाख्यरोगे॥ भिद्यति॥ रक्तमितति॥
मसृण। पु॰ सोमे॥ त्रि॰ अकर्कशे। अकठिने॥ स्निग्धे॥ मस्यति। मसी॰ बाहुलकात्॰ऋण.॥ यद्वा। समृणोति। ऋणुगतौ॥ शुशु पर्धेतिक। पृषोदरादि॥
मसृणा। स्त्री॰ उमायाम्। अतस्याम्॥
मस्कर। पु॰ वेणौ। वंशे॥ मस्करोऽनेनवा। मस्कगतौ। बाहुलकादर॥ यद्वा। मङ्कते।मखिमण्डने। अर। आगमशास्त्रस्यानित्यत्वान्नुम्। मस्करमस्करिणौवेणुपरिव्राजकयोरितिसुट्॥ रश्मि श्रे॥
मस्करी। पु॰ परिव्राजके। भिक्षौ। संन्यासिनि॥ मस्कनम्। मस्कगतौ। बाहुलकादर। मस्करोज्ञान मतिर्वाऽस्यास्ति। मस्करमस्करिणावितीनि॥ यद्वा। मस्करोवेणुरस्यास्ति। इनि॥ यद्वा। मा कृत कर्म निषिद्धं शीलमस्य। मस्करमस्करिणावितिसाधु॥ यद्वा। मकुरवत्शुद्धमस्य करणमस्यास्ति। प्राग्वन्निपात॰॥ यद्वा। मङ्कते। मखि॰। बाहुलकादर। आगमशास्त्रस्यानित्यत्वान्नुम्॥ मकरोनिधिभेदोवाऽस्यास्ति। पूर्ववन्निपात॥ चन्द्रे॥
मस्तम्। न॰ मस्तके॥ मस्यतेऽस्मा। मसी॰। क्त॥
मस्तक। पु॰ न॰ उत्तमाङ्गे। शिरसि। मूर्द्धनि। स्वार्थेकम्॥
मस्तकस्नेह। पु॰ शिरोमज्जनि॥
मस्तकाख्य.। पुं॰ शिखरे॥ वृक्षशिरसि॥ मस्तकमित्याख्यायस्य॥
मस्तदारु। न॰ देवदारुणि॥
मस्तमूलकम्। न॰ शिरोधौ॥
मस्तिष्कम्। न॰ गोर्द्दे। मस्तकस्थघृताकारस्नेहे॥ मस्यते॰ मसन वा॰। मसी॰। क्तिन्। मस्ति मस्कते। मस्कगतौ। पचाद्यच्। पृषोदरादि॥
मस्तु। न॰ दधिभवमण्डे। दधिजले। तोड॰ इ॰ भाषा॥ दध्नस्तु परियोभागोघन स्नेहसमन्वित। स वोधीसरइत्यु क्तोदध्नोमण्डस्तुमस्त्विति॥ मस्त्वम्लमद्दरवल्यं लघुभुक्ता-

भिलाषकृत् । स्रोतोविशोधनम्ला दिवफतृष्णानिलापहम् । अत्यग्नीणनशीघ्र भिन्नस्तिमलसङ्ग्रहम्॥ अपिच । उष्णाऽम्ल रुचिपित्तदश्रम हरबल्य कषायसरभुक्तिच्छन्दकरद शोदरगदशोषार्शसानाशनम् । शीत शुचिकरकफानिलहरविष्टम्भ शूलापहम्पाण्डुश्वासविकारगुल्म शमनमस्तुप्रशस्त लघु ॥ मस्यते । मसी० । सितनीतितुन् ॥

मस्तुलुङ्ग । पु० मस्तकस्थघृताकार वस्तुनि । मस्तिष्के ॥

मस्तुलुङ्गक । पु० मस्तिष्के ॥

मह । पु० उत्सवे॥ तेजसि ॥ महिषे ॥ महनम् । महपूजायाम् । घञ् । संज्ञापूर्वकत्वाद्वृद्ध्यभाव । घोत्रा ॥ यद्वा । महति । अच् । यज्ञे ॥

महक । पु० बहुलामोदे । महक०, द्रू० भा० ॥

महत् । न० राज्ये ॥

महान् । पु० ज्ञानक्रियाशक्तिमतिमहत्तत्त्वे । बुद्धितत्त्वे । अध्यवसायलक्षणे ॥ यथा । सविकारात्प्रधानात्तु महत्तत्त्वं प्रजायते । महानिति यतः ख्यातिर्लोकानां जायते सदा ॥ सर्वकार्यापेक्षयाऽधिकत्वात् कारणे० हिरण्यगर्भे । प्रथमजे ॥ दुर्गायाम्॥ महान्व्याप्यस्थिता सर्वं महान्वाप्रकृतिर्मतेति देवीपुराणात् ॥ उष्ट्रे ॥ नवधाभक्तियुक्तश्रीकृष्णभक्ते० शिवशेषधर्मादौ ॥ त्रि० वृद्धे । विशङ्कटे । बृहति । विशाले । बहु । विपुले ॥ उत्कटे ॥ अतिप्रमाणे । अप्रमेये । आपातमधुरसांसारिकसुखनिस्पृहे ॥ यथा । महत्सेवां द्वारमाहुर्विमुक्तेस्तमोद्वारं योषितां सङ्गिसङ्गम् । महान्तस्ते समचित्ताः प्रशान्ता विमन्यवः सुहृदः साधवो ये ॥ महति । मह० । वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्चेति निपातित ॥ मह्यते वा । महच्छब्दप्रयोगनिषेधो यथा । शङ्खे तैले तथा मांसे वैद्ये ज्योतिषिके द्विजे । यात्रायां पथि निद्रायां महच्छब्दो न दीयते ॥ इति ॥ देशादिपरिच्छेदशून्ये सर्वगते परमात्मनि ॥

महती । स्त्री० नारदस्य वल्लक्याम् ॥ शततन्त्रीवीणा महतीति० स्वामी॥ विततायाम् ॥ बृहत्प्रमाणायाम् ॥ बृहत्याम् ॥ वार्त्ताक्याम् ॥ मह्यते । मह० । वर्त्तमाने पृषदिति साधु । गौरादि ॥

महतीद्वादशी । स्त्री० श्रवणद्वादश्याम् । वामनद्वादश्याम् ॥

महत्तत्त्वम् । न० चतुर्विंशतितत्त्वान्तर्गतद्वितीयतत्त्वे । प्रकृतेरुत्पन्ने समष्टिबुद्धिस्वरूपे ॥ तत्पर्यायश्च । म

हाभारते । यथा । महानात्मामति विंष्णुर्जिष्णुः शम्भुश्ववीर्यवान् । बुद्धि प्रज्ञोपलब्धिश्च तथाख्याति धृति स्मृति ॥ पर्यायवाचकै श्ब्दैर्महानात्माविभाव्यते ॥

महत्तर । पु॰ शूद्रविशेषे । ग्रामकूटे । महत्ता॰ द्व॰ भा॰ ॥ द्व॰ चि॰ काण्डशेष ॥

महत्युक्थम् । न॰ बृहतीसहस्राख्य शस्त्रे ॥

महत्त्वम् । न॰ महतोभावे । यथा । महत्त्वषड्विधहेतुरिन्द्रियकरणमतम् । द्व॰ भा॰ प॰ । महत्त्व षड्विधम्रिति । द्रव्यप्रत्यक्षेमहत्त्वसमवायसम्बन्धेनकारणम् । द्रव्यसमवेतानां गुणकर्मसामान्यानांप्रत्यक्षे॰ स्वाश्रयसमवेतसमवायसम्बन्धेनकारणम् । द्व॰ सिद्धान्तमुक्तावली ॥ स्वाध्यस्त सर्वसम्बन्धित्वे ॥ श्रेष्ठतायाम ॥

महत्पुष्पा । स्त्री॰ हस्तिघोषायाम् ॥

महद्ब्रह्म । न॰ अव्याकृते॰ प्रकृतौ॰ त्रिगुणात्मिकायांमायायाम् ॥ सर्वकार्यापेक्षयाधिकत्वात्कारणमहत्॰ सर्वकार्याणांवृद्धिहेतुत्वरूपात्॰ बृहत्त्वाद्वा॰ ब्रह्मणत्वाद्वा॰ ब्रह्मच भवत्यव्याकृतम् ॥ महच्चतद्ब्रह्मचेतिविग्रह ॥

महद्भूतम् । न॰ परमात्मनि ॥ महत् ब्रह्मविद्योत्कर्षेणवर्तमानत्वात॰भूतपरमार्थसत्यम् । महच्चतद्भूतञ्च ॥

महनीय । त्रि॰ पूजनीये ।

महर्घ्यता । स्त्री॰ अधिकमूल्यत्वे ॥

महर्द्धि । स्त्री॰ समृद्धौ । ऋद्धेराधिक्ये ॥

महर्लोक पु॰ भूरादिसप्तलोकान्तर्गतचतुर्थलोके ॥ चतुर्मुखदिनस्यान्तेजगदेतच्चराचरम् । तदादिदह्यतेसर्वंत्रैलोक्यभर्भुवादिकम् । जनस्यायान्तितापार्तामहर्लोकनिवासिनः ॥ चतुर्थेतुमहर्लोकेतिष्ठन्तिकल्पवासिनः ॥ अपिच । महर्लोकोटियोजनासौमरीच्यादिमुनिव्रज ॥ भूपृष्ठाद्विकोट्यूर्ध्वस्थायोमरीच्यादिमुनिवृन्दस्थानमहर्लोकइत्यर्थ ॥

महर्षभी । स्त्री॰ कपिकच्छ्वाम् ॥

महर्षि । पु॰ व्यासादिषु ॥ भृग्वादिसप्तसु ॥ वेदतदर्थद्रष्टृषु॰ सर्वेषु॰ विद्यासम्प्रदायप्रवर्तकेषु ॥ भृगु मरीचिमत्रिञ्चपुलस्त्य पुलहक्रतुम् । वसिष्ठञ्चमहातेजा सोऽसृजन्मनसासुतान् ॥ सप्तब्रह्माणइत्येते पुराणेनिश्चयङ्गता ॥ महाशाली॰ ऋषिश्च । क्रत्स्नस्यवेदस्यदर्शनात् । । अन्येतुवेदैकदेशदर्शनादृषय ॥

महल्लक । पु॰ अन्त पुररक्षके । सौविदल्ले । कञ्चुकिनि ॥ महतीलाति । ला॰ । क । क ॥

महल्लिक । पुं॰ अन्त पुररक्षके

अस्त पुरस्थायिजने ॥ तल्लक्षण य था । सुप्ताशून्योऽनुपस्थेय ' स्त्री स्वभावोमहल्लिक ॥ इति ॥

मह । न० उत्सवे ॥ तेजसि ॥ मह- नम् ० मह्यतेवा । महपूजायाम् । सर्वधातुभ्योऽसुन् ॥

महसम् । न० ज्ञाने ॥ महति ० मह्य- तेवा । मह० । अत्यविचमितमिन मिरभिलभिनभितपियतिपथिप- निमहिभ्योऽसच् ॥ प्रकारे ॥

महा । स्त्री० गोपवल्लयाम् । पृश्निप- र्णीविशेषे ॥ धेनौ । मह्यतेपूज्यते । मह० । खनोघचेति० घ ॥

महाकच्छ । पु० समुद्रे ॥ प्रचेत- सि । वरुणे ॥ पर्वते ॥ महान्क- च्छोयस्य स । आन्महतइत्यात्व- म् ॥

महाकण्टकिनी । स्त्री० क्षुद्रीभेदे । विश्वसारके । नागफणीथूहर० इ० भा० । फणिमनसा० दुर्गो० दे० भा० ॥

महाकन्द । पु० लशुने ॥ चाणक्य मूलके ॥ मूलके ॥ रक्तलशुने । रा- जपलाण्डौ ॥

महाकपित्थ । पु० बिल्ववृक्षे ॥ म- हाश्चासौकपित्थश्च । आन्महत ॥

महाकपित्थाख्य । पु० बिल्वे ॥

महाकरञ्ज । पु० हस्तिकरञ्जके ॥

महाकर्णिकार । पु० आरग्वधे ॥

महाकान्ता । स्त्री० पृथिव्याम् ॥

महाकाय । पु० वृषाणके । प्रमथ- विशेषे । शिवद्वारपाले ॥ हस्तिकरो रे ॥ त्रि० तद्वति ॥

महाकार्त्तिकी । स्त्री० रोहिणीनक्षत्रयु क्तायाकार्त्तिकपूर्णिमायाम् ॥

महाकाल । पु० महादेवे ॥ प्रमथ- विशेषे । महाभीमे ॥ लताविशेषे । किम्पाके ॥ अखण्डदण्डायमान विष्णुस्वरूपसमये ॥ उज्जयिन्याम- हाकाल शङ्करीतन्नदेवता ॥

महाकाली । स्त्री० परदेवतायाम् ॥ म हाकालपत्न्याम् ॥ जिनानाचतु र्विंशतिशासनदेवतान्तर्गतदेवीवि शेषे ॥

महाकाव्यम् । न० सर्गबन्धे ॥

महाकुमुदा । स्त्री० काश्मर्याम् ॥

महाकुम्भी । स्त्री० कट्फले ॥

महाकुल । त्रि० कुलीने । आर्ये । सभ्ये । सज्जने । साधौ ॥ महच्चत त्कुलञ्चमहाकुलम् । आन्महतइ त्यात्वम् । महाकुलमस्यास्ति । अ च् ॥ महत्कुलमस्येतिविग्रहोवा ॥ न० सत्कुले ॥

महाकुलीन । त्रि० महाकुले ॥ म- हाकुलस्यापत्यम् । कुलात्ख इत्यनुवृत्तौ महाकुलादञ्खञौ वितिपक्षेख ॥

महाकूप । पु० पादावर्त्ते ॥

महाकूल । पु० मत्कुले ॥

महाकोशफला । स्त्री॰ देवदालीलतायाम् ॥

महाकोशल । पु॰ देशविशेषे ॥ यथा । गोकर्णेशात्पूर्वभागेआयावर्त्तात्तुचोत्तरे । तीरभुक्तात्पश्चिमेतुमहापुर्याश्चसर्वत । महाकोशलदेशश्चसूर्यवंशपरायणः ॥

महाकोशातकी । स्त्री॰ हस्तिघोषायाम् । मेनुवा॰ घीयातोरई॰ हू॰ भा॰ प्र॰ शाके ॥ महाकोषातकी स्निग्धासरापित्तानिलापहा ॥

महाक्रतु । पु॰ अश्वमेधे ॥ महांश्चासौक्रतुश्च ॥

महाखर । पु॰ अश्वतरे ॥

महागद । पु॰ ज्वरे ॥

महागन्ध । पु॰ कुटजवृक्षे ॥ अम्बुवेतसे । न॰ हरिचन्दने ॥ महान् गन्धोयस्य॰ यस्मिन्वा ॥ बोले ॥

महागन्धा । स्त्री॰ चामुण्डायादेव्याम ॥ केविकापुष्पे ॥ नागवलायाम् ॥

महागज । पु॰ गजये । वनगवे ॥

महागिरि । पु॰ बौद्धभेदे ॥ वृहत्पर्वते ॥

महागुरु । पु॰ मातरि । पितरि ॥ आचार्ये ॥ यथा । मातापितात्रय्यदातामहान्तोगुरव स्मृता । इति ॥ महांश्चासौगुरुश्च । आत्मनः तद्रूपत्वम् ॥ स्त्रियाः पतिरेवमहागुरुः ॥

महागुल्मा । स्त्री॰ सोमवल्ल्याम् ॥

महागुहा । स्त्री॰ पृश्निपर्ण्याम् ॥

महागोधूम । पु॰ पश्चाद्देशभवगोधूमविशेषे । वडा॰ गोहूं॰ हू॰ भाषा ॥

महाग्रह । पु॰ सूर्ये ॥

महाग्रीव । पु॰ उष्ट्रे ॥ त्रि॰ वृहत् ग्रीवायुक्ते ॥

महाघूर्णा । स्त्री॰ सुरायाम् ॥ महती घूर्णायस्यायस्याः ॥

महाघोर । त्रि॰ अतिशयभयानके ॥

महाघोष । पु॰ अतिघोषणे । महाशब्दे । न॰ हट्टे । आपणे ॥ त्रि॰ उरच्छब्दयुक्ते ॥

महाघोषा । स्त्री॰ कर्कटश्रृङ्ग्याम् ॥ कुन्दरुल्याम् ॥

महाङ्ग । पु॰ उष्ट्रे ॥ महान्त्यङ्गान्यस्य । धनेकमितिबहुव्रीहि ॥ गोक्षुरके ॥ महामूषिके ॥ रक्तचित्रके ॥ त्रि॰ वृहदवयवयुक्ते ॥

महाचञ्चु । पु॰ वृहच्चञ्चुमतिखगे ॥ शाकविशेषे । सुचञ्चुकायाम् । दीर्घपल्याम् । दिव्यगन्धायाम् ॥

महाचण्ड । पु॰ कालभैरवे ॥ त्रि॰ प्रचण्डे ॥

महाचीन । पु॰ देशविशेषे ॥ यथा कैलासनीरसमारभ्यसरयूपरित प

रे । अमरगामहेशानिमहाधीना भिधोभवेत् ॥

महाच्छन्द । पुं० देवताडवृक्षे । वृ हत्पत्रे ॥

महाच्छाय । पुं० वटवृक्षे ॥ त्रि० वृहच्छा यायुक्ते ॥ महतीच्छायाऽस्य ॥

महाच्छिद्रा । स्त्री० महामेदायाम् ॥ त्रि० वृहच्छिद्रयुक्ते ॥

महाज । पुं० वृहच्छागे ॥ त्रि० म- हाकुलोद्भवे । महांश्चासावजश्च ॥ महतोजायतेवा ॥

महाजटा । स्त्री० रुद्रजटायामोषधौ ॥ वृहत्स्वांजटायाम् ॥

महाजन । पुं० सज्जने । साधौ ॥ यथा । वेदाविभिन्ना स्मृतयो विभिन्नानाऽसौमुनिर्यस्यमत नभिन्न म् । धर्मस्यतत्त्वंनिहित गुहाया महाजनोयेनगत . सपन्था ॥ म हाजनोयस्त्वनुक्रोशयुक्त सन्नाहरा जाविवेक । यथा । आ पाप महामोहहतकसवंयाहतस्त्वयाय महाजन । यत . । शान्तेऽनन्त महिम्निनिर्मलचिदानन्दे तरङ्गाव लीनिर्मुक्तेऽमृतसागराम्भसिमना ङ्मग्नोपिनाचामति । नि सारे मृगतृष्णिकार्णवजले श्रान्तोपिमू ढ पिबत्याधावत्यवगाहतेऽभिर मते मज्जत्ययोमज्जतीति ॥ मन्वा दौ । यथा । प्रायेणवेदतदिदंनम हाजनोय देव्याविमोहितमतिर्वत माययालम् । त्र्य्याजडीकृतमति मंधुपुष्पितायांवैतानिकेमहतिक र्मणियुज्यमान . ॥

महाजम्बु । स्त्री० )
महाजम्बू । स्त्री० ) वृहज्जम्ब्वाम् । राजजम्ब्वाम् ॥

महाजव । पुं० शरभे ॥ श्रीकारिणि मृगे ॥ त्रि० अतिशयवेगवति ॥

महाजाति । स्त्री० वासन्त्यामृनतः याम् । माधव्याम् ॥ श्रेष्ठवर्णे ॥

महाजाली । स्त्री० पीतवर्णघोषाया म ॥ राजकोषातक्याम् ॥ जालय ति । जालमाच्छादनि । चु० । पचा द्यच् । गौरादि । महतीचासौ जालीच ॥

महाज्यैष्ठी । स्त्री० नक्षत्रविशेषादिग्र क्तायाज्यैष्ठ्यापूर्णिमायाम् ॥ पश्या चशब्दकल्पद्रुमम् ॥

महाज्योतिष्मती । स्त्री० लताविशेषे । तेजोवत्याम् । वङ्कुरसायाम् । कनकप्रभायाम् । लवणायाम् । वडीमालकांगणी० द्र० भा० ॥

महाज्वाल । पुं० यज्ञवह्नौ ॥ त्रि त्याम् ॥

महाज्वाला । स्त्री० जिनानाविद्याध रीविशेषे ॥ वृहदग्निशिखायाम् ।

महाडीनम् । न० पक्षिणः, सुद्रपत नेनप्रकृष्टावृत्तौ ।

महाढ्य । पु॰ कदम्बे ॥ त्रि॰ अतिशयधनवति ॥

महातपा । पु॰ विष्णौ ॥ महत्सृष्टिविषयतपोज्ञानमस्य । ऐश्वर्यप्रतापोवामहदस्य ॥

महातमप्रभा । स्त्री॰ अतिशयान्धकारमयेनरकविशेषे ॥

महातरु । पु॰ स्नुहीवृक्षे ॥ बृहद्वृक्षे ॥

महातलम् । न॰ पातालप्रभेदे ॥

महातारा । स्त्री॰ जिनानादेवीविशेषे ॥

महाताली । स्त्री॰ यावत्पक्षाम् ॥

महातिक्त । पुं॰ महानिम्बे ॥ त्रि॰ अतिशयतिक्तरसयुक्ते ॥

महातिक्ता । स्त्री॰ यवतिक्तायाम् ॥ पाठायाम् ॥

महातीक्ष्णा । स्त्री॰ भल्लातकवृक्षे ॥ त्रि॰ अतिशयतीक्ष्णे ।

महातुम्बी । स्त्री॰ राजालाब्वाम् ॥

महातेजा । पु॰ अग्नौ ॥ कार्त्तिकेये ॥ विष्णौ ॥ यथा । तेजस्विनोयद्दीयेनतेजसाभास्करादय । तत्तेजोमहदस्येतिमहातेजा बईश्वर ॥ शौर्यशौर्यादिभिर्धर्मैर्महद्भि समलङ्कृत. । इतिवाख्यान्महातेजा अनुपातनईश्वर ॥ न॰ पारदे ॥ त्रि॰ अतिशयतेजस्विनि ॥ महत्प्रकाष्टतेजसि त

न्यलक्षणमस्य ॥

महात्मा । त्रि॰ महामनसि । महाशये ॥ अत्यन्तशुद्धात्म कारणत्वाज्जीवन्मुक्ते ॥ सर्वोत्कृष्टे ॥ रजस्तमोमलरहिताग्न कारणे । शुद्धसत्त्वे । समुत्पन्नसम्यग्दर्शने ॥ साधूनामभयदायके । परमोदारचित्ते ॥ परमकारुणिके ॥ सर्वेश्वरे॰ सर्वज्ञे॰ परमात्मनि ॥ अनुद्रबुद्धौ ॥ महानुपनैकजन्मसुकृते रक्षात दु द्रक्लामाद्यनभिभूत • आत्मा ।• अन्त करणयस्य स ' ॥ महांश्चासावात्माचेतिवा ॥

महात्यय । पु॰ चतुर्थके॰ विषमज्वरे ॥ गम्भीरे ॥ मर्हतिकष्टे ॥

महादण्ड । पु॰ यमदूतप्रभेदे ॥

महादन्त । पुं॰ गजदन्ते । ईशादन्ते ॥ बृहद्दन्तमात्रे ॥ त्रि॰ तद्वति ।

महादानम् । न॰ श्रेष्ठदाने । तुलापुरुषादिषोडशप्रकारे ॥ यथा । आद्यन्तुसर्वदानानातुलापुरुषसञ्ज्ञितम् । । हिरण्यगर्भदानञ्चब्रह्माण्ड तदनन्तरम् ॥ कल्पपादपदानञ्चगोसहस्रन्तुपञ्चमम् हिरण्यकामधेनुश्चहिरण्याश्वस्तथैवच ॥ पञ्चलाङ्गलक तद्वद्धरादानतथैवच । हिरण्याश्वरथस्तद्वत्मह स्तिरथस्तथा ॥ द्वादशविष्णुचक्रञ्चततकल्पलतात्मकम् । सप्तसागरदानञ्च रत्नधेनुस्तथैवच ॥ महाभूतघटस्तथ

तृषोऽस्य परिकीर्त्तित ॥

महादारु । न॰ देवदारुणि ॥

महादाह । पु॰ नरकान्तरे ॥

महादेव । पु॰ शिवे ॥ महांश्चासौ-
देवश्च । आन्महतस्थाश्चम् । म
हान्देवोऽन्त्यादिरूपाक्रीडायस्येतिवा
॥ ब्रह्मादीनासुराणाञ्चमुनीनाब्रह्म
वादिनाम् । तेषाञ्चमहतोदेवोमहा
देव प्रकीर्त्तित ॥ महतीपूजिताविश्वे
मूलप्रकृतिरीश्वरी। तस्यादेव पू
जितश्चमहादेव सचस्मृत ॥ इ॰
ब्र॰ वै॰ पु॰ ॥ सर्वदेवानामहनीय
त्वाच्चमहादेव । तथोक्त स्कन्दपुरा
णे । पूज्यतेयत्सुरै सर्वैर्महांश्चैव
प्रमाणत । धातुर्महेतिपूजायाम
हादेवस्ततस्मृत ॥ स्कादेपि । म
हतामपिदेवनामहमेवमहान्यत ।
नतुमत्तोमहानन्योमहादेवस्ततोह्य
हमिति ॥ कोटयोब्रह्महत्यानामग
म्यागमकोटय । सद्य प्रलयमा-
यान्तिमहादेवेतिकीर्त्तनात् ॥ महा
देवमहादेवमहादेवेतिवादिनम् ।
वत्स गौरिवगौरीशोधावन्तमनुधाव
ति ॥ अन्योक्तमयर्व्वशिरसि । सर्वा
न्भावान्परित्यज्यात्मज्ञानयोगैश्व
र्ये महतिमहीयतेतस्मादुच्यतेमहा-
देवइति । अस्यार्थोविष्णुसहस्रनाम
भाष्यटीकायांद्रष्टव्य ॥

महादेवी । स्त्री॰ दुर्गायाम् ॥ महतो-
ब्रह्मादीनपिदेवयतिसर्गादिभिर्व्यव
हारयति॰ इतिमहादेवी। दिवु॰ ।
अच् । टित्वान्ङीप् ॥ पूज्यतेयासु
रै सर्वैर्महतीचप्रमाणत । धातु
र्महेतिपूजायांमहादेवीतत स्मृते
तिदेवीपुराणम् । सर्वद्रष्टमहादेवी
द्रष्टासाक्षीचसैवहीतिदेवीभागवत
म् । द्रष्टाजीव साक्षी॰ ईश्वर ॰
दृश्यसर्वजगत्॰ इदमयसैवभगवती
भवतीत्यर्थ ॥ राज्ञ्याम् । महिष्या
म् । पट्टदेव्याम् ॥

महादैत्य । पु॰ भौत्यमन्वन्तरीयदै-
त्यविशेषे ॥ उत्कृष्टदैत्ये ॥

महाद्युति । त्रि॰ ईश्वरे ॥ महती-
बाह्याभ्यन्तरव्यापिनीद्युतिश्चैतन्य
लक्षणास्यकामादिपराभवेनस्वहित
साधनोन्मुखे॰ पुरुषर्षभे । महती
द्युतिरस्य ॥

महाद्रिधृक् । पु॰ हरौमहान्तमद्रि-
मन्दरगोवर्द्धनवाऽमृतमथनेगोरक्ष-
णेवाधृतवानितिव्युत्पत्ति फलिता
र्थकथनपरा । वस्तुतस्तुमहाद्रयेधृ
ष्णोति॰ धर्त्तुम्प्रगल्भते । ञिधृ-
षाप्रागल्भ्ये । क्विप् । क्विन्प्रत्यय
स्यकु ॥

महाद्रुम । पु॰ अश्वत्थे ॥ महांश्चा
सौद्रुमश्च ॥ वृहद्वृक्षे ॥

महाद्रोणा । स्त्री॰ देवकुरुम्बायाम् । दि
व्यपुष्पायाम् ॥

महाद्रणी । स्त्री॰ महाद्रोणाक्षुपे ॥

महाद्दनुह । पुं॰ युद्धवादो ॥ अतिकलहे ॥

महाधनम् । न॰ महामूल्ये । बहुमूल्ये वस्तुनि । महर्गी॰ इ॰ भा॰ । सुवर्णे ॥ सिह्लके ॥ चारुवाससि ॥ महद्धनमूल्यमस्य ॥ कृषिकर्म्मणि ॥ त्रि॰ अतिशयधनयुक्ते ॥

महाधातु । पु॰ स्वर्णे ॥

महाध्वग . । पु॰ उष्ट्रे ॥

महानट । पु॰ महादेवे ॥

महानद . । पु॰ नदविशेषे ।

महानदी । स्त्री॰ पुरुषोत्तमक्षेत्रान्तर्गतनदीविशेषे । चित्रोत्पलायाम् ॥ गङ्गायाम् ॥ यथा । अम्बुजमम्बुनिजातजातु नजायतेम्बुजादम्बु । मुरहरतद्विपरीतपदाम्बुजाद्यन्महानदीजाता ॥

महानन्द । पु॰ मुक्तौ ॥ अधिकाह्लादे ।

महानन्दा । स्त्री॰ अमृतायाम् । सुरायाम् ॥ माघशुक्लनवम्याम् ॥ नदीविशेषे । देवीविशेषे । अट्टहासेमहानन्दादेवी ॥

महानन्दि . । पु॰ नन्दिवर्द्धनाख्यराजपुत्रे ॥

महानरक . । पु॰ अतिशयनानाप्रकारयातनास्थाने ॥

महानल पु॰ वृहदग्नौ ॥ देवनले ।

महानवमी । स्त्री॰ आश्विनशुक्लनवम्याम् ॥

महानसम् । न॰ पाकस्थाने । रसवत्याम् ॥ तत्ररक्षणीयजनामाक्ष्येउक्ता । यथा । सूदशास्त्रविधानज्ञाः पराऽभेद्याः कुलोद्गताः । सर्वमहानसेधार्याः कृत्तकेशनखाजनाः ॥ इति ॥ पुल्लिङ्गोप्ययमितिकश्चित् ॥ महच्चतदनश्च । अनोश्मायसरसाजातिसञ्ज्ञयोरितिसंज्ञायाटच ॥

महानसाधिकृत । त्रि॰ पौरोगवे ॥ महानसेऽधिकृत ॥

महानाटकम् । न॰ हनुमन्नाटके ॥ नाटकविशेषे ॥

महानाडी । स्त्री॰ कण्डरायाम् ॥

महानाद । पु॰ कुञ्जरे ॥ वर्षुकाब्दे ॥ महास्वने ॥ ध्वनिराहे । कर्णे ॥ सिंहे ॥ उष्ट्रे ॥ शङ्खे ॥ कोहलायाम् ॥ महान्नादोयस्यस ॥

महानिद्रा । स्त्री॰ मरणे ॥

महानिम्ब । पुं॰ प्रवकेष्टे । पार्वते । वकायन॰ द्रेक॰ डेक॰ इ॰ भाषा । महानिम्बोहिमोरूक्षस्तिक्तोग्राहीकषायकः । कफपित्तकृमिच्छर्दिकुष्ठहृल्लासरक्तजित् ॥ प्रमेहश्वासगुल्मार्शोमूषिकाविषनाशनः ॥

महानिशा । स्त्री॰ निशामध्यभागे । निशीथे ॥ रात्रेर्मध्यस्थप्रहरद्वये ॥

यथा । महानिशातुविज्ञेयामध्यस्थप्रहरद्वयम् । तत्रस्नाननकुर्वीत काम्यनैमित्तिकादृते ॥ स्मृ०त्युक्तमहानिशासार्द्धप्रहरोपरिप्रहरद्वयमितिरघुनन्दन । देवलोक्तामहानिशारात्रिमध्यमदण्डद्वयात्मिकासाद्वितीयप्रहरशेषदण्डतृतीयप्रहरप्रथमदण्डरूपा ॥

महानीच । पु० रजके।अतिशयहीन वर्णे ॥

महानील । पु० भृङ्गराजे । नागविशेषे ॥ सिंहलद्वीपाकरोद्भूते० मणिविशेषे ॥ सिंहलस्याकरोद्भूतामहानीलास्तुतेस्मृताइत्यगस्त्योक्ते । तल्लक्षण यथा । यस्तुवर्णस्यभूयस्त्वात् क्षीरेशतगुणेस्थित । नीलतातनुयात्सर्वंमहानील सउच्यते ॥ इतिगारुडे० ७२ अध्याय ॥

महानीला । स्त्री० महाजम्ब्वाम् ॥

महानीली । स्त्री० नीलापराजितायाम् ॥ वृहन्नील्याम् । श्रीफलिकायाम् । कैशार्हायाम् ॥

महानुभाव । पु० श्रीहरौ ॥ महाशये । सुकृतिनि । महामाहात्म्ये ॥ महान्श्रुताध्ययनतपआचारादिनिबन्धनोऽनुभाव प्रभावोयस्यस ॥

महान्तक । पु० महेन्द्राचलपीठस्थे शिवे । स्त्री० देवीविशेषे ॥ महेन्द्रे चमहान्तका ॥

महापक्ष । पु० बहुपुत्रादिपरिजने ॥

महापञ्चमूलम् । न० वृहत्पञ्चमूले । तद्यथा । बिल्वोग्निमन्थ श्योनाक काश्मर्य पाटलातथा । सर्वैस्तुमिलितैरेतै र्धान्महापञ्चमूलकम् ॥

महापञ्चविषम् । न० वृहद्विषपञ्चके ॥ तद्यथा । शृङ्गीचकालकूटश्चमुस्तको वत्सनाभक । शङ्खकर्णीतियोगोयमहापञ्चविषाभिध ॥

महापञ्चाङ्गुल । पु० स्थूलैरण्डे

महापत्र । पु० शाकवृक्षे ॥ मानके । मानकचू० इ० गौ० दे० भा० प्र० कन्दे ॥ त्रि० वृहत्पर्णयुक्ते ॥ महान्तिपत्राणियस्यस ॥

महापद्मा । स्त्री० महाजम्ब्वाम् ॥

महापथ । पु० प्रधानेऽध्वनि । घण्टापथे । राजवर्त्मनि ॥ आकाशे॥ विस्तीर्णपथि ॥ श्मशाने ॥ महताप न्था ० च ॥

महापथगम : । पु० मरणे ॥

महापद्म । पु० अष्टनागान्तर्गतनागविशेषे । अतिशुक्ले । दशबिन्दुकमस्तके ॥ कुबेरस्यनवनिध्यन्तर्गतनिधिविशेषे ॥ शतकोटिसङ्ख्यायाम् । १०००००००००००० ॥ न० सितपद्मे ॥

महापातकम् । न० ब्रह्महत्यादिषु ॥

यथा । ब्रह्महत्यासुरापानस्तेयगुर्व्व-
ङ्गनागम । महान्तिपातकान्याहु
स्संसर्गश्चापितैः सह ॥ महापात
कजचिह्न सप्तजन्मसु जायते । बाध
तेव्याधिरूपेणतस्यकृच्छ्रादिभि श्च
म ॥ मद्भवतत्पातकञ्च ॥

महापातकी । स्त्री • ब्रह्महत्याद्यन्यतम
पातकयस्ते॥बीरहननाद्यन्यतममहा
पातकयस्ते।। यथा । बीरघातीद्वथा
पायी गोराशाङ्गीगमस्तथा । स्तेयीम
हापातकिनस्तत्संसर्गीचपञ्चम ॥
सचपतित ॥ यथा । महापातकि
नोयेचपतितास्ते प्रकीर्त्तिता । प
तितानानदाह स्यान्नान्त्येष्टिर्ना-
स्थिसञ्चयः । नचाश्रुपात पिण्डो
वाकार्यं श्राद्धादिक क्वचित् ॥ ए
तानिपतितानाम्तुय करोतिविमो
हित । तप्तकृच्छ्रद्वयेनैवतस्यशुद्धि
र्नैचान्यथा ॥ इतिशुद्धितत्त्वधृतवि
ष्णुपुराणवचनम् ॥ महापातकिनो
जीवतएव तस्योदकक्रियावच्यमा
णरोत्याममपिण्डै समानोदकैश्चया
मातृहिर्ग्गत्वाज्ञात्य स्विग्गुरुसन्निधा-
नैरिक्तायांनवम्यातिथौदिनान्तेकर्त्त
व्येत्याहमनु ॥ पतितस्योदकका-
र्य्यसपिण्डैर्बान्धवैर्बहि । निन्दि-
तेऽहनिसायाह्नेज्ञात्य स्विग्गुरुसन्नि
धौ ॥ दासीघटमपापूर्णंपर्य्यस्येत्प्रे
तवत्पदा ॥ अहोरात्रमुपासीरन्नशौ
च बान्धवै सह ॥ निवर्त्तेरंश्चतस्मा
त् सम्भाषणसहासने । दायाद्यस्य
प्रदानञ्चयात्राचैवहिलौकिकी ॥
ज्येष्ठताचनिवर्त्तेतज्येष्ठावाप्यञ्चयद्ध
नम् । ज्येष्ठांशप्राप्नुयाच्चास्ययवीया
न्गुणतोधिक ॥ प्रायश्चित्ते तुच
रितेपूर्णंकुम्भमपानवम् । तेनैवसा
र्द्धं प्रास्ययु स्नात्वापुण्ये जलाशये
॥ सत्वप्सुतघटप्राश्य प्रविश्यभवन
स्वकम् । सर्वाणिज्ञातिकार्याणियथा
पूर्वं समाचरेत् ॥ एतदेव विधिं कुर्या
द्योषित्सुपतितास्वपि । वस्त्रान्नपा
नदेयन्तुवसेयुश्चगृहान्तिके ॥ महा
पातकमस्त्यस्याइनि । इनि ॥
पारिभाषिकमहापातकीयथा ॥ कृ
तप्राणप्रतिष्ठाऽनीचैर्यै प्रतिमाश्रिता
दुर्गानप्रणमेद्यस्तुसमहापातकीस्मृ
त ॥ अपिच पितरमातरभार्य्या
गुरुपत्नीगुरु परम । योनपुष्णातिका
पट्यात्समहापातकीभवे ब्र० वै०
पु० ॥

महापाप्मन् । न० महापातके ॥ अत्यु
त्कटपापे ॥

महापाप्मा । पु० अन्यु घे ॥ कामे ॥
महत पापस्यहेतुत्वात् ॥

महापारेवतम् । न० वृहत्पारेवते ।
द्वीपखर्जूरे ॥

महापाश । पु० यमदूतविशेषे । इ
त्यादि ॥

महापासक । पु० गोर्मिनि । पेलु
कि । बुद्धभिक्षुशिष्य ॥

महापिण्डीतक । पु० कृष्णवर्णमद
नद्रुमे । वाराहे ॥

महापिण्डीतरु । पु० वृक्षविशेषे
। श्वेतपिण्डीतके । अश्वकोषतरी
। अरे । पिण्डीतरो । पेंडिरा०
इ० भा० ।

महापीठम् न० एकपञ्चाशत्पीठे ॥

महापीलु । पु० वृहत्पीलुवृक्षे ।
महाफले । मधुपीलौ ॥

महापुराणम् । न० एकादशलक्षणयुक्ते
व्यासप्रणीतेऽष्टादशसङ्ख्यकपुरा
णविशेषे ॥ तल्लक्षणं यथा । सृष्टि
श्चापिविसृष्टिश्चस्थितिस्तेषाञ्चपाल
नम् । कर्मणांवासनावार्त्तामनूना
ञ्चक्रमेणच । वर्णनं प्रलयानाञ्चमो
क्षस्यचनिरूपणम् । उत्कीर्त्तनं हरे
रेवदेवानाञ्चपृथक् पृथक् ॥ दशा
धिकंलक्षणञ्चमहतापरिकीर्त्तितम्
॥ इतिब्रह्मवैवर्त्ते कृष्णजन्मखण्डे
१३२ अध्याय ॥

महापुरुष । पु० नारायणे । श्रेष्ठ
नरे ॥ लक्षणं वाराह्यां ६७ अ० ॥
ब्रह्मात्माभेदज्ञानिनि० जीवन्मुक्ते
॥ महांश्चासौपुरुषश्च । सन्महदिति
समास । आन्महतइत्यात्वम् ॥

महापुरुषदन्ता । स्त्री० शतमूल्याम् ॥

महापुरुषदन्तिका । स्त्री० महाशता

वर्य्याम् ॥

महापुष्पा । स्त्री० अपराजितायाम् ॥

महापृष्ठ । पु० उष्ट्रे त्रि० वृहत्पृष्ठे ॥

महापौरुषिक । पु० वैकुण्ठनाथा
नुचरे ॥

महाप्रकृति । स्त्री० दुर्गायाम् ॥

महाप्रपञ्च । पु० स्थूलसूक्ष्मकारण
प्रपञ्चानांसमष्टौ ॥ यथाऽवान्तरव
नानांसमष्टिरेकं महद्वनम्० यथाऽवा
न्तरजलाशयानांसमष्टिरेकोमहान्
जलाशयोभवति०तद्वत्स्थूलसूक्ष्म
कारणशरीरप्रपञ्चानामपिसमष्टिरे
कोमहान्प्रपञ्चोभवतीति ॥

महाप्रभ । त्रि० अतिशयदीप्तियु
क्ते ॥

महाप्रभाव । त्रि० अतिशयतेज
शक्तिविशिष्टे ॥

महाप्रभु । पु० जगन्नाथे ॥

महाप्रलय । पु० सर्वसंहारे । एक
कालिकसमस्तजन्यपदार्थनाशे ॥
महांश्चासौप्रलयश्च ॥ न्यायमते ज
न्यभावानधिकरणं कालोमहाप्रल
य • सचचरमध्वंसरूप • ॥

महाप्रसाद । पु० विष्णुनैवेद्यादौ
॥ यथा । पादोदकञ्चनिर्माल्यं नै
वेद्यञ्चविशेषत । महाप्रसादइत्यु
क्त्वाग्राह्यं विष्णो प्रयत्नत ॥ ब्राह्मे
चान्नञ्चमनेयद्ब्रह्मणेऽपि तवस्तुनि । त
न्माहात्म्यं महानिर्वाणतन्त्रे सम्यक्

निरूपितम्

महाप्रस्थानम् । न॰ शास्त्रीयैदेहत्या गविशेषे ॥ महत्॰आवृत्तिशून्यप्र स्थानम्॰सर्पहस्तिकसिंहव्याघ्रादि विषमभूम्याद्यपरिहारेणगमन याव च्छरीरपात तन्महाप्रस्थानम्॰इत्यु च्यते ॥

महाप्राण । पुं॰ द्रोणकाके ॥

महाप्रेत । पु॰ ब्रह्मादिषु ॥ यथा । ब्रह्माविष्णुश्चरुद्रश्चईश्वरश्चसदाशि व ।एतेपञ्चमहाप्रेताभूताधिपतयो मता ॥ चत्वारोमञ्चचरणा'पञ्चम प्रच्छद पट ।सच्चित्प्रकाशरूपेणशि वेनाभिन्नविग्रहा ॥ तत्रासनेसमा सीनानिर्भरानन्दरूपिणीति ॥

महाफल । पु॰ मालूरे । विल्वे ॥ त्रि॰ उत्कृष्टफले॥ न॰ बृहत्फले॥

महाफला । स्त्री॰ इन्द्रवारुण्याम् ॥ राजजम्ब्वाम् ॥ तुम्ब्याम् ॥ महा कोशातक्याम् ॥ मधुबीजपुरे ॥

महाफेना । स्त्री॰ अब्धिफेने । हिण्डी रे ॥

महाबल । पु॰ वायौ ॥ बुद्धे ॥ न॰ सीसके ॥ त्रि॰ बलोत्कटे । बलीय सि ॥ महासामर्थ्ये ॥ महत्प्रकृष्ट बलमस्य ॥

महाबला । स्त्री॰ अतिबलायाम् । पी तपुष्प्याम । पीतबाट्यालके ॥

महाबोधि । पु॰ बुद्धे ॥

महाब्राह्मण । पु॰ निन्दितब्राह्मणे । कट्या॰ अचारज॰ इ॰ भा॰ ॥

महाभद्रा । स्त्री॰ काश्मर्याम् ॥ गङ्गा याम् ॥

महाभट । पु॰ अतिशययोद्धरि ॥

महाभाग । त्रि॰ अतिधन्ये ॥ दयाद्य ष्टगुणयोगोमहाभागता॰ तद्विशिष्टे ॥ महान्भागोभाग्यमस्य ॥ महान् असाधारणोभागऐश्वर्यादिभगसमु दायोयस्यवा ॥

महाभागा ।स्त्री॰ महाजवतीर्थस्थाबा देव्याम् ॥

महाभारतम्।न॰ व्यासप्रणीतेतिहास शास्त्रे ॥ तन्नामकारण यथा । एक तश्चतुरोवेदाभारतश्चैतदेकत । पुराकिलसुरै सर्वै समस्यतुलया धृतम् ॥ चतुर्भ्य सरहस्येभ्योदेवे भ्योभ्यधिकंयदा । तदाप्रभृतिलोके स्मिन्महाभारतमुच्यते ॥ महत्वा द्भारतत्वाच्चमहाभारतमुच्यते ॥

महाभाष्यम् । न॰ पातञ्जलेव्याकरण भाष्ये ॥

महाभिलाष । त्रि॰ महेच्छे ॥ महा नभिलाषोस्य ॥

महाभिष । पु॰ राजर्षिविशेषे । प्रा तीपे । शन्तनौ ॥ यथा । महाभि षोनृपोजात प्रतीपस्यसुतस्तदा । शन्तनुर्नामराजर्षिर्धर्मात्मासत्यसङ्ग रइति ॥

महाभीता। स्त्री॰ लज्जालुवृक्षे ॥ त्रि॰ अतिशयभययुक्ते ॥

महाभीम । पु॰ शान्तनुनृपे ॥ भृङ्गिनामकशिवद्वारपाले ॥ त्रि॰ अतिशयभयानके ॥

महाभीरु । पु॰ कीटविशेषे । गोपालिका॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ ग्वाली॰ इ॰ दे॰ भा॰ ॥ अतिशयभयशीले ॥

महाभीष्म । पु॰ शान्तनुनृपे ॥

महाभूतम्। न॰ व्योमादिपञ्चसु । भूम्यादिपञ्चसु ॥ महाभूतानिपञ्चैव खानिलाग्न्यम्बुभूमय ॥

महाभृङ्ग । पु॰ नीलभृङ्गराजे ॥

महाभैरव । पु॰ शरभरूपिशिवे ॥

महाभोग । त्रि॰ नारायणे ॥ अतिसुखिनि ॥ महान्भोग सुखरूपोऽस्य ॥

महाभोगा। स्त्री॰ दुर्गायाम् । महार्थसाधिनीदेवीमहाभोगाततस्स्मृता॥

महामण्डूक । पु॰ पीतमण्डूके ॥

महामति । त्रि॰ अतिशयबुद्धिविशिष्टे ॥

महामद । पु॰ मत्तगजे ॥ त्रि॰ अतिशयहर्षयुक्ते ॥

महामना । त्रि॰ सदन्त करणे ॥ उत्कटे । महेच्छे । उदारे । महाशये । अक्षुद्रचित्ते ॥ सर्वश्रेष्ठोऽहमितिमन्यमाने ॥ महद्भिर्भीरमन्यैरसममानमन्यमानमनोयस्य ॥ परमेश्वरे ॥ सृष्टिस्थित्यन्तकर्माखिलजगतांमनसैवकरोतीतिमहामना ॥ मनसैवजगत्सृष्टि स हारञ्चकरोतिय इतिविष्णुपुराणम् ॥ मनसैव॰ सङ्कल्पमात्रेणैव ।

महामाघ । पु॰ योगविशेषे ॥ माघीचमघस युक्तामघायाचगुरुर्यदा । महामाघस्तदाप्रोक्तोव्रतोहाहादिवर्ज्जयेत् ॥

महामात्र । पु॰ प्रधाने । अमात्ये । सेनान्यादौ ॥ सम्बद्धे । हस्तिपकाधिपे । हस्तिशिक्षाजीविनि ॥ महतीमात्रापरिच्छेदोऽस्य ॥

महामात्री । स्त्री॰ आचार्यपतन्याम् ॥ महामात्रयोषायाम् ॥

महामानसी । स्त्री॰ जिनाननाविद्यादेवीभेदे ॥

महामाय । पु॰ हरौ ॥ मायाबिनामपिमायाकारित्वात् ॥ महतीप्रकृष्टामायाऽस्य। महामायात्वचमायाविनामपिमयशम्बरप्रभृतीनाविविधप्रपञ्चविभ्रमकारिमायाप्रयोक्तृत्वात् ॥

महामाया । स्त्री॰ दुर्गायाम् ॥ ईश्वरशक्त्याम् ॥ विसदृशप्रतीतिसाधनमाया॰ तस्याश्चमहत्त्वसर्वविषयत्वमितिव्याख्यानात् तस्या स्वरूपयथा । कालिकापुराणे । गर्भान्तर्ज्ञानसम्पन्न प्रेरितसूतिमारुतै

। उत्पन्नज्ञानरहितकुरुतैयानिरन्त
रम् ॥ पूर्वातिपूर्वसम्बन्धसंस्कारेण-
नियोज्यच । आहाराद्योततोमोह
ममत्वज्ञानसंशयम ॥ क्रोधोपरोध
लोभेषुच्छिन्नाच्छिन्नापुनः पुनः । प
श्चात्कामेनसंयोज्यचिन्तायुक्तामहर्नि
शम् ॥ आमोदयुक्तं व्यसनासक्तं ज-
न्तु करोतिया । महामायेतिसाप्रो
क्तातेनसाजगदीश्वरी ॥ इति ।

महामायी । पु० ईश्वरे ॥

महामायी । स्त्री० दुर्गायाम् ।

महामारी । स्त्री० महाकाल्याम् ॥ स्था
वरजङ्गमभूतानामहाजनक्षयकर्यादेव
तायाम् । संहारशक्तौ ॥ महतोमा
रयतीतितथा । महतीचासौमारी
चेतिवा ॥ व्याप्तमेतत्सकलब्रह्मा
ण्डं मनुजेश्वर । महाकाल्यामहा
कालिमहामारीस्वरूपया ॥ सैवका-
लेमहामारीसैवसृष्टिर्भवत्यजा ॥ स्थि
तिकरोभूतानां सैवकालेसनातनी
तिमार्कण्डेयपुराणम् ॥ अतिशय
मारके ॥

महामार्ग । पु० राजमार्गे ॥

महामालिनी । स्त्री० नाराचाभिधेवृ-
त्तविशेषे ॥ यदिहनयुगलततोविरेफै
र्भमहामालिनीतिलक्षणम् ॥

महामाष । पु० राजमाषे । चौरा०
लोबिया० इ० भा० ॥

महामुख । पु० कुम्भीरे म हद
न्मुखे ॥ त्रि० तद्वति ॥

महामुण्डी । स्त्री० महाश्रावणिका-
याम् ॥

महामुनि । पु० नारायणे ॥ अग
स्त्ये ॥ बुद्धे काले ॥ कृपाचार्ये ॥
व्यासे ॥ महांश्चासौमुनिश्च । सन्म
हदितिसमासः । आन्महतइत्या
त्वम् ॥ ब्रह्मविदि ॥ तुम्बुरुद्रुमे ॥
न० कुस्तुम्बुरुणि । धन्याके ॥

महामूर्द्धा पु० शिवे ॥ त्रि० बृहन्मस्त
कयुक्ते ॥

महामूल । पु० राजपलाण्डौ ॥ त्रि
लिङ्गिष्टे ॥

महामूल्य । पु० पद्मरागे ॥ न० म
हार्घे ॥ त्रि० तद्वति ॥

महामूषिक । पु० बृहदुन्दुरौ । महा
खौ ॥

महामृग । पु० हस्तिनि ॥ शरभे ॥

महामृत्युञ्जय । पु० मृत्योर्मृत्युका
रे शिवमन्त्रविशेषे ॥ नित्यमष्टशत
जप्त्वामृत्युमृत्युपथ नयेत् ॥

महामेघ । पु० अतिशयमेघे ॥

महामेद । पु० अष्टवर्गाङ्गौषधभे
पुरोद्भवे । बृहन्मेदे ॥

महामेदा । स्त्री० अष्टवर्गाङ्गौषधविशे
षे । वसुच्छिद्रायाम् । जीवन्याम् ।
पाण्डुरागिण्याम् ॥ महामेदाभिध०
कन्दोमोरङ्गादौप्रजायते । शुक्लार्द्र
कनिभ कन्दोलताजात सुपाण्डुर ।

महामेदाभिध प्रोक्तोदन्यैभावप्र काशके । मेदायुग गुरुस्वादुवृष्य सान्यकफापहम् । हणशीतल पित्तरक्तवातज्वरप्रणुत् ॥ तस्याश्च लाभ वक्ता स्थानेशतावरीदेया॥
महामेघ । पु॰ बुद्धभेदे ॥ ॥
महामोह । पु॰ भोगेच्छारूपाज्ञाने ॥ महामोहस्तुविज्ञेयोग्राम्यभोगसुखैषणा ॥ रागे । विषयविशेषे सदशविध । शब्दादिषुपञ्चसु दिव्यादिव्यतयादशविधेषु विषयेषु रञ्जनीयेषु राग । आसक्तिमहा मोह । सचदशविधविषयस्वा द्दशविध ॥
महामोदी पु॰ शिवप्रिये धस्तूरे ॥ स्त्रि॰ महामोदा ।मिष्टे ॥
महाम्बुज । पु॰ नरकान्तरे ॥
महाम्लम् । न॰ तिन्तिडीके । वृक्षाम्ले ॥
महायक्ष । पु॰ यक्षदुपासकविशेषे ॥
महायज्ञ । पु॰ अध्यापनादिपञ्चसु ॥ पाठोहोमश्चातिथीनांसपर्यातर्पणंबलि । एतेपञ्चमहायज्ञाब्रह्म यज्ञादिनामका ॥ अध्यापनंब्रह्म यज्ञ पितृयज्ञस्तुतर्पणम् । होमो दैवोबलिर्भौतोनृयज्ञोऽतिथिपूज नम् ॥ अहुतञ्चहुतञ्चैवतथाप्रहुत मेवच । ब्राह्म्यंहुत प्राशितञ्चप ञ्चयज्ञान्प्रचक्षते ॥ जपोहुतो हुतोहोम प्रहुतोभौतिकोबलि । ब्राह्म्यंहुतद्विजाग्र्यार्चाप्राशितं पितृतर्पणम् ॥ पञ्चैतान्योमहायज्ञा न्नहापयतिशक्तित । सगृहेऽपिव सन्नित्यंसूनादोषैर्नलिप्यते ॥ दे वताऽतिथिभृत्यानांपितॄणामात्म नश्चय । ननिर्वपतिपञ्चानामु च्छ्वसन्नसजीवति ॥ अपिच । एते पञ्चमहायज्ञाब्रह्मणानिर्मितापुरा । ब्राह्मणानांहितार्थायइतरेषाच तन्मुखा ॥इतरेषाचवर्णानांब्राह्मणै कारिता शुभाः॥एवकृत्वानरो भुक्त्वाऽन्नंश्वरि…विशुद्ध्यति । अन्य थाब्रीहयोमेतेएकंशूद्रस्वपि ॥ मन्तव्यादात्मभोक्तृणामहामांसतुल ह्यवेन् ॥ इ॰ वराहपुराणे ॥
महायशा । पु॰ भूतादिविशेषे ॥ न॰ कल्पभेदे ॥ त्रि॰ लोकेवेदेच प्रसिद्धविभवे ॥ अतिशययशोयुक्ते ॥
महायशस्क । त्रि॰ अतिशययुक्ते ॥
महायोगी । पु॰ अद्रिकूटपीठस्थे शिवे ॥
महारजतम् । न॰ स्वर्णे । धुस्तूरे ॥ वृहद्रौप्ये ॥ महच्चतद्रजतंच । स न्महदितिसमास । आन्महतद्र स्यात्वम् ॥
महारजनम् । न॰ कुसुम्भे । कसू भा॰ इ॰ भा॰ ॥ शातकुम्भे । स्वर्णे ॥ रज्यतेऽनेन । रञ्जरागे ।

ल्युट्। रजकरजनरञ्जनरजस्सु प
सङ्ख्यानान्नलोप.॥ रञ्जे क्युन्
वा॥ महच्चतद्रजनं च। सन्महदिति
समासः।

महारण्यम्। न॰ अरण्यान्याम्॥ मह
च्चतदरण्यञ्च। सन्महत्परमोत्तमो
त्कृष्टाः पूज्यमानैरितिसमासः।
आन्महतइत्यात्वम्॥

महारत्नम्। न॰ मुक्तादिनवसु॥ मु-
क्ताफलं हीरकञ्चैव वैदूर्यं पद्मरागकम्।
पुष्परागञ्च गोमेदं नीलं गारुत्मतं त-
था॥ प्रवालयुक्तान्युक्तानि महार-
त्नानि वै नव॥

महारथ। पु॰ रथिकविशेषे। अयु
तधन्विभिः सहयोद्धरि॥ यथा।
एकोदशसहस्राणि योधयेद्यस्तु धन्वि
नाम्। शस्त्रशास्त्रप्रवीणश्च महा
रथइति स्मृतः॥ अपि च। आत्मा
नं सारथिञ्चाश्वान् रक्षन् युद्ध्येत
योनरः। समहारथसंज्ञः स्यादि
त्याहुर्नीतिकोविदाः। शिवे॥ वि
ष्णौ। महान् महात्मा॰ नन्दी॰ गरु
डोवारथोयस्य सः॥

महारम्भम्। न॰ गड्डलवणे। साभ
र॰ इ॰ भा॰॥

महारस। पु॰ खर्जूरे॥ कोशका-
रे। वृक्षविशेषे। कौसियार॰ इ॰
भा॰॥ कशेरुणि॥ पारदे। रसे
न्द्रे॥ न॰ काञ्जिके॥

महारसाष्टकम्। न॰ हिङ्गुलाद्यष्ट
सु॥ यथा। दरदपारद सस्यवै
क्रान्तकान्तमभ्रकम्। माक्षिकवि
मलश्चेतिस्युरेतेऽष्टौमहारसाः॥

महाराज। पु॰ बुद्धभेदे। मञ्जुघो-
षे॥ असपत्नराज्यइति। नृप-
श्रेष्ठे॥

महाराजचूत। पु॰ उत्तमाम्रे। म
न्मथानन्दे॥

महाराजद्रुम। पु॰ आरग्वधे

महाराजिक। पु॰ गणदेवताविशे-
षे॥ सत्यसुधन्यसवनाद्योविंश-
त्यधिकशतद्वयसङ्ख्यातागौरवा-
द्युदर्शिता। महाराजिकनामानो
द्विशतेविंशतिस्तथा॥ महतीराजि
पङ्क्तिर्येषामितिविग्रहेऽशआदिभा-
षेतिकन्॥

महारात्रि। स्त्री॰ महाष्टम्याम्।
अर्द्धरात्रात्परं मुहूर्त्तद्वये॥ ब्रह्म
लयोपलक्षितायां महाप्रलयरात्रा-
म्॥ ब्रह्मणस्तु निपाते च महाकल्पो
भवेन्नृप। प्रकीर्त्तिता महारात्रि
साएव च पुरातनैरिति ब्र॰ वै॰ पु॰।

महाराष्ट्र। पु॰ देशविशेषे॥ चिप-
लूकसमारभ्य मध्ये चोज्जयिनीशिवे।
मार्जारतीर्थराजेन्द्रकोलापुरनिवा-
सिनी॥ तावद्देशो महाराष्ट्रः क-
र्णाटस्वामिगोचरः। इ॰ शक्तिसङ्ग
मे ७ पटल॥ अपि च। नैऋतेदू

विडानस्तमहाराष्ट्रास्वरैवत । जवन पह्लव सिन्धु पारसीकाद योमता ॥ इ॰ज्योतिषतत्त्वे कूर्मचक्र ॥

महाराष्ट्री । स्त्री॰ जलपिप्पल्याम ॥ शाकविशेषे । मरैठी॰इ॰भा॰ ॥ भाषाप्रभेदे ।

महारिष्ट । पुं॰ महानिम्बे । गिरिनिम्बे ।

महारुद्र । पु॰ महादेवे ।

महारूप । पु॰ शिवे

महारूपकम् । न॰ नाटके ॥

महारोग । पुं॰ पापरोगे ॥ सचाष्टविधोयथा । उन्माद १ । त्वग्दोष २ । राजयक्ष्मा ३ । श्वास ४ । मधुमेह ५ । भगन्दर ६ । उदर ७ । अश्मरी ८ । इति ॥

महारोगी । त्रि॰ महारोगयुक्ते ॥

महारौरव । पु॰ नरकान्तरे ॥ महारौरवसञ्ज्ञन्तुअधोर्द्ध्वं तामसम्पुटम् । धम्यतेखदिराङ्गारैर्गुरुदारापनायक ॥ देवद्रव्यापहारीचपच्यतेकालमचयम् ॥ महानरौद्रोरवोऽत्र । अकान्त्वादित्वाद्दलोप । यथा । रुरुर्भारग्रुङ्गाक्योमृग । महतोरुरौरयम् । अण् ॥

महार्घ । पु॰ लावकाख्यखगे ॥ त्रि॰ महामूल्ये ॥

महार्णव । पु॰ महासमुद्रे ॥

महार्थ । पुं॰ परमार्थे ॥

महार्ह । पु॰ हंसविशेषे । महाआ इ॰ गौ॰ दे॰ भा॰ ॥

महार्द्रम् । न॰ चन्दने ॥

महार्द्रकम् । न॰ वनार्द्रके ॥

महार्बुदम् । न॰ दशार्बुदे । शतकोटि १०००००००००० सङ्ख्यायाम् । अब्जे ॥

महार्ह । पु॰ जिष्णौ ॥ मह पूजां तामर्हति । अर्हइतिसूत्रात्त्वर्हते कर्मण्युपपदेअच्प्रत्यय ॥ न॰ श्वेतचन्दने ॥

महालक्ष्मी । नारायणशक्त्याम् । राधायाम् ॥ यन्माययामोहिताश्चब्रह्मविष्णुशिवादय । वैष्णवास्ता महालक्ष्मींपराराधावदन्तिते ॥ यद्वांशामहालक्ष्मी प्रियानारायणस्यचेति ब्र॰ वै॰ पुराणम् ॥

महालय । पु॰ विहारे ॥ तीर्थमहाभागादेव्याश्चैव ॥ परमात्मनि ॥ पितृणामुत्सवाश्रयेकन्यागतापरपक्षे कन्यागत॰ इ॰ भा॰ ॥

महालसा । स्त्री॰ देवीविशेषे ॥ दक्षिणदेशे॰ महादिस्थानमितिविख्याते॰ देवीस्थाने ॥

महालिकटभी । स्त्री॰ श्वेतकिणही वृक्षे ॥

महालीलसरस्वती । स्त्री॰ तारादेव्या प्रभेदे ॥ लीलयावाक्प्रदाचेतितेन

लीलसरस्वती ॥
महालोध्र । पु॰ लोध्रे । पटियालो ध॰ दू॰ भा॰ ॥
महालोल । पु॰ काके ॥ चि॰ अतिचञ्चले ॥
महालोहम् । न॰ अयस्कान्ते ॥
महावनम् । न॰ महारण्ये ॥ वृन्दावनस्यचतुरशीतिवनान्तर्गतवनविशेषे ।
महावप । पु॰ महामेदे ॥
महावरा । स्त्री॰ दूर्वायाम् ॥
महावराह । पु॰ आदिवराहे ॥ महांश्चासौवराहश्च । महत्त्वञ्चास्यातिविपुलशरीरधारणातपृथिव्युद्धरणाय ॥
महावरोह । पु॰ प्लक्षवृक्षे ॥
महावलि । पु॰ नरवलौ ॥
महावल्ली । स्त्री॰ माधवीलतायाम् ।
महावस । पु॰ शिशुमारे ॥
महावाक्यम् । न॰ परमार्थबोधकेवेदिकोपदेशवाक्यविशेषे । सद्रूपापरपर्यायेप्रतिष्ठाद्यावुत्सर्गवाक्ये ॥ योग्यताकांक्षासन्नियुक्तिवाक्यसमूहे ॥
महावारुणी । स्त्री॰ तिथिविशेषे । सायथा । शनिवारसमायुक्तासामहावारुणीस्मृता । गङ्गायांयदिलभ्येतकोटिसूर्यग्रहैः समा ॥ सा॰ वारुणीत्यर्थः ॥ महामहावारुणी तु । यथा । शुभयोगसमायुक्ताशनौ शतभिषायदि । महामहेतिविख्याता साचेत्कोटिकुलमुद्धरेत् ।
महावार्त्त । पु॰ स्कन्दे ॥ शौरामे ॥
महावीर्यात्माद्भुतस्य । अस्यवाशीर्मेत्वच्चोक्ता युद्धकाण्डे । पिशाचान्दानवान्यक्षान्पृथिव्यांचैवराक्षसान् अङ्गुल्यग्रेणतान्हन्यामिच्छन्हरिगणेश्वरेति ॥
महाविद्या । स्त्री॰ देवताविशेषे ॥ यथा । कालीतारामहाविद्याषोडशी भुवनेश्वरी । भैरवीछिन्नमस्ताचविद्याधूमावतीतथा । वगलासिद्धविद्याचमातङ्गीकमलात्मिका । एता दशमहाविद्या सिद्धविद्या प्रकीर्त्तिता ॥ तासांदशावतारत्वं यथा । प्रकृतिर्विष्णुरूपाचपुरुषश्च महेश्वर । एवंप्रकृतिभेदेनभेदास्तुप्रकृतेर्दश । कृष्णरूपाकालिकास्याद्रामरूपाचतारिणी । वगलाकूर्ममूर्तिःस्यान्मीनोधूमावतीभवेत् ॥ छिन्नमस्तानृसिंहः स्याद्वराहश्चैवभैरवी । सुन्दरीयामदग्न्य स्याद्वामनोभुवनेश्वरी ॥ कमलाबौद्धरूपास्याद्दुर्गास्यात्कल्किरूपिणी । स्वयंभगवती कालीकृष्णस्तुभगवान्स्वयम् ॥ स्वयंभगवान्कृष्णः कालीरूपोभवद्वने ॥
महाविराट् । पु॰ महाविष्णौ ॥
महाविलम् । न॰ नभसि हृच्छिद्रे ॥
महाविष । पु॰ द्विमुखसर्पे । काल

सर्पे ॥
महाविषम् । न॰ मेषसङ्क्रान्तौ ॥ मसूर निम्बपात्राभ्यांयोऽत्तिमेषग तेरवौ। अपिरोषान्वितस्तस्यतक्षक. किं करिष्यति ॥
महाविष्णु । पु॰ महाविराजि ॥
महावीचि । पु॰ नरकविशेषे । महावीचियं यमहाकक्षोलेनतुमीय ते ॥
महावीध्यम् । न॰ विटपे । मुष्कव ङ्क्षणयोरन्तरे ॥
महावीरः । पु॰ गरुडे ॥ शूरे ॥ सिंहे ॥ मखानले । यज्ञाग्नौ ॥ वज्रे ॥ श्वेततुरङ्गे । वन्तिमन्ति ने ॥ कोकिले ॥ लक्ष्मणे । हनुम ति ॥ एकवीरवृक्षे ॥ सन्नाभविह गे । जराटके ॥ कामदेवे । मारे ।
महावीरा । स्त्री॰ क्षीरकाकोल्याम् ॥
महावीर्य । पु॰ ब्रह्मणि । महदु त्पत्तिकारणमविद्यालक्षणं वीर्यम स्य ॥ बुद्धभेदे ॥ वाराहीकन्दे ॥ त्रि॰ महाप्रभावे । अतिशयबलयुक्ते ॥
महावीर्या । स्त्री॰ संज्ञायाम् । सूर्य पत्न्याम् ॥ वनकार्पास्याम् ॥ महा शतावर्य्याम् ॥
महावृक्ष । पु॰ स्नुहीद्रुमे ॥
महावृहती । स्त्री॰ वार्ताक्याम् ॥
महावेग । त्रि॰ अधिकवेगवति ॥
महाव्याधि. । पुं॰ कुष्ठादिमहारोगे॥

महाव्रणम् । न॰ दुष्टव्रणे ॥
महाव्रतम । न॰ द्वादशवार्षिकव्रते ॥ यथा । तेनवधकालादूर्ध्वं विंशत्य ऽधिकशतस्त्वयावदवदिष्ट तावत्प रिमाणमहाव्रतानुरूपार्धेनवोदात व्या शरत्कालिकदुर्गापूजने ॥ य- था । महाव्रत महापुण्य शङ्कराद्यै रनुष्ठितम् । कर्त्तव्य सुरराजेन्द्रदे वीभक्तिसमन्विते ॥ अरुणोदय कालिकमाघस्नाने ॥ अस्तिचयोग शास्त्रेऽत्रविशेष । सयथा । अहि सासत्यास्तेयब्रह्मचर्यापरिग्रहाय मा ॥ ३० ॥ एतेजातिदेशकाल समयाऽनवच्छिन्नाः सार्वभौमाम हाव्रतम् ॥ ३१ ॥ येचाहिसाद्या श्चयमाउक्तास्तएवजात्याद्यनवच्छे देन॰दृढभूमयोमहाव्रतशब्दवाच्या तत्रअहिसाजात्यवच्छिन्नायथा॰ मृग योमृगातिरिक्तान्नहनिष्यामीति ॰ सैवकालावच्छिन्नायथा॰ नचतु र्दश्यानपुण्येऽहनीतिसैवप्रयोजन विशेषरूपसमयावच्छिन्नायथा॰ क्ष- त्रियस्यदेवब्राह्मणप्रयोजनव्यतिरे केणनहनिष्यामीति॰युद्ध विनानह निष्यामीतिच । एवविवाहादिप्र योजनव्यतिरेकेणानृत नवदिष्या मीति । एवमापत्कालव्यतिरेकेण सुहृदाद्व्यतिरिक्ता स्तेयनकरि ष्यामीति । एवमृतुकालव्यतिरिक्त

कालिपत्नीं नगमिष्यामीति । एव गुर्वादिप्रयोजनमन्तरे णनपरिग्रही ष्यामीति॰यथायोग्यमवच्छेदोद्रष्ट व्य । एतादृशवच्छेदोपरिहारेण यदासर्वजातिसर्वदेश सर्व्वकाल सर्वप्रयोजनेषुभवा सार्वभौमा अहिंसादयोभवन्तिमहताप्रयत्नेन परिपाल्यमानत्वात्॰तदातेमहाव्र तशब्देनोच्यते । एव काष्ठमौना दिव्रतमपिद्रष्टव्यम् । एतादृशव्रत दार्ढ्येच॰कामक्रोधलोभमोहानाच तुर्णामपिनरकद्वारभूतानांनिवृत्ति। तत्राहिंसमयाक्षमयाचक्रोधस्य॰ब्रह्म- चर्येणवस्तुविचारेणचकामस्य॰अ- स्तेयापरिग्रहरूपेणसन्तोषेणलोभ- स्यसत्येनयथार्थज्ञानरूपेणविवेकि- नमोहस्य॰तन्मूलानाञ्चसर्वेषांनिवृ त्तिरितिद्रष्टव्यम् । इतराणिचफला निसकामानायोगशास्त्रे कथितानि ॥

महाव्रती । पु॰ शिवे ॥ हरस्कते ॥ त्रि॰महाव्रतयुक्ते ॥

महाशक्ति । पु॰ कार्तिकेये ॥ हा- रौ ॥ महतीशक्ति . सामर्थ्यमस्य॥ अतिशयपराक्रमे ॥ स्त्री॰मायाशव- लब्रह्मरूपिण्याम् । निर्गुणायाम् ॥ त्रि॰ तद्युक्ते ॥

महाशङ्ख । पु॰ नरास्थनि । कर्ण नेत्रयोर्मध्यगतास्थ्नि ॥ कर्णनेत्रान्त- रालास्थिमहाशङ्ख प्रकीर्त्ति- त ॥ दशनिखर्वे १००००००००००००० निधिप्रभे दे । अलिके । ललाटे ॥ बृहच्छङ्खे ॥ याज्ञायोगान्तरे । यथा । स्त्री लग्ने लाभगेशुक्रे चिषष्ठे देवपूजिते । महाशङ्खाख्ययोयोग प्रतिप- न्नापमानद ॥

महाशठ । पु॰ राजधत्तूरे ॥ त्रि॰अ तिधूर्त्ते ।

महाशणपुष्पिका । स्त्री॰ वृहच्छणपु- ष्प्याम् । वृत्तपर्ण्याम् । श्वेतपुष्पा याम् ॥

महाशता । स्त्री॰ महाशतावर्याम् ॥

महाशतावरी । स्त्री॰ सहस्रवीयाया- म् । सुरसायाम् । शतवीर्यायाम् ॥ मह.शतावरीमेध्याहृद्यावृष्यारसाय नी । शीतवीर्यानिहन्त्यर्शोग्रहणी- नयनामयान् ॥

महाशन । पु॰ विष्णौ ॥ कल्पा- न्ते सर्वग्रसनात्महत्अशनमस्य । पर्यं- मस्य । महाभैरवे । कामे ॥ मह- दशनविषयजात यस्य स । अ ह्या- सुरे । त्रि॰अतिभक्षणशीले ।

महाशफर । पु॰ पफसाख्यमत्स्ये ॥ महाशफरसञ्ज्ञस्तुतिक्त पित्तकफा पह । शिशिरोमधुरोरुच्योवात- साधारण स्मृत ॥

महाशय । त्रि॰ श्रेष्ठे ॥ महान्- आशयोयस्य ॥ पु॰समुद्रे ॥

महाशय्या। स्त्री॰ राजतल्पे। वृह-
त्खट्वायाम्॥

महाशर। पु॰ स्थूलशरे॥

महाशल्क। पु॰ चिङ्गटमत्स्ये॥

महाशाक। पु॰ शाकवृक्षे॥

महाशाखा। स्त्री॰ नागबलायाम्॥

महाशाल। पु॰ महागृहस्थे। विस्ती
र्णाभिः शाखाभिर्युक्ते। सम्पन्ने॥
महतीविस्तीर्णाशाला॰गृहंयस्यस॥

महाशालि। पु॰ स्थूलशालौ।
सुगन्धिके॥ महान्श्रेष्ठः शालिः॥

महाशिव। पु॰ महादेवे॥

महाशीता। स्त्री॰ शतमूल्याम्॥

महाशुक्ति। पु॰ मुक्तामातरि॥

महाशुक्ला। स्त्री॰ सरस्वत्याम्॥ त्रि॰
अतिशुक्लवर्णयुक्ते॥

महाशुभ्र। त्रि॰ अतिशुभ्रवर्णयु
क्ते। न॰रजते॥

महाशूद्र पु॰ आभीरे॥

महाशूद्रा। स्त्री॰ महत्यांशूद्रायाम्॥
महतीशूद्रेतिविग्रहः॥

महाशूद्री। स्त्री॰ आभीर्याम्॥ महा
शूद्रस्यस्त्री॰जातीयावा। पु॰योगा
दिति॰जातेरितिवाङीष्॥

महाशौण्डी। स्त्री॰ श्वेतकिण्हीवृ-
क्षे॥

महाशौषिर। पु॰ दन्तरोगविशेषे॥
दन्ताश्चलन्तिवेष्टभ्यस्तालुचाप्यवदी
र्यते। दन्तमांसानिपच्यन्तेमुखञ्चप-
तुद्यते॥ यस्मिन्ससर्वजोव्याधिर्म
हाशौषिरसञ्ज्ञितः॥

महाश्मशानम्। न॰ आनन्दवने। का
श्याम्॥ महान्त्यपिचभूतानिप्रलये
समुपस्थिते। शेरतेऽत्रशवाभूत्वाश्म
शानन्तुततोभवेत्॥ वाराणसीति
विख्यातारुद्रावासद्दतिद्विज। म
हाश्मशानमित्येवप्रोक्तमानन्दका
ननम्॥

महाश्यामा। स्त्री॰ शिंशपावृक्षे॥
श्यामलतायाम्॥

महाश्रम। पुं॰ तीर्थविशेषे॥

महाश्रमण। पु॰ बुद्धभेदे। शाक्य
मुनौ॥

महाश्रावणिका। स्त्री॰ कदम्बपुष्प्या
म्। महामुण्डायाम्॥

महाश्री। स्त्री॰ बुद्धशक्त्यन्तरे। ता
रायाम्॥

महाश्रोत्रिय। पुं॰ महत्त्वेसतिश्रुता
ऽध्ययनवृत्तसम्पन्ने॥ महांश्चासौश्रो
त्रियश्च॥

महाश्वेता। स्त्री॰ शुक्लभूकूष्माण्डे।
कृष्णगन्धिकायाम्॥ क्षीरभूमिकू-
ष्माण्डे॥ सरस्वत्याम्॥ श्वेताप-
राजितायाम्॥ सितायाम्॥ मधुजा-
याम्। श्वेतकिणिहीवृक्षे। दुर्गायाम्॥
महतीचासौश्वेताच॥

महाषष्ठी। स्त्री॰ दुर्गायाम्॥

महाष्टमी। स्त्री॰ आश्विनशुक्लाष्टम्याम्॥

॥ शरत्कालेऽष्टम्यां तु सैव प्रोक्ता महाष्टमी। महाराचिरिति ख्याता तस्यां सम्यग्यजेत् सुधीः ॥ अष्टम्यां रुधिरैर्मांसैर्महामांसैः सुगंधिभिः । पूजयेद्बहुजातीयैर्बलिभिर्भोजनैः शिवाम् । सिन्दूरैः पट्टवासोभिर्नानाविधविलेपनैः । पुष्पैरनेकजातीयैः फलैर्बहुविधैरपि॥ उपवासं महाष्टम्यां पुत्रवान्न समाचरेत् । यथा तथैव पूतात्मा व्रती देवीं प्रपूजयेत् ॥ पूजयित्वा महाष्टम्यां नवम्यां बलिभिस्तथा । विसर्ज्ज्येद्दशम्यां तु श्रवणे तावरोत्सवैः तन्नाईराचपूजा यथा । कन्यासंस्थे रवाविषे शुक्लाष्टम्यां प्रपूजयेत् । सोपवासो निशार्द्धे तु महाविभवविस्तरैः । पूजासमारम्भे हि व्यानन्तर्य बारुणीं पिबा । पशुघातश्चकत्तं व्योगबलावधस्तथेति देवीपुराणे वाक्यपदेन पूर्वाषाढोच्यतइति रघुनन्दनः ॥ महाष्टम्युपवासे पारणन्तु । अष्टम्यां समुपोष्यैव नवम्यामपरेऽहनि। मध्यमासोपहारेण दद्यान्नैवेद्यमुत्तमम् ॥ तेनैव विधिनान्नन्तु स्वयं भुञ्जीत नान्यथेति ॥

महासन्न । पुं॰ कुबेरे ॥ त्रि॰ अतिनिकटे ॥

महासमङ्गा । स्त्री॰ इङ्गबलायाम् । खिरहिट्याम् । बलायाम् । कगहि या॰ कघी॰ खरैटी॰ हु॰ भा॰ ॥

महासर्ज्ज । पुं॰ असनवृक्षे ॥ पनसे ॥

महासह । पुं॰ कुब्जकवृक्षे ॥ त्रि॰ अतिक्षमे ॥

महासहा । स्त्री॰ माषपर्ण्याम् । अम्लाने । कठसरैय्या॰ हु॰ भा॰ ॥ महतीचासौ सहा च । सन्महदितिसमासः । आन्महतइत्यात्वम् ॥

महासन्तापनम् । न॰ व्रतविशेषे ॥ अत्रयाज्ञवल्क्य । कुशोदकञ्चगोक्षीरं दधिमूत्रं शकृद्घृतम् । जग्ध्वापरेऽह्न्युपवसेत् कृच्छ्रं सान्तपनं चरन् ॥ हारसाध्यसान्तपनमुक्त्वाह । पृथक् सान्तपनद्रव्यैः षडहः सोपवासकः । सप्ताहेन तु कृच्छ्रोय महासान्तपन स्मृतम् ॥ महासान्तपन धेनु षट्कादानसमम् ॥

महासार । पुं॰ दुर्खदिरे ॥ त्रि॰ युक्तियुक्ते ॥

महासाहसम् । न॰ अतिबलात्कारकृतकार्ये ॥ अतिशयदण्डे ॥

महासाहसिक । त्रि॰ अतिसाहसयुक्ते ॥ प्रसह्यापहारिणि ॥ महांश्चासौ साहसिकश्च ॥

महासिंह । पुं॰ शरभे । पर्वताश्रये ॥ देव्यां सिंहे ॥ यथा । तीक्ष्णदंष्ट्राकरालास्य शटाशोभितकन्धरः ।

चतुरङ्गिर्वेबनखोमहासिह : प्रकीर्तितइति ॥

महासुख । पु॰ बुद्धे ॥ न॰ क्रीडारत्ने ॥ प्रचुरसुखे ॥ त्रि॰ तद्वति ॥

महासुगन्धा । स्त्री॰ गन्धनाकुल्याम् ॥ त्रि॰ अतिसुगन्धयुक्ते ॥

महासूक्ष्मा । स्त्री॰ वालुकायाम् ॥ त्रि॰ अतिशयसूक्ष्मे ॥

महासेन । पुं॰ कार्त्तिकेये ॥ महासैन्यपतौ ॥ बौद्धभेदे ॥ महतीसेनाऽस्य ॥

महास्कन्ध । पु॰ शरभे ॥ त्रि॰ महत्स्कन्धयुक्ते ॥

महास्कन्धा । स्त्री॰ जम्बूवृक्षे ॥

महास्कन्धी । पु॰ शरभे ॥

महास्थली । स्त्री॰ पृथिव्याम् ॥ श्रेष्ठस्थाने ॥

महास्नायु । पु॰ कण्डरायाम् ॥

महास्रग्वी । पु॰ शिवे ॥

महास्वन । पु॰ वाद्यप्रभेदे । महातूर्ये ॥ विष्णौ ॥ महान्ऊर्जितस्वन नादोऽस्य । यद्वा । महान्स्वन श्रुतिलक्षणोनादोस्य ॥ सम्मदादितिसमासे॰चात्वम् ॥ हहच्छब्दे ॥ त्रि॰ तद्वति ॥

महाहनु । पु॰ शिवे ॥ हनूमति ॥ त्रि॰ हहद्धनुयुक्ते ॥

महाहवि । न॰ गोघृते ॥ ब्रह्मणि ॥ महच्चतद्धविश्च॰ब्रह्मात्मनिसर्वंजगत्तदात्मतयाहूयतेइतिमहाहवि . । यद्वामहान्तिहवींषियाज्यपुरोडाशपशुसोमादिरूपाण्यस्य॰ इन्द्रादिदेवतारूपस्ययजमानरूपस्यवेतिमहाहवि . ॥

महाहास । पुं॰ अट्टहासे ॥

महाहिगन्धा । स्त्री॰ गन्धनाकुल्याम् ॥

महाह्रस्वा । स्त्री॰ कपिकच्छ्वाम् । शूकशिम्ब्याम् ॥ त्रि॰ अतिखर्वे ॥

महि । अ॰ महिमनि ॥

महि । स्त्री॰ भूमौ ॥ मह्यते । मह पूजायाम् । चुरादिरदन्त । सर्वधातुभ्यइन् ॥

महिका । स्त्री॰ हिमे ॥ मह्यते । मह ॰ । क्वुन्शिल्पिसंज्ञयो ॥

महित । त्रि॰ पूजिते ॥ मह्यतेस्म ॥ मह॰ । मतिबुद्धिपूजार्थेभ्यश्चेतिक्त ॥

महिनम् । न॰ राज्ये ॥ त्रि॰ पूजनीये ॥ मह्यते । मह॰ । महेरिनण्चेति पक्षेइनन् ॥

महिमा । पु॰ शिवैश्वर्ये । ऐश्वर्यातिशये । भूतिप्रभेदे ॥ महान्भवति॰ येनसमस्तब्रह्माण्डेपिनसमवैति ॥ विभूतिविस्तारे ॥ चात्मन कर्मनिमित्त हविचयराहित्ये ॥ महतोभाव । पृथ्वादिभ्यइमनिच् ॥ उत्कर्षे ॥

महिमभृत् । त्रि॰ ऐश्वर्यवति ॥

महिर । पु॰ पौषे । मिहिरे । सूर्ये ॥

इतित्रिकाण्डशेष '॥

महिला । स्त्री० फलिन्याम् । गुन्द्राया म् । प्रियङ्गौ ॥ स्त्रियाम् । योषिति ॥ रेणुकानामगन्धद्रव्ये ॥ मदमत्ता याम्योषायाम् ॥ महति० मह्यते वा । मह० । सलिकलीति० इलच् । टाप् ॥

महिलाह्वया । स्त्री० श्यामायाम । प्रियङ्गौ ॥ महिलायाआह्वयोय स्या : ॥

महिष । पुं० लुलाये । कासरे । यमवाहने । भैंसा० हि० भा० ॥ महिषस्यामिषस्वादुस्निग्धोष्णवात नाशनम् । निद्राशुक्रबलस्तन्यतनु दाढ्र्यंकर गुरु ॥ दध्यस्यचपितिविण्मूत्र वातपित्तास्रनाशनम् ॥ महति ० मह्यतेवा । मह ० । अविमह्यो टिषच् । यद्वामहतीमहिष्ठीटिषच् । आगमशासनस्यानित्यत्वान्नुम् ॥ अर्हध्वजविशेषे ॥ असुराधिप विशेषे । महिषासुरे ॥ स्मृधारि णिम्लेच्छजातिविशेषे ॥ पुरायच्च वियवासीत्सगरेणास्यवेदाध्ययनधि कारोविशान्यत्वं धर्मनार्यश्चकृत ॥

महिषकन्द । पु० महाकन्दविशेषे । शुभ्राली ॥

महिषघ्नी । स्त्री० दुर्गायाम् ॥

महिषध्वज . । पु० यमे ॥ अर्हद्विशेषे ॥ महिषोध्वजेयस्य ॥

महिषमर्दिनी । स्त्री० दुर्गायाम् ॥

महिषवल्ली । स्त्री० लताविशेषे । सो म्यायाम् ॥

महिषवाहन । पु० यमे ॥

महिषाक्ष । पु० )

महिषाख्य । पु० ) गुग्गुलौ । भृङ्गा ञ्जनसमप्रभे ॥

महिषाक्षादि । न० महिषाक्षादिपञ्चा नागणे ॥ यथा । महिषाक्षस्तथा ' राल नियास सर्जकस्तथ । कृष्णा गुरु कदम्बश्चमहिषाक्षादिपञ्चकम् ॥

महिषासुर । पुं० महासुरविशेषे । रम्भासुरात्मजे ॥

महिषासुरसम्भव । पु० भूमिजगुग्गुलौ ॥

महिषासुरहन्त्री । स्त्री० दुर्गायाम् ॥

महिषी । स्त्री० कृताभिषेकायाराज्ञ . पत्न्याम् ॥ मह्यते । मह० । अविम ह्योटिषच् । टित्त्वान्ङीप् ॥ औष धीभेदे ॥ सैरिभ्याम् । मन्दगमना याम् । महाक्षीरायाम् । भैंस० हि० भा० ॥

महिषीगोष्ठम् । न० महिषीशालाया म् । भैंसवाडा० हि० भा० ॥ महि षीणास्थानम् । गोष्ठच् ॥

महिषीदुग्धम् । न० महिषीक्षीरे । सैरिभ्या स्तन्यं ॥ माहिष मधुर मत्यात्स्निग्ध शुक्रकर गुरु । निद्रा करमभिष्यन्दिक्षुधाधिक्यकर हिम म् ॥

महिषीप्रिया। स्त्री॰ तृणविशेषे। शूक्याम्। शूलपल्याम्। जलाश्रयायाम्॥
महिष्मान्। पु॰ देशविशेषे॥ महिषा॰ सन्त्यस्मिन्। महिषाश्चसन्त्यस्मिन्निति॰ ड्मतुप्॥
मही। स्त्री॰ भूमौ। पृथिव्याम्॥ महाते। मह॰। चुरादावदन्त। ण्यन्ताद्घञ्। कृदिकारादिति ङीष्॥ यद्वा। महीयते। महीङ् पूजायाम्॰ कण्ड्वादियगन्त। क्विप् चेतिक्विप्। यलोपयलोपौ। कृदिकारादितिङीष्। तदभावे विसर्गश्रुत्यर्थाद्। मालवदेशविहारियज्ञानद्याम्॥ महीजन्तुसुखादुवह्य पित्तहर गुरु। गवि॥ हिलमोचिकायाम्॥ वर्णवृत्तछन्दस्युक्थाप्रभेदे॥ यथा। लघुगुरु। महीस्मृता॥ यथा। हरोऽस्तुमे। मनोमुदे॥
महीक्षित्। पुं॰ नृपे। राजनि॥ महीं॰ क्षयते॰ ईष्टे। क्षिनिवासगत्योः। मह्यांक्षयतिवा। क्षिच्यैश्वर्ययोः। क्विप्। तुक्॥
महीज॰। पु॰ भौमे। मङ्गलग्रहे॥ न॰ आर्द्रके॥ त्रि॰ भूमिजाते॥
महिदुर्गम्। न॰ मृदापाषाणैरिष्टकैर्नवाविस्ताराद्द्विगुणोच्छ्रायैर्यद्वादश हस्तादुच्छ्रितैनचुवार्थंसुपरिभ्रमणार्थं योग्येनसौवर्णगवाक्षादियुक्तेनप्राकारे णवेष्टितैराज्ञांवासस्थाने॥
महीधर। पु॰ विष्णौ॥ महीगिरिरूपेणाधत्ते। धरति। धृञ्॰। मह्याधर॥ अच्॥
महीध्र। पु॰ शिखरिणि। पर्वते॥ महींधरतिधारयतिवा। धृञ्॰। मूलविभुजादित्वात्कः॥
महीपाल। पु॰ राजनि॥ महींपालयति। पाल॰। कर्मण्यण्।
महीप्राचीरम्। न॰ समुद्रे॥
महीभृत्। पु॰ पर्वते॥ नृपे॥
महीमय। त्रि॰ मृत्तिकानिर्मिते मह्याविकारे॥
महीयान्। त्रि॰ महत्तरे॥
महीरुह। पुं॰ शाखिनि। पादपे। वृक्षे॥ शाकवृक्षे॥ मह्यारोहयति। रुहबीजजन्मनिप्रादुर्भावे। इगुपधलक्षणः कः॥
महीलता। स्त्री॰ किञ्चुलुके। केंचुवा॰ इतिख्याते॥ अभ्यासदीर्घत्वाभावश्छान्दसः॥
महीसुत। पु॰ मङ्गलग्रहे। लोहिताङ्गे॥ मह्याः सुत॥
महेच्छ। त्रि॰ महाशये। महाभिलाषे॥ महतीइच्छाऽस्य॥
महेन्द्र। पु॰ कलिङ्गदेशस्थेकुलपर्वतविशेषे॥ सिद्धपीठोयमद्रिः। यथा। महान्तकोमहेन्द्रेचपार्वतीचमहान्तकीति॥ चिसामाप्यृषिकुल्यायामहेन्द्रप्रभवा॰ स्मृता॥

इन्द्रे ॥ महांश्चासौ॰इन्द्रश्चमहान्वा अयमभूद्योवृत्रमवधीदितिश्रुते । ईश्वरे । विष्णौ ॥

महेन्द्रकदली । स्त्री॰ कदलीप्रभेदे ॥

महेन्द्रतनया । स्त्री॰ सरिदन्तरे ॥

महेन्द्रनगरी । स्त्री॰ अमरावत्याम् ॥

महेन्द्रपर्वत । पुं॰ तीर्थविशेषे ॥

महेन्द्रमदभित् । पु॰ श्रीकृष्णे ॥

महेन्द्रवारुणी । स्त्री॰ लताविशेषे । चित्रवल्ल्याम् । महाफलायाम् । वक्षीमाकाल्॰ इ॰ गौ॰ दे॰ भा॰ ॥

महेन्द्राणी । स्त्री॰ इन्द्रयोषिति । पुलोमजायाम् ॥ महेन्द्रस्यस्त्री । महतीचासाविन्द्राणीचेतिवा ॥

महेन्द्रियम् । त्रि॰ माहेन्द्रे ॥ महेन्द्रो देवताऽस्य । महेन्द्राद्घाणौचेतिघ ॥

महेन्द्रीयम् । त्रि॰ माहेन्द्रे॰ हविरादौ ॥ महेन्द्रोदेवताऽस्य । महेन्द्राद्घाणौचेतिचकाराच्छ ॥

महेरणा । स्त्री॰ कुन्दुरुक्याम् । शल्लकीवृक्षे ॥ महदीरणमस्या ॥ महमुत्सवमीरयतिवा । ईर॰ । ल्यु ॥

महेला । स्त्री॰ महिलायाम् ॥ वामायाम् ॥ महस्यउत्सवस्य॰ इला भूमि. ॥ यद्वा । महति॰ मह्यतेवा । सलिकलीतीलच् । पृषोदरादि ॥ माया ॰ ईलाक्रीडावा । परमहेलारतोप्यपारदारिकइतिदमयन्तीकाव्यम् ॥

महेलिका । स्त्री॰ महेलायाम् ॥ स्वार्थेकन् ॥

महेश । पु॰ शिवे ॥ महेशान्नापरोदेव ॥

महेशबंधु : । पु॰ श्रीफलवृक्षे । विल्वे । महेशस्यबन्धुरिव ॥

महेशिता । त्रि॰ परमेश्वरे । परदेवतायाम ॥ महांश्चासावीशिताच । सन्महदितिसमास ॥

महेश्वर । पु॰ शिवे । महादेवे ॥ महेश्वरमृत्युञ्जयऋपवनापरकृतिरघु ॥ विश्वस्थानाञ्चसर्व्वेषामहतामीश्वर स्वयम् । महेश्वरस्ततेमप्रवदन्तिमनीषिण ॥ महांश्चासावीश्वरश्च । सन्महदितिसमास ॥ त्रि॰ अधीश्वरे ॥

महेश्वरी । स्त्री॰ महेश्वरपत्न्याम् । भगवत्याम्परदेवतायाम् ॥ अपराजितायाम् ॥ पित्तलप्रभेदे । कपिलायाम् । ब्रह्मरीत्याम् ॥ राजरीत्याम् । महतीचासावीश्वरीच ॥

महेष्वास । पु॰ हरौ ॥ शिवे ॥ महानवितथइष्वासइषुर्च्चेपोयस्य ॥ त्रि॰ उत्तमधानुष्के ॥

महेरण्ड । पु॰ स्थूलैरण्डे ॥

महेला । स्त्री॰ स्थूलैलायाम् ॥

महोच । पु॰ वृद्धवृषे । वृषभे ॥ महांश्चासावुक्षाच । अचतुरेतिसाधु ॥

महोटिका । स्त्री० )
महोटी । स्त्री० ) बृहत्याम् ॥

महोत्पलम् । न० पद्मे । नलिने । अरविन्दे ॥ महच्चतत्उत्पलञ्च ॥

महोत्सव । पु० अतिशयितसुखजनककर्मणि ॥ यथा । दुर्गातन्त्रेयाम स्त्रेयकुर्याद्दुर्गामहोत्सवम् । महानवम्यांशरदिवलिदानन्दपादय ॥

महोत्साह । पुं० राज्याङ्गप्राप्तराजपुरुषे ॥ अतिशयोद्यमे ॥ त्रि०अतिशयोत्साहयुक्ते । महोद्यमे ॥ दुःसाध्यकार्य्येपिसाधनपरे ॥ महान् उत्साहोस्य ॥ परदेवतायाम् ॥ जगदुत्पादनार्थमुद्युक्तत्वात् ॥

महोदधि । पु० समुद्रे ॥

महोदधिशय । पुं० नारायणे ॥ प्रलयेसर्वभूतानिसंहृत्यार्णवेजगत्। कृत्वाऽधिशेते ।शीङ्स्वप्ने।अ ॥

महोदय । पु० कान्यकुब्जदेशे ॥ आधिपत्ये ॥ अपवर्गे । मोक्षे ॥ सदाकृतयुगञ्चास्तुसदाचास्तूत्तरायणम् । सदामहोदयश्चास्तुकार्य्याणिवसतांसताम् ॥ महात्मनि ॥ स्वामिनि ॥ दध्यन्नेमधुनि ॥ न०पुरविशेषे । कान्यकुब्जे । गाधिपुरे । कनौज०इतिमहीवाइतिचभाषा ॥ महानुदयोवैभवंयस्य०यथवा ॥

महोदया । स्त्री० मेरोरुत्तरवाटाख्योर्द्ध्वे मेखलायाउदग्दिशिसोमस्यपुर्याम् । यथोक्तम्ब्रह्मसंहितायाम् । महोदयाचन्द्रमसः पूर्वेतायुक्तादिनिर्मिता । हिमसङ्घसुताभातिपुरे हिमगिरिप्रभे रिति ॥ नागवल्लायाम् ॥

महोदर । पु० बृहदुदरे ॥ त्रि० तद्वति ॥

महोदरी । स्त्री० रवेः सङ्क्रमणविशेषे कुजादेवरवौयदासङ्क्रमस्तान्महोदर्यंसीतस्करायासुखाय ॥ अशाश्वतावर्याम् ॥

महोद्यम । त्रि० महोत्साहे । दुःसाध्यकार्य्येपिसाधनपरे ॥ महानुद्यमोऽस्य ॥

महोन्नत । पु० तालागमे ॥ त्रि०महोन्नतिविशिष्टे ॥

महोन्नति । स्त्री० अतिशयवृद्धौ ॥ यथा । भूयात्तेसम्पदैश्वर्यंपुत्रादीनामहोन्नति । अव्याधिनाशरीरेणचिरञ्जीवसुखीभव ॥

महोन्माद । पुं० फलक्याम् । फलु० ह०माच०गौ०दे०भा०प्र०मीने ॥

महोपसर्ग । पु० मार्य्यादिषु ॥

महोरग । पु० वासुकिसर्पे ॥ बृहत्सर्पे ॥ महांश्चासावुरगश्च ॥ न०तगरमूले ॥

महोल्का । स्त्री० सूर्य्ये ॥ उल्काविशेषे ॥ उल्कालक्षणन्तु । दहच्छिखावसूक्ष्मायारक्तानीलशिखोज्वलापी

याटूवट्०भा० ॥

मालाधर । पु० वर्णवृत्तविशेषे ॥ द्विजवरगणान्वितोगजपति पुनस्तूर्यवान् ०करतलपरिस्फुरत्कनककुण्डलेनान्वित । सुरपतिगुरुश्रियापरिगत समन्ततात्सखे ०जयतिभुविवृत्तभूपतिरयन्तुमालाधर ॥ यथा।क्वचिदपिवयस्ययासङ्गविनोदमातन्वती० कतिपयकथारसैर्मयतिवासरीयान्तनम् । सुभगतवकामिनीसमधिगम्यसायामिनी मनुभवतिभामिनी मदनवेदना मन्त त ॥

मालारिष्टा।स्त्री० पाच्याम्। मरकतपत्र्याम् । हरितलतायाम् ॥

मालालिका । स्त्री० पृक्कायाम् ॥

मालाली । स्त्री० पृक्कायाम् ॥

मालि । पु० सुकेशराक्षसपुत्रे ॥

मालिक । पु० मालाकारे ॥ पक्षिविशेषे ॥ मालाशिल्पमस्य। शिल्पमितिठक् ॥ मालास्यास्तिवा । व्रीह्यादिभ्यश्चेतिठन् ॥

मालिका । स्त्री० सप्तलायाम् ॥ पुत्र्याम् ।। ग्रीवालङ्करणे ॥ पुष्पमालायां ॥ नदीविशेषे ॥ सुरायाम् । मद्ये ॥ टाप् ॥

मालिकी । स्त्री० मालिकयोषिति । मालिन्० ङ्० भा० ॥ टिड्ढेति ङीप् ॥

माली । पु० मालावति॥ मालास्त्यस्य ।सुखादिषु०मालाचये ० इतिपाठादिनि ॥ व्रीह्यादित्वाद्वा०इनि । सतुर्वेपादन्यथापि ॥ सुकेशराक्षसपुत्रे ॥

मालिनी । स्त्री० मालाकायाम् ॥ मालिकयोषिति ॥ गौर्याम् । उमायाम् ॥ चम्पानगर्याम् ॥ मन्दाकिन्याम् ॥ नदीविशेषे ॥ मालास्ति अस्याः अस्यावा । व्रीह्यादित्वादिनि । ङीप् ॥ यद्वा। मलते। मलधारणे। णिनि । ङीप् । अग्निशिखायाम्॥ दुरालभायाम् ॥ अतिशक्वरीच्छन्दो १५ भेदे॥ यथा । ननमययुतेय मालिनीभोगिलोकै ॥ मृगमदकृतचर्चापीतकौशेयवासारुचिरशिखिशिखण्डाबद्धधम्मिल्लपाशा । अनृजुनिहितमंसेव शमुत्क्षायन्तीछ्रतमधुरिपुलीलामालिनीपातुराधा ॥

मालिन्यम् । न० मलिनत्वे ॥

मालाय । त्रि० मालायाम्भवे।। दृष्टाक्ष ॥

मालु । स्त्री० पत्रलतायाम् । पत्रवल्ल्याम् ॥ नार्याम् ॥

मालुधान । पु मातुलाहौ। चित्रसर्पे ॥ मालुरोषधी०तत्रधानमस्य ॥ मधापक्षे ॥

मालुधानी । स्त्री० लताम्बरे ॥

मालूक । पु० कृष्णार्जके ॥

मालूर । पु० शाण्डिल्यवृक्षे । श्रीफले । बिल्वे । बेल० हू० भा० ॥ माक्लक्ष्मीं परिषालुनाति । लूञ्छेदने । बाहुलकादूरक् ॥ कपित्थवृक्षे ॥

मालेया । स्त्री० स्थूलैलायाम् ॥

माल्यम् । न० कुसुमे । पुष्पे ॥ मालायासाधुमाल्य पुष्पमितिविवरणम् यथा । यथाचाल्यं भमाल्ये नवासितं तिलसर्षपम् । नसुखतिस्वकगन्धं तद्वत्सूक्ष्मस्यदर्शनम् ॥ पुष्पमालायाम् ॥ मूर्द्धिन्यस्तपुष्पदामनि ॥ केशकलापार्द्दहिर्माल्यधारणनिषेधोयथा । नविगह्यंकथाकुर्याद्बहिर्माल्य नधारयेत् । गवाञ्चयान पृष्ठेनसर्वथैवविगर्हितम् ॥ रत्नमयस्त्रजि ॥ मालामात्रे ॥ मल्यते । मलधारणे कर्म्मणोण्यत् ॥ यद्वा । मालेव । चतुर्वर्णादित्वात्ष्यञ् ।

माल्यपुष्प । पुं० शणवृक्षे ॥

माल्यपुष्पिका । स्त्री० शणपुष्प्याम् ॥

माल्यवान् । पु० पर्वतविशेषे । मेरुत प्राच्यामानीलनिषधयाम्योत्तरायती द्विसहस्रयोजनविस्तीर्णकेतुमालेलावृतवर्षयोर्मर्यादाद्रौ ॥ माल्याकारतास्यास्तिमतुप् ॥ राक्षसभेदे ॥

माष । पु० लेटात्तीवरकन्यायामुत्पन्ने० सङ्करजातौ ॥

माषवी । स्त्री० मलयाभायाम् ॥

माशब्दिक । त्रि० प्रतिषेद्धरि । निषेधके ॥ माशब्द इतियआहस । तदाहेतिमाशब्दादिभ्यउपसङ्ख्यानमितिठक् ॥

माष । पु० व्रीहिप्रभेदे । कुरुविन्दे । धान्यवीरे । वृषाकरे । मांसले । बलाढ्ये । पित्र्ये । भोजने । माष०उड़द० हू० भा० ॥ माषस्यफलमाष । अवयवेत्त्वप्राण्योषधिवृक्षेभ्यइत्यण् । तस्यफलपाकशुषामिति लुपि०युक्तवद्भाव ॥ माषोगुरुस्वादुपाकः स्निग्धोरुच्योऽनिलापहः । उष्णः सन्तर्पणोबल्यः शुक्रलोद्वृष्यः परः ॥ भिन्नमूत्रमलस्तन्यमेदः पित्तकफप्रदः । गुदकीलार्दितश्वासपक्तिशूलानि नाशयेत् ॥ कफपित्तकरामाषा कफपित्तकरंदधि । कफपित्तकरामत्स्या वृन्ताककफपित्तहृत् ॥ मूलकमाषसूपेनमधुनाचनभक्षयेत् ॥ रूप्यपरिमाणविशेषे ॥ द्विकृष्णलैसमधृते विज्ञेयोरूप्यमाषकः ॥ परिमाणविशेषे । माषके ॥ सचमागधमानेसुश्रुतमते ५ गुञ्जाचरकमते ६ ८ गुञ्जापरिमाणम् । कालिङ्गमानेसुश्रुतमते ५ ७ ८ गुञ्जापरिमाणम् । वै

द्यकान्तरे १० गुञ्जापरिमाणम् । यथा। गुञ्जाभिर्दशभिर्माष माणो माषचतुष्टयमितिवैद्यकपरिभाषा । मासाइति भाषा॥ ज्योति स्मृतिमते १२ गुञ्जापरिमाणम्। यथा। पलन्तुलौकिकैर्मानैः साष्ट रक्तिद्विमाषकम्। तोलकंचितय ञ्च यज्ज्योतिज्ञैः स्मृतिसम्मतमितितिथ्यादितत्त्वधृतवचनेनपलमष्ट रक्तिकाधिकमाषद्वयाधिकतोलकत्रयम्। एतेनमाषकपरिमाणद्वादश रक्तिकभवति॥ मूर्खे॥ त्वग्दोष भेदे। मस्साइति भाषा॥

माषक । पु॰ पञ्चरक्तिकपरिमाणे ॥ गुञ्जा प चाद्यमाषकइत्यमर॥ दशार्द्धगुञ्जप्रवदन्तिमाष माषाह्वये षोडशभिश्चकर्षमितिलीलावतीच॥ षड्भिस्तुरक्तिकाभि. स्यान् माषकोहेमधान्यकौ। माषोगुञ्जाभिरष्टाभि सप्तभिर्वाभवेत्क्वचिद्दितिभावप्रकाश॥

माषपर्णी। स्त्री॰ महासहायाम्। हयपुच्छौषधौ। काम्बोज्याम्। वन माषे। माषाणीति॰ गौ॰दे॰भा॰॥ माषपर्णोहिमातिक्तारूक्षाशुक्रबलासकृत। मधुराग्राहणीशोषावातपित्तज्वरास्रजित्॥

माषवर्द्धक । पुं॰ स्वर्णकारे॥

माषवटी स्त्री॰ वटिकाविशेषे । उडदी॰ बडी॰ इ॰ भा॰॥ माषाणापिष्टिकाहिङ्गुलवणार्द्रकसंस्कृता। तयाविरचितावस्त्रैर्वटिकासाधुशोषिता॥ तलितास्तप्ततैलेनाथवासुप्रलेहिता । वटकस्यगुणैर्युक्तान्नात्व्यारुचिदाभृशम्॥

माषश । ष॰ प्रतिमाषम्॰ वुन्त्यर्थे॥

माषाद । पु॰ कच्छपे॥ त्रि॰ माषभक्षके॥

माषादि । पु॰ शमीधान्यगणे। माषआदिर्यस्यगणविशेषस्य । माषोमुद्गोराजमाष कुलत्थस्यवकस्तिल । काकाण्डश्चीवरइतिशमीधान्यगण स्मृत ॥

माषीणम्। न॰ माषक्षेत्रे। माष्ये॥ माषाणांभवनं क्षेत्रम्। विभाषातिलमाषोमाभङ्गाणुभ्यइतिपक्षे खञ्॥

माषेगडरी। स्त्री॰ वृगडरे॰ इन्दरे॰ सेफ॰ इतिहिमप्रवंतप्रसिद्धेखाद्य द्रव्ये॥

माष्यम्। न॰ माषीणे। माषक्षेत्रे॥ माषाणांभवनम्क्षेत्रम्। विभाषातिलमाषेतिपक्षेयत्॥ माषेभ्योहित वा। खलयवमाषेत्यादिना यत्॥

मा । पु॰ चन्द्रे॥ मासे॥ मिमीते आनन्दमितिमा । बाहुलकात्कौ

वलादथ्यसि . ॥

मास । पु० आमे । वर्षांशे । शुक्लकृष्णपक्षद्वयात्मकेकाले ॥ मासोद्विविध शुक्लादि कृष्णादिश्च । तत्र चैत्रशुक्लप्रतिपदमारभ्यामावास्यापर्यन्तशुक्लादि . । कृष्णपक्षप्रतिपदमारभ्यपूर्णिमापर्यन्त कृष्णादि ॥ माश्चन्द्रस्तस्यायम् । अण् । सौरादिषु । यथा । मासश्चतुर्विध प्रोक्त सावनादिप्रभेदत' । त्रिंशद्दिनात्मकस्तत्रसावन . परिकीर्त्तित ॥ एकस्मात्सङ्क्रमादासङ्क्रान्ति सौरोभिधीयते । शुक्लपक्षादिकृष्णान्तश्चान्द्र स्यादन्यथापिवा ॥ सर्वनक्षत्रभुक्त्यातुनाक्षत्रोमासउच्यते॥ तत्र । आब्दिकेपितृकृत्येचमासश्चान्द्रमस स्मृत' । विवाहादौस्मृत' सौरोयज्ञादौसावनोमतइतिभिवेक ॥ मस्यते परिमीयते चन्द्रवृद्धिक्षयाभ्याय । मसीपरिमाणे । कर्मणिघञ् ॥

मासजात । त्रि० जननादूर्द्धं यस्य मासोगतस्तत्र॥ तत्रैवव्यवहारात् । मासोजातस्ययस्य स । काला परिमाणिनेतिसमास ' ॥

मासज्ञ । पुं० दात्यूहे ॥ त्रि० मासविदि ॥

मासतम . । पु० मासस्यपूरणे ॥ नित्य शतादीतिडटस्तमडागम ' । अतएवज्ञापकात् डट् ॥

मासनम् । न० सोमराज्याम् ॥

मासमान । पु० वत्सरे ॥ न० मासपरिमाणे ॥

मासर । पु० निस्रावे । भक्तसमुद्भवे मण्डे । माड० पीच० दू० भा० ॥ मास्रुते । मसीपरिणामे० यन्त । बाहुलकादरन् ॥ यद्वा । मा० श्री . सरत्यच । स्र० । पुंसीति घ ।

मासवर्त्तिका स्त्री० सर्पपोषधिविशेषे ॥

मासान्त । पु० अमावास्यायाम् ॥ सङ्क्रान्तिदिने ॥

मासिकम् । न० अन्वाहार्ये । दर्शश्राद्धे ॥ पितृणांमासिक श्राद्धमन्वाहार्यं विदुर्बुधा । तच्चामिषेणकर्त्तव्य प्रशस्तेनप्रयत्नत ॥ मासे भवम् । कालाट्ठञ् ॥ प्रेतस्य० स वत्सराभ्यन्तरे० प्रतिमास मृताहेक्रियमाणे श्राद्धे ॥ मासोदेवताऽस्यवा । कालेभ्योभववत ॥ कर्म ॥ मासेदेय । देयमृणे । ठञ् ॥ त्रि० माससम्बन्धिनि । मासेननिर्वृत्तम् । ठञ् ॥ मासेभववा ॥

मासुरी । स्त्री० श्मश्रौ ॥

मासूर । त्रि० मसूरविकृतौ ॥ मसूरस्यावयवोविकारोवा । बिल्वाद्यण्॥

मास्म । अ० अलम् । वारणे ॥ माच स्मच । अनयो समाहार ॥

माहाकुल । त्रि॰ महाकुलीने ॥ महाकुलस्यापत्यम् । महाकुलादञ् खञाविति पक्षे अञ् ॥

माहाकुलीन । त्रि॰ महाकुले ॥ महाकुलस्यापत्यम् । महाकुलादिति पक्षे खञ् ॥

माहाजनिक । त्रि॰ महाजनाय हिते ॥ महांश्चासौ जनश्च । महाजनाट्ठञ् बहुव्रीहिस्तु । महाजनीय ॥

माहात्म्यम् । न॰ महात्मत्वे ॥ प्रभावे ॥ महात्मनो भाव । ष्यञ् ॥ अनतिशयैश्वर्ये । विश्वसृष्ट्यादिकर्तृत्वे प्यविकारित्वे । शुभाशुभकर्मफलदायित्वे प्यवैषम्ये । बन्धमोक्षादिफलदातृत्वे प्यसङ्गौदासीन्ये ॥

माहाराजिक । पु॰ गणदेवताभेदे । महाराजो देवतैषाम् । महाराजप्रोष्ठपदाट्ठञिति ठञ् ॥ महाराजो भक्तिरस्य वा । महाराजाट्ठञ् ॥

माहाव्रती । स्त्री॰ पाशुपतव्रतसम्बन्धिन्यापद्धतौ ॥

माहिनम् । न॰ राज्ये ॥ महतेऽस्मिन । मह॰ महेरिनण् चेतीनण् त्रि॰ महनीये ॥

माहिर । पु॰ देवराजे । इन्द्रे ॥

माहिषम् । न॰ महिष्या धर्मे ॥ अण् महिष्यादिभ्य ॥ त्रि॰ महिषसम्बन्धिनि ॥ महिषोपजीविनि । महिष्याः ॰ महिषस्येदम् वा ॰ इदम् अण् ॥

माहिषमस्तक पु॰ शालिग्रभेदे ॥

माहिषिक । पु॰ महिषाजीवे ॥ महिषीपतौ । व्यभिचारिण्यनुरक्तपतौ ॥ यथा । महिषीत्युच्यते नारी या च स्याद्व्यभिचारिणी । तादृष्टां कामयति यः स वै माहिषिकः स्मृत ॥ भगद्वारोपार्जितस्त्रीधनोपजीविनि ॥ यथा । महिषीत्युच्यते भार्याभगेनोपार्जितधनम् । उपजीवति यस्तस्याः स वै माहिषिकः स्मृतइति ॥

माहिष्मती । स्त्री॰ सिश्रुपालनगर्याम् ॥

माहिष्य पु॰ वर्णसङ्करजातिविशेषे । वैश्यायां क्षत्रियादुत्पन्ने ॥ नक्षत्रजीवन नृत्यगीतस्वरस्वरणम् माहिष्याणां शुभावृत्ति प्रोक्ताज्योतिर्ज्ञानसाध्ययम् ॥

माहेन्द्र । पु॰ शुभदण्डविशेषे ॥ रव्यादिवारेषु वायुवरुणयममहेन्द्राख्यामेकैकदण्डाभवन्ति॰ तत्र वरुणमहेन्द्रयोर्दण्डौ शुभौ । वायुयमयोर्दण्डावशुभौ ॥ यथा । स्यातवाचयमासूर्यमावावयकलानिधौ । वयमावाकुजेभ्यामावयसुधांशुजे । गुरौवावयमाचैव॰ मावावयतथाभृगौ । सूर्यपुत्रे यमावावघटीयुग्मशः

सुहृदि । सख्यौ । मौल० द्व० भा० ॥ यथा । सार्थं प्रवसतोमित्र भार्यामित्र गृहेसत । आतुरस्यभिषक्मित्र दानमित्र मरिष्यत ॥ हृति । अपिच, सम्मत्याशासहनोबन्धु सदैवानुगत सुहृत् । एकक्रियोभवेन्मित्र समप्राण सखाभवेत् ॥ स्तुतिभिः ह्स्वविवर्चित ॥ अर्थेनो पकर्त्तरि । प्रीतिकारके ॥ तच्चतु र्विधं यथा । सहार्थीभजमानश्च सहज कृत्रिमस्तथेतिभेदात् ॥ नकश्चित्कस्यचिन्मित्र नकश्चित् कस्यचिद्रिपु । कारणादेवजायन्ते मित्राणिरिपवस्तथा ॥ साम्रीयांम मद्कुर्यात्समुखीलघायोज्झित । तन्मित्र यस्यविश्वास पुरुष सजितेन्द्रिय ॥ सर्वथासुकर मित्र दुष्कर परिपालनम् । अनित्यत्वा चित्तानांप्रीतिरल्पेपिभिद्यते ॥ यस्यो दरस्मिन् । स्वदेशाऽव्यवहित राजात परस्मिन् ॥ विषयानन्तरो राजाशत्रु मित्र मत परमित्य मरोक्तं ॥ हिरण्यभूमिसम्प्राप् त्यापार्थिवोनतथैधते । यथा मित्र ध्रुवलब्ध्वाकृशमप्यायतिक्षमम् । धर्मसूक्ष्मकृतज्ञश्चतुष्टप्रकृतिमेवच । अनुरक्त स्थिरारम्भ लघुमित्र प्रशस्य ते ॥ मेद्यति । ञिमिदास्नेहने अमिचिमिदिशसिभ्य क्त्रइतिक्त

च० ॥ यथा । मित्रात्त्रायते । पॆकपालमौ । सुपोतिक ॥ चतु मतारायाम् ॥ अनुराधानक्षत्रे ॥ सर्वभूतात्मकेतातजगन्नाथेजगन्मये । परमात्मनिगोविन्दे मित्रामित्रकथाकुत ।

मित्रद्रोही । त्रि० नरकाधिकारिविशेषे । मित्रद्रुहि ॥ यथा । मित्रद्रोही कृतघ्नश्चयेचविश्वासघातका । तेनराभरक यान्तियावच्चन्द्रदिवाकरा वितिसस्मिरोपाख्यानम् ॥

मित्रघ्न् । पु० मित्रद्रोहिणि । मित्र स्यापकारके ॥ मित्रद्रुह्यति । द्रुहे सत्सूद्विषेति क्विप् ॥

मित्रयु । पु० लोकयात्राभिज्ञे ॥ । त्रि० मित्रवत्सले ॥ क्याच्छन्दसी त्यु ॥ यद्वा मित्रयाति । या० । मृगय्वादित्वात्कु ॥

मित्रयुद्धम् । न० मैत्रीयिकायाम् । सुहृत्स्वामे ॥

मित्रलब्धि । स्त्री० )

मित्रलाभ । पुं० ) सुहृत्प्राप्तौ ॥

मित्रवत्सल । त्रि० मित्रप्रिये । मित्र र्थी ॥ मित्रवत्सल इत्यस ॥

मित्रा । स्त्री० सुमित्रायाम् । लक्ष्म णमातरि ॥

मित्रावरुणीयम् । न० मित्रावरुणस्याऽय तत्त्वगविशेषस्थकर्मभेदयो ॥ छो त्राद्वश्च ॥

मिथ । अ॰ अन्योन्यस्मिन् । सहार्थे ॥ रहोर्थे ॥ मेथति । मथ् मङ्गमे । असुन् । पृषोदरादित्वात् थस्य ॥

मिथि । पु॰ निमिराजपुत्रे । जनके ॥

मिथिला । स्त्री॰ जनकपुर्याम् ॥ विदेहायाम् ॥ देशविशेषे । तेरभुक्ते । तिरहुत॰ इ॰ भा॰ प्र॰ ॥ यथा । गण्डकीतीरमारभ्यचम्पारण्यान्तकंशिवे । विदेहभूः समाख्याता तैरभुक्ताभिधः सतु ॥ मथ्यन्तेरिपवोऽत्र । मथ विलोडने । मिथिलादयश्चेतीलच् । अकारस्येत्वनिपातनात् ॥

मिथु । अ॰ द्वाविश्यर्थे

मिथुनम् । न॰ स्त्रीपुंसयोर्युग्मे । द्वन्द्वे । युगले ॥ जुगल॰ जोडी॰ इ॰ भा॰ ॥ द्वयो ॥ सुरते ॥ हन्द्वजनितसुखे ॥ तृतीयराशौ । मिथुने ॥ मिथुनलग्नजस्यफलं यथा । मिथुनोदयसञ्जातोमानीस्वजनवत्सल । त्यागीभोगीधनीकामीदीर्घसूत्रीरिपुहन्ता ॥ मेथति । मिथृ सङ्गमे । क्षुधिपिशिमिथिभ्यः कित् इत्युनन् उपसर्गविशिष्टधातौ । सम्बन्धे ॥

मिथुनाधिप । पु॰ बुधग्रहे ॥

मिथो । अ॰ रहसि ॥ सहार्थे । अन्योन्यस्मिन् ॥ मेथति । मेथृ॰ । बाहुलकात् ॥ पृषोदरादित्वाद्रूपम् ॥

मिथ्या । अ॰ अनृते । वितथे ॥ प्रागभावयुतत्वेमध्यस्मिन्प्रध्वंसत्वमितिमिथ्यालक्षणम् ॥ यदसत्तासमान तन्मिथ्यात्वम्प्रगणादिवदितिच ॥ स्त्री॰ अधर्मपत्न्याम् ॥ यथा । अधर्मपत्नीमिथ्यासासर्वधूर्त्तप्रपूजिता । ययाविना जगत्सर्वमुच्छिन्नविधिनिर्मितम् ॥ मिथ्ययाविनाधूर्तसमुदाय रूपमुच्छिन्नं भवति । मिथ्याभाषयाभावैधूर्तलक्षणाभावात इत्यर्थः । सत्ये आदर्शनाशाचतस्यास्तस्याः स्वरूपिणी । सर्वावयवरूपात्वाद्यापरश्चैकसङ्गता ॥ कलौमहाप्रगल्भावसर्वव्यापिकालत्वात् । कपटेनसमं भ्राताभगिनी मायादेवीति ॥ मथते । मथ॰ । अघ्न्यादित्वात्साधु ॥

मिथ्याचार । त्रि॰ पापाचारे ॥ स्वर्गश्रुभाविनफलायोग्यतत्वात् ॥

मिथ्याज्ञानम् । न॰ भ्रमज्ञाने ॥ अन्यस्मिन्नन्यात्मताभासे ॥

मिथ्यादर्शनम् । न॰ शास्त्रोपपातनवाद्यहेतुदर्शने ॥

मिथ्यादृष्टि । स्त्री॰ धर्मफलापवादकस्यामि । नास्तिकतायाम् ॥ मिथ्येत्युक्तवक्तव्ये । तद्विषयिणीदृष्टिर्ज्ञानम् । असत्यदर्शने ॥

मिथ्याध्यवसिति । स्त्री० मिथ्याध्यवसाये ॥

मिथ्यानिरसनम् । न० अपथे ॥

मिथ्याप्रयुक्त । त्रि० यदर्थप्रतिपादनायप्रयुक्तस्ततोऽर्थान्तर स्वरवर्णदोषात्प्रतिपादयति । शब्दे ॥

मिथ्याभियोग । पु० अभ्याख्याने । शत मेधारयसीत्याद्दिमिथ्योद्भावनरूपे० मिथ्यापवादे॥ मिथ्याचासावभियोगश्च ॥

मिथ्याभिशसनम् । न० अभिशापे । । स्वर्णस्तेय त्वयाकृतमित्यादिमिथ्याख्यादिसाधनरूपे मिथ्यारोपवाक्ये ॥ अभिशसे भावे ल्युट् ॥

मिथ्याभिशाप । पु० मिथ्यापवादे ॥ यथा । शुक्लपक्षे चतुर्थ्यान्तुसिंहे चन्द्रस्यदर्शनम् । मिथ्याभिशाप कुरुते नपश्येत्तत तत ॥

मिथ्यामति । स्त्री० भ्रान्तौ । भ्रमे ॥ मिथ्याचासौमतिश्च ॥

मिथ्याविनीत । त्रि० कपटेनविनयिनि ॥

मिथ्यासाक्षी । त्रि० कूटसाक्षिणि ॥ तस्यज्ञानप्रकारमाहयाज्ञवल्क्य । उक्तेपिसाक्षिभि साक्ष्येयद्यन्येगुणवत्तमा । द्विगुणावान्यथाब्रूयु कूटा स्यु पूर्वसाक्षिण ॥

मिथ्योत्तरम् । न० चतुर्थोत्तरान्तर्गतोत्तरविशेषे ॥ तल्लक्षण यथा । अभियुक्तोऽभियोगस्ययदिकुर्यादपह्नवम् । मिथ्यातत्तुविजानीयादुत्तर व्यवहारत ॥ तच्चतुर्विध यथा । मिथ्यैतम्०नाभिजानामि ममतत्रन स निधि । अजातस्वास्मितत्कालेइतिमिथ्याचतुर्विधम् ॥ इतिव्यवहारतत्त्व ॥

मिथ्योपलब्धि । स्त्री० मायागन्धर्वनगरादिज्ञाने ॥ मिथ्याचासावुपलब्धिश्च ॥

मिद्धम् । न० चित्ताभिसङ्क्षेपे ॥ आलस्ये ॥ क्लिन्ने ॥ निद्रायाम् ॥

मिन्मिन । त्रि० सानुनासिकवाक्यविशिष्टे । गुन्गुना० इ० भा० ॥ खोना० इ० गौ० दे० भा० । मीमणा इ० पर्वतीयभाषा ॥ अस्यनिदानन्तु । आवृत्यवायु सकफोधमनीशब्दवाहिनी । नरान्करोत्यक्रियकान्मूकमिन्मिनगद्गदान् ॥

मिमङ्क्षु । त्रि० मङ्क्तुमिच्छौ ॥ मज्जे सन्नन्तादुप्रत्यय ॥

मिमन्थिषु । त्रि० मथितुमिच्छौ ॥ मथे सन्नन्तादु ॥

मिमान । त्रि० मानङ्कुर्वाणे ॥ माङ्लोलट शानजादेश । श्लौषितिद्विर्भाव ॥

मिम्मिण । त्रि० )
मिम्मिन । त्रि० ) मिन्मिने ॥

मिश्रित । वि० सङ्गते । युक्ते । मिश्रिते ॥ श्रेष्ठे । सम्बन्धविशिष्टे ॥ मिलसंश्लेषे । चत्तरिष्ठ ॥

मिश्रि । स्त्री० जटामांस्याम् । मधुरिकायाम् । धानसौंफ० इ० भा० ॥ मिश्रति । मिश्र० । इन् ।

मिश्री । स्त्री० जटामांस्याम् । मधुरायाम् । धानसौंफइतिभाषा । मिश्रति । मिश्र० इन् । कृदिकारादितिङीष् ॥

मिश्र । पु० गजजातिविशेषे । यथा । भद्रोमन्द्रोमृगोमिश्रश्चतुर्धागजातय ॥ न० विशेषनवन्तस्यायाम् । यथा । छिद्रैवाकुन्तिका चैवमिश्र साधारण बुध । एषु मिश्राश्चिकार्यांस्त्रिषोत्सर्गादिक तथा ॥ चायक्यमूलके ॥ मिश्रफले ॥ वि० आर्य्ये । श्रेष्ठे ॥ सयुक्ते । सम्पृक्ते । मिश्रिते ॥ मिश्रयति । मिश्र० । अच् ।

मिश्रकम् । न० तीर्थविशेषे । देवोद्याने ॥ औषरलवणे ।

मिश्रकावणम् । न० इन्द्रस्योद्याने । नन्दनवने ॥ मिश्रकाख्यांवनम् । वनगिर्यौ स ज्ञायांकोटरकिंशुलुकाद्दीनामितिदीर्घः । वन पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्य इतिणत्वम् ॥

मिश्रज । पुं० अश्वतरे । खेस

मिश्रजम । न० एकचीकरणे । स यो गमै ॥ मिश्र० । ल्युट् ॥

मिश्रपुष्पा । स्त्री० मेथिकायाम् ॥

मिश्रफलम् । न० इष्टानिष्टसयुक्ते मानुष्यलक्षणे पापपुण्ययुगलफले ॥ मिश्रस्तत्फलञ्च ।

मिश्रवर्णम् । न० कृष्णागुरुणि ॥ वि० नानावर्णयुक्ते ॥

मिश्रवर्णफला । स्त्री० वार्त्ताक्याम् ॥

मिश्रशकुनम् । न० शुभाशुभयो सूचकेनिमित्ते । यथा । वद्न्तिवामकृदितंप्रशस्तमष्टदेशीयद्विरोदितास्यात्निम्दश्चवामपथिसर्वकामान् शुभविधत्त कृदितरजन्याम्मृत्य्सुतामांकृदितेनपृष्ठे लाभोभवेत्तत्र निवर्त्तनेन । मृत्यु स्तथाग्रेकृदितेनगन्तु सिद्धि विधत्त कृदितरिपूणाम् ॥ उग्रंभवेद्रोदनमग्रभागेभयभवेद्वक्षिविभागभूते । नैऋत्यकोणेरपभाग रोधोवायव्यकोणे कृदितस-श्चरो ॥ पृष्ठाग्रयोर्दक्षिणवामयोश्च सिद्धि सदातोरणरोदनेन । शुभोपिसव्यग्यदिरोदमार्योऽज्ञातोत्रिभाव्य सपुनस्तथापि ॥ यद्दालकैनोक्तमन्नद्विनतत्स्यादसत्य नयुगान्तरेपि । सुतनकार्य्ये क्वचिदेवशस्तनवांस्तुतस्याग्रकरमतन्तु ॥ निषेधमपि ऽक्षिविदिक्षिपं चधनसयदक्षिण-

कर्णं देशे । ततपृष्ठभागेकुरुतेऽरिम्न-
चिचुतक्कजान्याशुभमाद्दधाति ॥
श्रीगायशामश्रवणस्यपृष्ठे कर्णं च
वामेकथितजयाय । सर्वाथं लाभा
यचवामनेचेजातचुलखात्क्रमतोऽ
ह्यैव ॥ क्रमान्निषेधगमनस्यविन्न-
कालसन्हिचुतसुयरोगम् । करो-
तिरोगक्षयमर्थलाभदौप्तादिदिचुचु
तमुन्नतसत् ॥ चौषधेवाहनारोहेवि
वादेशयनेऽशने । विद्यारम्भे बीज-
वायेक्षुतंसप्तसुशोभन ॥

मिश्रशब्द । पु॰ अश्वतरे ॥

मिश्रा । स्त्री॰ सङ्क्रान्तिविशेषे ॥ भू
गौमिश्रभेसाभवेदेवमिश्रापश्चनासु
ख तत्त्वविद्भिरुक्ताम् ॥

मिश्रिका । स्त्री॰ मिश्रायाम् । मिश्रे
यस्यार्थेक ॥

मिश्रित । चि॰ गौरविते ॥ मिलिते
। युक्ते । ( ॰ ) ॥ ॥

मिश्रिता । स्त्री॰ सङ्क्रान्तिविशेषे ।
मिश्रायाम् । मिश्रिताचैवविज्ञेया
मिश्रितर्क्षैस्तुसङ्क्रमे ।

मिश्रेया । स्त्री॰ मधुरिकायाम् । सौ
फ॰धनसौ फ॰धन्साबा॰हू॰भा॰ ॥
शतपुष्पायाम् । तालपर्ण्याम् । च-
नजायाम् । अवाक्पुष्प्याम् । स-
हितपुष्पिकायाम् । सलुफा॰हू॰॰
गौ॰दे॰भा॰ ॥ मिश्रेयातद्गुणाप्रो-
क्तविशेषाद्योनिशूलनुत् । अग्निमा
न्द्यहरीहृद्यावद्धविट्क्रमिशुक्रहृत् ।
रूक्षोष्णापाचनीकासवमिश्लेष्मानि
लान्हरेत् ॥ तद्गुणा॰मधुरिका-
पर्यायशतपुष्पागुणा ॥ मिश्रयति ।
मिश्र॰ । अच् । ईयते । ईङ्॰ ।
पचाद्यच् । मिश्राचासावेयाच ।
शकन्ध्वादि ॥

मिष । पु॰ स्पर्द्धने । न॰व्याजे ।
मिषति । मिष॰ । क ॥

मिषन् । चि॰ पश्यति ॥

मिषि । स्त्री॰ मधुरिकायाम् । शत
पुष्पायाम् । जटामांस्याम् ॥

मिषिका । स्त्री॰ जटामांस्याम् ॥

मिषी । स्त्री॰ मिस्याम् ॥

मिष्ट । पु॰ मधुररसे ॥ नूतनसर्प-
पशाकनवौदन पिच्छिलानिचदधी
नि । अल्पव्ययेसुन्दरियाम्यजनो-
मिष्टमश्नाति ॥ चि॰मधुररसवि-
शिष्टे ॥

मिष्टनिम्बुकम् न॰ मीठा॰नीम्बू॰
इतिप्रसिद्धेफले । मिष्टनिम्बफल
स्वादुगुरुमारुतपित्तनुत् । गरारग
विषध्व सिकफोत्क्लेशिचरक्तहृत् ।
शोषारुचितृषाच्छर्दिहरबल्यक्षइष्ट
णम् ॥

मिष्टान्नम् । न॰ मधुरद्रव्ये ॥ मिष्टान्न
पानदातायसततश्रद्धयान्वित । दे
वप्लापरोनित्यं नप्रेतोजायतेसु-
त ॥

मिसि । स्त्री॰ मधुरायाम् ॥ जटा-
मांस्याम् ॥ शतपुष्पायाम् ॥ अज
मोदायाम् ॥ मस्यति । मसीपरि-
णामे । सर्वधातुभ्यइन् । बाहुलका
दत स्थानेइः ॥ उशीर्याम् ॥
मिसी । स्त्री॰ मिसी । तपस्विन्याम् ।
जटामांस्याम् ॥ मस्यति । मसी॰ ।
इन । कृदिकारादितिङीष् । पृ-
षोदरादि ॥
मिहिका । स्त्री॰ अवश्याये । नीहारे ।
तुषारे । मेहति । मिहसेचने । कृ
न् शिल्पिसंज्ञयोरितिक्वुन् ॥
मिहिर । पु॰ विकर्त्तने । अर्के । मा
र्त्तण्डे । सूर्ये ॥ मेघे ॥ बुद्धे ॥ मे
हति । मिह॰ । इषिमदिमुदिखि-
दीतिकिरच् ॥ वायौ ॥ इन्द्रे ॥
मिहिराण । पु॰ जगद्योनौ । शि-
वे ॥
मीढ । त्रि॰ मूत्रिते । मिह्यतेस्म ।
मिह॰ । क्त ॥ सिक्ते ॥
मीढुष्टम । पु॰ शिवे ॥
मीढ्वान् । पु॰ शिवे ॥ मीढ्वांसौ॰मी
ढ्वांस इत्यादि ॥
मीत । त्रि॰ हते ॥ मीयतेस्म । मी
ञ्हिंसायाम् । गत्यर्थेतिकर्त्तरिक
र्मणिवाक्तः ॥
मीन । पु॰ मत्स्ये ॥ राशिविशेषे
। चन्द्रलग्ने । अत्रजातस्यफलं यथा
। मीनलग्ने समुत्पन्नो रत्नकाञ्चन
पूरित । अल्परोमामहाप्राज्ञोदी
र्घकालपरीक्षकः । मीनाति॰मी
यतेवा । मञ्॰ फेनमीनाविति
निपातितः ॥ भगवतोविष्णो
प्रथमावतारे ॥ प्रकृतिर्विष्णुरूपाच
पुरुषश्चमहेश्वरः । एवं प्रकृतिभे
देनभेदास्तुप्रकृतेर्द्दश ॥ कृष्णरूपा
कालिकास्याद्रामरूपाचतारिणी ।
बगलाकूर्ममूर्त्तिः स्यान्मीनोधूमा
वतीभवेत् । छिन्नमस्तान्नृसिंहः
स्याद्वराहश्चैवभैरवी । सुन्दरीजा
मदग्न्यः स्याद्वामनोभुवनेश्वरी ॥
कमलाबौद्धरूपास्याद्दुर्गास्यात्कल्कि
रूपिणी । स्वयंभगवतीकालीकृष्ण
स्तुभगवान्स्वयम् ॥ स्वयञ्चभगवान्
कृष्णः कालीरूपोभवद्व्रजे ॥
मीनकेतन । पु॰ प्रद्युम्ने । कन्दर्पे ॥
मीनशब्दोजलचरोपलक्षणार्थः ।
मीनोमकरः केतनंध्वजोयस्यस ॥
मीनगन्धिका । स्त्री॰ जलाशये ॥
मीनघाती । पु॰ बके ॥ त्रि॰मत्स्यघा
तके ॥
मीननेत्रा । स्त्री॰ गण्डदूर्वायाम् ॥
मीनर । पु॰ जलरूपे । मकरे ।
अतिदष्टके ॥
मीनरङ्क । पु॰ पक्षिविशेषे । मत्स्या
शने ॥
मीना । स्त्री॰ उषाकन्यायाम् । कश्य
पस्यभार्यायाम् ॥

मीनाक्षी । स्त्री० देवीविशेषे ॥ तत्स्थाने । चिदम्बरे । हालास्ये । मत्स्याक्ष्यायाम् । मच्छे छी० ह० भा० ॥ गण्डदूर्वायाम् ॥ कुवेरकन्यायाम् ॥

मीनाण्डी । स्त्री० शर्करायाम् ।

मीनाधिप । पु० बृहस्पतौ ॥

मीनामोघ पु० । दर्दुरादौ व्यञ्जनप्रभेदे । सा अमीनव्यञ्जनेखञ्जन ॥

मीमांसक । पु० सिद्धान्तिनि । पूर्वोत्तरमीमांसाशास्त्राभिज्ञे । मीमांसामधीतेवेत्तिवा । क्रमादिभ्यो वुन् ॥ पूर्वमीमांसासूत्रकर्त्ताजैमिनि । वृत्तिकर्ताकुमारभट्ट । भाष्यकर्त्ताश्वरस्वामी । प्रभाकर कुमारभट्ट श्छात्र । सएवगुरुत्वेन भण्यते । तस्मातगुरुमतम् । तच्छिष्य । प्रभाकरा ॥ उत्तरमीमांसासूत्रकर्त्ताविद्व्यास । तेषाभाष्यकर्त्ताशङ्कराचार्य । वार्त्तिककर्त्तासुरेश्वराचार्य ॥ मीमांसकोजैमिनौ शेवेदान्तीब्रह्मवादिनि । वैशेषिकस्याद्दौलूक्य सौगत शून्यवादिनि ॥ नैयायिकस्त्वाक्षपाद स्यात्स्याद्वादिकआर्हत । चार्वाकलौकायतिकौसत्कार्येसाङ्ख्यकापिलौ ॥

मीमांसा । स्त्री० वेदविचारणे ॥ विचारणायाम् ॥ साद्विधा० पूर्वमीमांसा० उत्तरमीमांसाचेतिभेदात् । तत्र पूर्वमीमांसाद्वादशाध्यायात्मिका० जैमिनिप्रणीताधर्मस्वरूपनिरूपिका । अस्यांश्रौतानिलौकव्यवहारनियमार्थंमनुस्मृत्यादिभिर्बहुभिधर्मशास्त्रैनिबद्धानि ॥ उत्तरमीमांसातु चतुरध्यायात्मिकाविद्व्यासप्रणीता० ब्रह्मनिरूपिकावेदान्तशास्त्रत्वेनप्रसिद्धा ॥ धर्मंप्रमीयमाणंहिवेदेनकरणात्मना । इतिकर्त्तव्यताभाग मीमांसापूरयिष्यति ॥ प्रमाणादय प्रसङ्गान्ताद्वादशपदार्था क्रमाद्द्वादशानामध्यायानांविषया । यथा । धर्म्मोद्दान्प्रमाणलक्षणाव्यु त्पाद्यस्तत्रलक्षणे । प्रमाणभेदशेषत्वप्रयुक्तिक्रमसञ्ज्ञका । अधिकारोतिदेशश्चसामान्येनविशेषत । ऊहाबाधश्चतन्त्रञ्चप्रसङ्गश्चोदित क्रमात ॥ द्वादशाध्यायोपेतस्यशास्त्रस्यधर्म्मो विषय । प्रमाणादये ध्यायानाविषया तत्रप्रथमाध्यायेविध्यर्थवादादिरूप धर्मप्रमाण निरूपितम् । १ । द्वितीयेयागदानादिकर्मभेद । तृतीयेप्रयाजादीनादर्शपूर्णमासार्थत्वेनतच्छेषत्वम् । चतुर्थेगोदोहनस्यपुरुषार्थत्वप्रयुक्त्यानुष्ठानन तुक्रत्वर्थत्वप्रयुक्त्ये त्येवमादय । पञ्चमेक्रमनियतिविधेयत्वादय । षष्ठे कर्त्तु रधिकारोमान्यादेरित्यादय । सप्तमेसमानमितरच्छ्येनेनेत्यादिप्र

स्यत्ववचनेनाग्निषोमादिनाम्नानु-
मितवचनेनचसामान्यतीतिदेश ।
अष्टमेसौर्यंचरु निर्वपेद्ब्रह्मवर्चसका-
मस्त्विति नदेवतानिर्देश । ० एकदे
शतस्त्वमौषधद्रव्यकत्वमित्यादिलि
ङ्गैमाग्नेयपुरोडाशोतिकर्तव्यता ना
न्यस्य स्य वमादिर्विशेषतोतिदेश ।
नवमेप्रकृतावग्नयेजुष्टं निर्वपामीति
पठितेमन्त्रे ० विकृतौसौर्यंचरावग्नि
पदपरित्यागेनसूर्यपदप्रक्षेपेणसूर्याय
जुष्टं निर्वपामीत्य्येवमादिरूह ।
दशमेकृष्णलेषुचोदकप्राप्तस्यावघात
स्यवितुषीकरणासम्भवेनलोपइत्य्ये
वमादिर्बाध । एकादशेबहूनामा-
ग्नेयादीनांप्रधानानांसकृदनुष्ठितेन
प्रयाजाद्यङ्गेनोपकार इत्यादित
न्त्रम । द्वादशेप्रधानस्यपशोरुपका-
रायानुष्ठितमप्रयाजाद्यङ्गेनपशुपुरो
डाशेप्युपकारइत्यादिप्रसङ्ग ॥
विस्तर शास्त्र द्रष्टव्य ॥

मीमांस्य । त्रि० विचार्ये ।

मीर । पु० समुद्रे । पानीये ॥ सी
मनि ॥ पर्वतैकभागे ॥ मिनोति ।
डु मिञ् प्रक्षेपणे । शुसिचिमीनां-
दीर्घश्चेतिक्रन् ॥ म्लेच्छजातिभे-
दे ॥ यथा । पञ्चखाना सप्तमीरा
नवयाहाभट्टावला ॥

मीलनम् । न० चक्षुरभिरावरणे ॥ च
मत्कारविशेषे ॥ मीलनवस्तुनाथ

— — रणिरङ्गनम् ॥

मीलित । त्रि० अप्रफुल्ले । सङ्कुचि-
ते ॥ निद्राण मुद्रिते ॥ न० अल
ङ्कारविशेषे ॥ यथा । समेनलक्ष्मणा
वस्तुवस्तुनायन्निगूह्यते । निजेनाग
न्तुनावापितन्मीलितमितिस्मृतम् ॥
सहजमागन्तुकवाकिमपिसाधारण
यल्लक्षण तद्द्वारेणकिञ्चित्केनचिद्व
स्तुस्थिरेणैवबलीयसायात्तिरोधीय-
तेतन्मीलितमितिद्विधास्मरन्ति । क्र
मेणोदाहरणम् । अपाङ्गतरलेदृशौ
मधुरवक्रवर्णागिरोविलासभरमन्थ-
रागतिरतीवकान्तमुखम् । इति
स्फुरितमङ्गकेमृगदृश स्वतो-
लीलयातदत्रनमदोदय कृतपदो
ऽपिसलक्ष्यते ॥ अत्रत्वतरलतादि-
कमङ्गे सहजत्वाभाविकसाधारण-
त्वमदोदयेनतत्राप्यतदृष्टर्शनात् ॥
येकन्दरासुनिवसन्तिसदाहिमाद्रे-
स्त्वत्पातशङ्कितधियोविपक्षाद्विष-
स्ते । अप्यङ्गमुत्पुलकमुद्वहतासक
म्प तेषामहोवतभियानबुधोप्यभि-
ज्ञ ॥ अत्रतुसामर्थ्यादवसितस्य-
शैत्यस्यागन्तुकत्वात्तत्प्रभवयोरपि
कम्पपुलकयोस्तादृप्यम् ० समानता
भयेष्वपितयोरुपलक्षितत्वात्

मीवा । पु० वायौ ॥ उदरकृमौ ॥ मी
वते । मीव् हिंसायाम् । शिवश्च-
हिंसायोवाव्यामीवा । ० उ । तथा

कोजिपातित ॥

मीवर । त्रि० हिंस्रे ॥ मीनाति । मीञ० । छित्वरछत्वरेत्यादिना घ्वरच् ॥

मु । पु० बन्धने ॥ महेशे ॥

मुकु । पु० मुक्तौ ॥

मुकुटम् । न० शिरोभूषणे । किरीट ॥ मङ्कतेऽनेन वा । मकि मण्डने । बाहुलकादुटप्रत्ययोधातोरतश्च ॥

मुकुटी । स्त्री० अङ्गुलिमोटने ॥

मुकुटेश्वरी । स्त्री० माकोटस्थान स्थायादेव्याम् ॥

मुकुन्द । पु० विष्णौ । गरुडध्वजे ॥ मुकुमव्यय मान्तञ्चनिर्वाणमोक्षवाचकम । तद्ददातिचयोदेवोमुकुन्दस्तनकीर्त्तित ब्र० वै० पु० निधिप्रभेदे ॥ रत्नविशेषे ॥ पारदे ॥ कुन्दुरौ ॥ मुक्तिं ददाति । आतोनुपेतिक । पृषोदरादि ॥

मुकुन्दक । पु० षष्टिकव्रीहौ ॥ षष्टिक शतपुष्पश्चप्रमोदकमुकुन्दकौ । महाषष्टिकइत्याद्या षष्टिका समुदाहृता ॥

मुकुन्द । पुं० कुन्दुरौ ॥

मुकुम् । अ० निर्वाणे ॥ भक्तिरसे ॥ प्रेमणि ॥

मुकुर । पु० आदर्शे । दर्पणे ॥ वकुलद्रुमे ॥ कुलालदण्डे ॥ कोरके ॥ मुञ्चतिज्योति ॥ मुच० । बाहुलकादुरच् ॥ यद्वा । मङ्कते मकि० । मकुरदर्दुरावित्युरच् । नलोपश्च । बाहुलकात्पक्षे धातोरुपधायाउकारश्च ॥

मुकुल । पु० न० ईषद्विकासोन्मुखकलिकायाम् । कुड्मले । मुञ्चति कलिकात्वम् । मुचॢमोक्षणे । बाहुलकादुलक् ॥ आत्मनि ॥ शरीरे ॥

मुकुलित । त्रि० निमीलिते ॥

मुकूलक । पु० दन्तिवृक्षे । निकुम्भे ॥ मङ्कते । मकि० । पिञ्छादित्वादूलच् । स्वार्थे कन् । आगमशासनस्यानित्यत्वान्नुम् । पृषोदरादि ॥

मुक्त । त्रि० मोचिते ॥ उत्सृष्टे । त्यक्ते व्यपगतपाशे । विमुक्तमोहादिबन्धने ॥ असक्तोऽद्विष्टश्च मुक्त ॥ निवृत्ताविद्ये । कर्तृत्वभोक्तृत्वाद्यध्यासशून्ये । कल्पितवियदादिप्रपञ्चनिरासाधिष्ठाने ॥ अस्य लक्षणमपियथा । कपालवृक्षमूलानिकुचेलमसहायता । समताचैवसर्वस्मिन्नेतन्मुक्तस्य लक्षणम् ॥ अस्यनमस्काराभावोभगवत्पूज्यपादैर्दर्शितोयथा । नामादिभ्य परेभूम्नि स्वाराज्ये चेत्स्थितोऽद्वये । प्रणमेत्कन्तदात्मज्ञोनकार्यं कर्मयात इतिविद्या यनामरूपाणिनित्ये ब्रह्म

षिनिखले । परिनिश्चिततत्त्वोय समुक्त कर्मबन्धनात् ॥ नमुक्तिर्ज पनाद्धोमादुपवासशतैरपि । ब्रह्मै वाहमितिज्ञात्वामुक्तोभवतिदेहभृत ॥ आत्मासाक्षीविभु पूर्ण सत्योऽद्वैत परात्पर । देहस्थो पिनदेहस्थोज्ञात्वैव मुक्तिभाग्भवेत् बालक्रीडनवत्सर्वं रूपनामादि कल्पनम् । विहायब्रह्मनिष्ठोय स मुक्तोनात्रसंशयइतिश्रीमहानिर्वाणतन्त्रे कुलार्णवसंतौचतुर्दशोल्लासः ॥ मुच्यतेस्म । मुच्लृ० । क्त ॥

मुक्तकञ्चुक । पु० निर्मुक्ते । अचिरत्यक्तनिर्मोकेसर्पे ॥ मुक्तः कञ्चुकोयेन ॥

मुक्तचक्षु । पु० सिंहे ॥ त्रि० मुक्तनेत्रे ।

मुक्तबन्धन । त्रि० त्यक्ताभिमाने ॥ त्यक्तपाशे ॥ मुक्तबन्धनयेनयस्य वा ॥

मुक्तरसा । स्त्री० रास्नायाम् ॥ त्रि० त्यक्तरसे ॥

मुक्तसङ्ग । त्रि० त्यक्तफलाभिसन्धौ ॥

मुक्तस्वाप । त्रि० त्यक्तनिद्रे ॥

मुक्ता । स्त्री० मौक्तिके । कुन्दुरत्ने । मौक्तिके । मोती० कु० भा० प्र० रत्ने ॥ मुच्यतेस्म । मुच्लृ० । क्त. ॥ व्यपगतपाशायां ॥ पुंश्चल्याम् ॥

मुक्ताकलाप । पुं० मुक्ताहारे ॥

मुक्तागारम् । न० शुक्तायाम् ॥ मुक्तायाआगारम्

मुक्तागारा । स्त्री० पुंश्चल्याम् ॥ मुक्तंत्यक्तमगारं ययासा ॥

मुक्तापुष्प । पु० कुन्दवृक्षे । मुक्तेवपुष्पास्य ॥

मुक्ताप्रसू । स्त्री० शुक्तौ ॥ मुक्तायाप्रसूः ।

मुक्ताप्रालम्ब । पु० मुक्ताहारे ॥

मुक्ताफलम् । न० घनसारे । कर्पूरे ॥ लवलीफले मौक्तिके ॥ गजेन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि । मुक्ताफलानिप्रथितानिलोकेतेषान्तुशुक्त्युद्भवमेवभूरि ॥ विशेषोन्यचगरुडपुराणादौद्रष्टव्य । अथवाराहमुक्तलक्षणादिकयथा। द्विपभुजगशुक्तिशङ्खाभ्रवेणुतिमिसूकरप्रसूतानि । मुक्ताफलानितेषांबहुसाधुचशुक्तिजभवति ॥ सिंहलकपारलौकिकसौराष्ट्रिकताम्रपर्णिपारशवा । कौवेर्यपाण्ड्यवाटकहैमकइत्याकरास्त्वष्टौ ॥ बहुसंस्थाना स्निग्धाहंसाभा सिंहलाकरा. स्थूला । ईषत्ताम्रा श्वेतास्तमोवियुक्ताश्चताम्राख्या ॥ कृष्णा श्वेता पीता सशर्करा पारलौकिकाविषमा । नस्थूलानात्यल्पानवनीतनिभाश्चसौराष्ट्राः ॥ ज्योतिष्मन्तशुभ्रागुरवोऽतिमहागुणाश्चपारशवा

सघनअंबरदधिनिभहहदूहिमस्थान मपि हैमम् । विषमकृष्णाश्वं तलघु कौवेयैंप्रमाणतीजोवत् । निम्बफल त्रिपुटधान्यकचूर्णा अणु पाण्डाग टभवा । ६ ॥ एतेषाविशेषमाह । अतसीकुसुमश्यामवैष्णवमैन्द्रंशश।क्क सन्नाशम् । हरितालनिभवारुणम सितयमदैवतभवति ॥ परिणतिदा डिमगुटिकागुञ्जाताम्रञ्चवायुदैवत्य म् । निर्धूमानलकमलप्रभञ्चविज्ञे यमाग्नेयम् ॥ ८ । एतेषांमूल्यपरि ज्ञानार्थमाह । माषकचतुष्टयधृतस्यै कस्यशतान्यतास्त्रिपञ्चाशत् । कार्षा पणानिगदितामूल्य मौक्तोगुणयुतस्य ॥ माषकदलहान्यातोल्याविंशतिघ तिलयोऽयच । अष्टौशतानित्रशतत्र त्रिपञ्चाशतासहितम् ॥ पञ्चचश कृतमिति॰ चत्वार क्रमालानवति मूल्या । सा र्द्धास्त्रिगुञ्जा सप्त तिमूल्याशतरूपम् । गुञ्जाचयस्यमू ल्य पञ्चाशद्रूपकागुणयुतस्य । रूपक पञ्चत्रिंशत्त्रयस्यगुञ्जार्धहीनस्य॥ १२ अन्यन्मूल्यपरिज्ञानमाह । पलदश भागोधरणतद्यदिमुक्तास्त्रयोदशसङ्ख्या । त्रिशतीसपञ्चविंशारूपकस ङ्ख्याक्रतं मूल्यम् ॥ षोडशकस्य हि शतीविंशतिरूपञ्चसप्तति सङ्ख्या । य पञ्चविंशतिधृतस्तस्यशत त्रिंशतासहितम् ॥ त्रिंशतिसप्त



तिमूल्यचत्वारि शच्छताङ्गं मूल्यञ्च । षष्टि पञ्चोनाशाधरण पञ्चाष्ट कमूल्यम् । मुक्ताशीत्यास्त्रि शच्छत स्यसापञ्चरूपकात्रिंशोना । द्विविंश तुष्पञ्चशतादशषट् पञ्चकत्रितय म् ॥ १६ । अथत्रयोदशाद्यानांध रणानासञ्ज्ञार्थमाह । पिक्का॰पि च्चार्घाऽर्धखसिक्था त्रयोदशाद्याना म् । सञ्ज्ञा परतोनिगराश्चूर्णा श्चाशीतिपूर्वाणाम् ॥ १७ ॥ एता श्चाकरस्थानिव्यवहारार्थं सुपयुज्यन्ते ॥ अथैतेषांमूल्यपरिज्ञानार्थंमाह । एतद्गुणयुक्तानांधरणधृतानांप्रकी र्तितं मूल्यम् । परिकल्प्यमन्तरा लेहीनगुणानांव्यय कार्यं ॥ कृष्णाश्वे तकपीतकताम्राणामीषद पिचविषमाणाम् । त्र्यंशोन विषम पीतयोश्चषट्भागदलहीनम् ॥१८ ॥ गजमुक्ताफललक्षणमाह । ऐरा वतकुलजानांपुष्यश्रवणेन्दुसूर्यदि वसेषु । येचोत्तरायणभवाग्रहणेर्के न्दोश्चभद्रभा । ॥ तेषांकिलजा यन्ते मुक्ता कुम्भे सुरदकोशेषु । बहवोबृहत्प्रमाणाबहुसंस्थाना प्रभायुक्ता ॥ नैषामर्घं कार्योन चवेधोऽतीवता , प्रभायुक्ता । सुतविजयारोग्यकरा महापवित्रा धृताराज्ञाम् ॥ २ ॥ अथवाराहलि ङ्गमौक्तिलक्षणम् । दंष्ट्रामूलेशशि

कान्तिसप्रभं बहुगुणञ्च वाराहम् ।
तिमिजमत्स्याक्षिनिभं हृद्यत्पवित्र
विजयदञ्च ॥ २३ । मेघसम्भूतस्य
मुक्ताफलस्य लक्षणम् ॥ वर्षोपलवद्
जात वायुस्कन्धाच्च सप्तमाद्भ्रष्टम् ।
ह्रियते किल खाद्दिव्यैस्तडित्प्रभं
मेघसम्भूतम् ॥ २४ ॥ अपि च ।
तक्षकवासुकिकुलजा कामगमा
ये च पन्नगास्तेषाम् । स्निग्धानीला
द्युतयो भवन्ति मुक्ता फणप्रान्ते ॥
शस्तेऽवनिप्रदेशे रजतमये भाजने
स्थिते च यदि । वर्षति देवोऽकस्मा
त्तज्ज्ञेयं नागसम्भूतम् ॥ अपहरति
विषमलक्ष्मीं क्षपयति शत्रून्यशो वि
काशयति । भौजङ्गं नृपतीनां धृत
मकृतार्घं विजयदञ्च । २७ । वेणुश
ङ्खोद्भवस्य लक्षणमाह । कर्पूरस्फटि
कनिभं चिपिटं विषमञ्च वेणुजं ज्ञेय
म् । शङ्खोद्भवं शशिनिभं वृत्तं भ्राजि
ष्णु रुचिरञ्च ॥ २८ । एतेषां परि
भाषाञ्चामार्घमाह । शङ्खतिमिवेणु
वारणवराहभुजगाभ्रजान्यवेध्यानि
। अमितगुणत्वाच्चैषामर्घः शा
स्त्रे न निर्दिष्टः ॥ २९ । एतेषां प्र
शस्तार्घमाह । एतानि सर्वाणि महा
गुणानि सुतार्थसौभाग्ययशस्कराणि
। रुक्शोकहन्तॄणि च पार्थिवानां मुक्ता
फलानीप्सितकामदानि ॥ ३० ॥
मुक्तारचितानामाभरणानां स्वा

ख्या । सुरभूषणं लतानाम स्रक्स
ष्टोत्तर चतुःशतम् । इन्द्रच्छन्दोना
म जिनयच्छन्दस्तदर्द्धेन ॥ शतमष्ट
युतं हारो देवच्छन्दो ह्यशीतिरेकयु
ता । अष्टाष्टकोऽर्द्धहारो रश्मिकलाप
श्च नवषट्का ॥ द्वात्रिंशता तु गु
च्छो विंशत्या कीर्त्तितोऽर्द्धगुच्छाख्यः
षोडशभिर्माणवको द्वादशभिश्चा
र्द्धमाणवकः । मन्दरसंज्ञोऽष्टाभि
पञ्चलता हारफलकमित्युक्तम् सप्ता
विंशतिमुक्ताहस्तो नक्षत्रमालेति ॥
अन्तरमणिसंयुक्ता मणिसोपानं सुव
र्णगुलिकैर्वा । तरलकमणिमध्यग
तो विज्ञेयः स चाटुकाकारमिति
एकावली नाम यथेष्टसंख्या हस्तप्रमा
णा मणिविप्रयुक्ता । संयोजिता या
मणिना तु मध्ये यष्टीति सा भूषणविद्भि
रुक्ता ॥ ३६ ॥ इति वाराहसंहि
ताया ७८ अध्याय ॥ वोपदेवकृते
ग्रन्थविशेषे ।

मुक्तामुक्त । त्रि॰ क्षिप्ताक्षिप्ते ॥ अ
स्त्रयोगेऽस्त्रे शस्त्रप्रायो वर्त्तते ॥

मुक्तामोदक । पु॰ मोतीचूर॰ मोती
लाड्डु इति ख्याते ॥ मुद्गानां धू
मसीं सम्यग् घृते तैले निमज्ज्य वा ।
कटाहस्थं घृतं शुद्धं भर्ज्जनं स्थापये
त्ततः । धूमसीं तु द्रवीभूतां प्रक्षिपे
च्छुक्तर्करोपरि । पतति बिन्दवस्त
स्मात् कुपकास्तान् समुद्धरेत् । सि

तापःकीनस यैव्यकुर्याद्युक्त्यातुमो दकान् । लघुर्यातिचिदोषघ्न स्वादु शीतोरुचिप्रद चक्षुष्यो ज्वरहृद्वल्यस्तर्पणो मुद्गमोदक ॥

मुक्तालता । स्त्री॰ मुक्ताहारे ।

मुक्तावली । स्त्री॰ मुक्तामालायाम् मुक्तानामावलीदार्घा रूढि ॥

मुक्तास्फोट । पु॰ शुक्तौ । मुक्तोत्पादिकायांशुक्तौ ॥ मुक्ता स्फुटन्त्य स्मात् । इत्वर्थेतिघञ् ॥

मुक्तास्फोटा । स्त्री॰ शुक्तौ ॥

मुक्ति । स्त्री॰ कैवल्ये । निर्वाणे । श्रेयसि नि श्रेयसे । अमृते । मोक्षे । अपवर्गे । स्वरूपावस्थाने । अज्ञाननिवृत्तिलक्षणायांमसिद्धौ ॥ मुक्तौतमोतिरेकेणनान्तराये।न्यइष्यते । यतोतोऽज्ञानविध्वस्तौमुक्त सन्नेवमुच्यते ॥ साचपुण्यैर्विनानलभ्यतेइत्याहुराचार्या यथा । जन्तूनानरजन्मदुर्लभमत पुस्त्वं ततोविप्रतातस्माद्वैदिकधर्ममार्ग परता विद्वत्त्वमस्मात्परम् । आत्मानात्मविवेचन स्वनुभवोब्रह्मात्म नासंस्थितिर्मुक्तिर्नोशतकोटिजन्म सुकृते पुण्यैर्विनालभ्यतेइति ॥ मोचनम् । मुच्लृमोक्षणे । भावे क्तियाक्तिन् । मुक्ति पञ्चविधेति पौराणिका । यथा सालोक्य सामीप्यसारूप्य साष्टर्य सायुज्यमित्य । कै वल्य चेतितविद्धिमुक्ति राघवपञ्च धा ॥ अपिच । साष्टिसारूप्यसालो क्यसामीप्यैकत्वमप्युत । दीयमान नगृह्णन्तिविनामत्सेवन जना ॥ इतिभागवतम् ॥ मुक्तिस्तुद्विवि धासाद्यिमुख्य । सर्वसम्मता । नि- र्वाणपददाचौपहरिभक्तिप्रदानृणाम् ॥ हरिभक्तिस्वरूपास्सुमुक्तिवाञ्छन्ति वै ष्णवा । अन्यनिर्वाणरूपाञ्चमुक्ति मिच्छन्तिसाधव । इ॰ब्र॰वै॰पु॰ ॥ आत्यन्तिकदु खनिवृत्तिरितिनै- यायिका ॥ प्रकृतिपुरुषयोर्विवे- काग्रहणान्मुक्तिरितिसाङ्ख्या ॥ प्रकृतावुपरतायापुरुषस्वरूपेणावस्था नमुक्तिरितिसाङ्ख्यसिद्धान्त ॥

मुक्तिद । त्रि॰ कैवल्यप्रद ।

मुक्तिदा । स्त्री॰ गुरुवाचि ॥

मुक्तिभाक् । त्रि॰ मुमुक्षौ । मुक्ताधि कारिणि ॥ ब्रह्मज्ञानादृतेदेविक- र्मसन्न्यसनविना कुर्वन्कल्पश तकर्मनभवेन्मुक्तिभाग्जन ॥

मुक्तिमण्डप । पु॰ काश्याविश्वेश्वर स्यदक्षिणपार्श्वस्थमण्डपे ॥ यथा । निमेषमात्र स्थितचित्तवृत्ताक्तिष्ठन्ति येदक्षिणमण्डपेच । अनन्यभावाश्च पिगाढमानसानतेपुनर्गर्भदशांसुपर यन्ति ॥

मुक्तिमुक्त । पु॰गन्धद्रव्यविशेषे । तु- रुष्के । सिह्लके । सिलारस॰कोषा

थयावचनपर ॥ निरन्तरभाषिणि ॥ म ख वागस्यास्ति । पूर्ववद्र ॥ शब्दायमाने ॥ यथा । मुखरश्रृङ्खलकर्षि घङ्गति ॥ पु० काके ॥ म क्कें ।

मुखरता । स्त्री० वाचालतायाम् ॥ भावे तल् ॥

मुखरिका । स्त्री० वचनी ॥

मुखरित । त्रि० कीर्त्तिते ॥ प्रकटिते ॥ यथा । सम्मुखरितम् ॥

मुखरोग । पु० वक्त्रामये ॥ मुखरोगाणांनिदानं यथा । अनूपपिशित क्षीरदधिमाषादिसेवनात् । मुखमध्यगदान्कुर्युः क्रुद्धादोषाकफोत्तरा सर्वासङ्ख्यायथा । स्युरष्टावोष्ठयोर्दन्तमूलेतुदशषट् तथा । दन्तेष्वष्टौरसनायांपञ्चस्युर्नवतालुनि । कण्ठेत्वष्टादशप्रोक्ताश्चय सर्वसरा स्मृता । एवं मुखामया सर्वे सप्तषष्टिर्मतावुधैः ॥ तक्षुन्नीयकगोक्षुरमूलं पीतं पयोन्वितम् । कामलादिज्वरं प्रोक्तं मुखरोगहरं तथा । शुष्कमूलकशुण्ठीनांक्षारोहिङ्गुलनागरम् । शुष्कचतुर्गुणं दद्यात्तैलमेतं विपाचयेत् ॥ बाधिर्यंकर्णशूलंचपूयस्रावश्चकर्णयोः । पूयस्रावस्तैलमनय कर्णयोः ... क्षिप्रं विनाशमायाति सर्वमुक्तमदिदं ... 

श्रेष्ठमुखदन्तामयापहम् ॥

मुखलाङ्गल । पु० शूकरे । कोले । भूदारे ॥ मुखलाङ्गलं यस्य ॥

मुखवल्लभ । पु० दाडिमवृक्षे ॥ त्रि० मुखप्रिये ॥

मुखवाचिका । स्त्री० अम्बष्ठायाम् ॥

मुखवाद्यम् । न० वक्त्रनालवाद्ये । शांखइति गौ० भाषाप्रसिद्धे ॥ मुखस्य० मुखेनचवाद्यं ॥

मुखवास । पु० गन्धद्रव्ये ॥

मुखवासन । पु० मुखसङ्गन्धकारकद्रव्ये । आमोदिनि ॥ मुखंवासयति । वस० । नन्द्यादित्वाल्ल्युः ॥

मुखविलुण्ठिका । स्त्री० अजायाम् । छाग्याम् ॥

मुखविष्ठा । स्त्री० तैलपायिकायाम् ॥

मुखशफ । पु० दुर्मुखे ॥

मुखशुद्धि । स्त्री० वक्त्रशोधने ॥ यथा । अभावेदन्तकाष्ठानांप्रतिषिद्धदिनेतथा । अपांद्वादशगण्डूषैर्मुखशुद्धिर्विधीयते ॥

मुखशोधन । पु० कटुरसे ॥ न० त्वचे ॥

मुखशोधी । स्त्री० जम्बीरे ॥

मुखशील । त्रि० दुर्मुखे ॥

मुखसम्भव । पु० ब्राह्मणे ॥ मुखात्सम्भवोऽस्य ॥

मुखसिद्ध । पु॰ मुखकम्मणिसिद्धे ॥ यथोक्तं रैवतोत्तरे । स्वक्षाधरोष्ठसितपङ्क्तिललाभिरामफल्कारवायुपदमुन्नतकम्बुरामम । नीत्वोपकण्ठमुखमवलीढसाम्यमग्र यत्तुष्कसमयेमुखसिद्धिमाहुरिति ॥

मुखसरम् । न॰ तालव्याम् । स्वरासवे । ताडी॰ हू॰ प्रसिद्धमद्ये ॥ गण्डूषमद्ये ॥ मुखस्थसुरा । बिभाषासे नासुरेतिक्षीवता ॥

मुखस्राव । पु॰ लालायाम् । ला॰ हू॰ भा॰ ॥

मुखाग्नि । पु॰ दावाग्नौ ॥

मुखामय । पु॰ मुखरोगे ॥

मुखार्जक । पु॰ अर्जके । श्वेतपर्णासे ॥

मुखास्त्र । पु॰ कर्कटे ॥

मुखाल्का । स्त्री॰ दावाग्नौ । भूतसम्बाधायाम्

मुख्य । पु॰ आद्यविधौ । शास्त्रोक्तप्रथमकल्पे ॥ यथा व्रीहिभिर्यजेत । श्रुतिमात्रं यत्राश्रुततादर्थ्यमवसीयते । तं मुख्यमर्थं मन्यन्ते । त्रि॰ श्रेष्ठ । वरे ॥ प्रधाने ॥ मुखमिव । शाखादित्वाद्य ॥ मुखोत्पन्ने ॥ मुखेभव । दिगादित्वाद्यत् ॥

मुख्यक्रम प॰ प्रमाणविशेषे । प्रधानक्रमेणयेषाङ्गानांक्रम समुख्यक्रम येनहिक्रमेणप्रधानानिक्रियन्ते तेनैवक्रमेण तेषामङ्गान्यनुष्ठीयन्ते तदासर्वेषामङ्गानाम्स्वे स्वे प्रधानैस्तुल्य व्यवधानभवति । व्युत्क्रमेणानुष्ठानेकेषाञ्चिदङ्गानाम्स्वे प्रधानैरत्यन्तमव्यवधानम् केषाञ्चिदत्यन्त व्यवधानस्यात् । तथायुक्तम् । प्रयोगविध्यवगतसाहित्यबाधापत्ते । अत प्रधानक्रमाप्यङ्गक्रमेहेतु । अतएवप्रयाजशेषेणाघारावाग्नेयद्याविधाभिघारणम् यथाऐन्द्रस्यदध्न । आग्नेयैन्द्रयागयो पौर्वापर्यात् । एवञ्चद्वयोर्द्वयोरभिघारणयो स्वस्वप्रधानेनतुल्यमेकान्तरितव्यवधानम् । व्युत्क्रमेणाभिघारणे चाग्नेयहविरभिघारणाग्नेययागयोरत्यन्तमव्यवधानम् । ऐन्द्रदध्यभिघारणैन्द्रयागयोर्द्व्यन्तरित व्यवधान तथायुक्तमित्युक्तमेव । सचमुख्यक्रम पाठक्रमाद्दुर्बल । मुख्यक्रमोहिप्रमाणान्तरसापेक्षप्रधानक्रमप्रतिपत्तिसापेक्षतयाविलम्बितप्रतिपत्तिक । पाठक्रमस्तुनिरपेक्षत्वाऽध्यायपाठक्रममात्रसापेक्षतयाप्रबलवान् । प्रवृत्तिक्रम बलवान् । प्रवृत्तिक्रमेणबहूनामङ्गानाप्रधानविप्रकर्षात् । मुख्यक्रमेतुसन्निकर्षात् ॥

मुख्यसर्ग । पुं॰ स्थावरसृष्टौ ॥ मु-

ब्यसर्गश्चतुर्थस्तु मुख्या नैष्यावरा
स्मृता इ॰ वराहपुराणात् ।
मुख्यार्थ । पु॰ शब्दश्रवणमात्रावग
म्यार्थे यथा । श्रुतिमात्रेण यत्रा-
स्यतादर्थ्यमवसीयते । तं मुख्यमर्थं
मन्यन्ते गौणं यत्नोपपादितम् ॥ प्र
तिपाद्यार्थे ॥
मुगूह । पु॰ दात्यूहपक्षिणि ॥
मुग्ध । पु॰ भिक्षुकविशेषे ॥ यथा ।
सान्निध्ये विषयाणामसमर्थोऽविक
लेन्द्रियः । सुप्तवद्वर्त्तते नित्यं भिक्षु
र्मुग्धः स उच्यते ॥ त्रि॰ रम्ये । सु
न्दरे मूढे विवेकविकले विप
यस्त श्रुत्यर्थपरिशीलनविधुरे
नवे
मुग्धा । स्त्री॰ नायिकाप्रभेदे उदय
द्यौवना मुग्धा लज्जाविजितमन्मथा ।
इ॰ लक्षणम्
मुचिर । त्रि॰ दातरि ॥ मुञ्चति । मु
च्लृ॰ । इषिमदिमुदीत्यादिना कि
रच् ॥ पु॰ धर्म्मे ॥ वायौ । देवे ॥
मुचुकुन्द । पु॰ मान्धातृनृपस्य पु
त्रे ॥ पुष्पवृक्षविशेषे । क्षत्रवृक्षे ।
चित्रके । प्रतिविष्णुके । मचकन्द-
फूल॰ इ॰ भा॰ । मुचुकुन्दः शिर
पीडापित्तास्रविषनाशनः ॥
मुचुटी । स्त्री॰ मुकुल्याम् । मुष्टौ ।
मुट्ठी इ॰ भाषा ॥
मुष्कक । पु॰ मुष्कवृक्षे ॥

मुञ्ज । पु॰ तृणविशेषे । ब्राह्मण्ये ।
बाणे । स्थूलदर्भे । मूंज इ॰ भा॰ ॥
मुञ्जद्वयन्तु मधुरं तुवरं शिशिरं तथा ।
दाहतृष्णाविसर्पास्रमूत्रवस्त्यक्षिरोग
जित् । दोषत्रयहरं वृष्यं मेखलासूप
युज्यते ॥ मुञ्जद्वयम् । मुञ्जभद्रमु-
ञ्जौ ॥
मुञ्जकेशी । पु॰ विष्णौ ॥
मुञ्जरम् । न॰ शालूके ॥
मुञ्जातक । पु॰ मुञ्जे ॥ पुष्पशा-
कप्रभेदे ॥
मुञ्जावट । पु॰ तीर्थविशेषे ॥ य-
त्र महादेवस्तिष्ठति ॥ तीर्थान्तरे ॥
मुण्ड । पु॰ दैत्यविशेषे राहुग्रहे ॥
मुण्डितसमस्तशिरःकेशब्रह्मचा-
रिविशेषे ॥ सशिखकेशश्मश्रुरहिते
परिव्राजि ॥ नापिते । स्थाणुद्रौ
पु॰न॰ मूर्द्धनि न॰ वोले ॥ मुण्डा
यसि ॥ त्रि॰ मुण्डिते ॥ मुण्ड्यते ।
मुण्डिखण्डने । घञ् ॥
मुण्डक । पु॰ नापिते ॥ न॰ मस्त-
के ॥ उपनिषद्विशेषे ।
मुण्डचणक । पु॰ कलाये ॥
मुण्डनम् । न॰ वपने । परिवाप
ने । क्षौरे । केशच्छेदने ॥ मुण्डन
ञ्चोपवासश्च सर्वतीर्थेष्वयं विधिः । व
र्जयित्वा गयां गङ्गां विशालां विरजां
तथा ॥ मुडि॰ । ल्युट् ॥
मुण्डफल पु॰ नारिकेलवृक्षे ॥

मुण्डाकाराणिफलानियस्य सः । मुण्डे फलानियस्यवा ॥

मुण्डमांसम् । न० मुण्डामिषे । तस्यपाकप्रकारो यथा । समयं विदह्य मुण्डमनिनास्थूलपेतिना । प्रक्षाल्यतप्तपानीये लोमान्यपिच घर्षयेत् ॥ खण्डयित्वापचेत्तैले घृते वोपस्करान्विते ॥ मुण्डामिषं वातहरं स्निग्धं गुरुतरं स्मृतम् । पथ्योयं स्त्रियम्मुण्ड तन्मांसं कगुणावहम् ॥

मुण्डशालि । पुं० शालिप्रभेदे ।

मुण्डनवी । त्रि० शूके ॥

मुण्डा । स्त्री० मुण्डीरिकायाम् ॥ मुण्डितशिरस्कायांस्त्रियाम् ॥

मुण्डाख्या । स्त्री० महाश्रावणिकायां ॥

मुण्डायसम् । न० लौहे ॥

मुण्डितम् । न० लौहे ॥ त्रि० परिवापिते । मुण्डितमुण्डे ॥ मुण्डास्य । मुण्डि० । क्त ॥

मुण्डितिका । स्त्री० मुण्डीर्याम् । कदम्बपुष्पायाम् ॥

मुण्डी । पुं० नापिते ॥ मुण्डं करोति । मुण्डमिश्रेतिणिच् । तस्मादिन्त्वाणिनि ॥ मृङ्गीनेमृगविशेषे । योरगः मृङ्गीन स्यात्समुण्डीतिनिगद्यते ॥ मुण्डीतुम्बरकास्यामवयस्यासापझोहिम ॥

मुण्डिनिका । स्त्री० श्रावण्याम् । मुण्डीर्याम् ॥

मुण्डी । स्त्री० मुण्डायाम् । गोरखमुण्डीतिख्यातौषधौ ॥ मुण्डीतिक्ताकटुः पाकेवीर्योष्णामधुरालघु । मेध्यागण्डापचीकृच्छ्रक्रमियोन्यर्त्तिपाण्डुनुत् ॥ श्लीपदारुच्यपस्माररप्लीहमेदोगुदार्त्तिहृत् । महामुण्डीच मुण्डीवद्गुणैरुक्ता महर्षिभि ॥

मुण्डीरिका । स्त्री० मुण्डायाम् ॥

मुत्०द् । स्त्री० हर्षे ॥ मोदनम् । मुदहर्षे । सम्पदादित्वात्क्विप् ॥ हरिनामौषधौ ॥

मुदा । स्त्री० हर्षे । सुखे ॥

मुदित । पुं० समस्याभिद्यौ ॥ त्रि० आनन्दिते । हर्षिते । विहारान्विभि सन्तुष्टे । मुद० । क्त उदुपधादिति० वाक्तित् ॥ न० आलिङ्गनविशेषे ॥ तल्लक्षण यथा । नायिकयानायकस्यवामपार्श्वेउपविश्यवामपादस्तस्योरुद्वयमध्येस्थापयित्वोभौमिलित्यावदवस्थानमितिकामशास्त्र ॥

मुदिता । स्त्री० हर्षे ॥ पुण्यक्रियेषु मुदितांभावयेत् । पुण्यवत्सुपुण्यानुमोदनेनहर्षं कुर्यात् ० न तु विद्वेष न० कोपेत्याम् ॥

मुदिर । पु० मेघे । कामिके ॥ मोदतेनेन । मुद० । इषिमदिमुदी-

तिकिरच् ॥ कामुकी ॥ भेके ॥

मुद्ग । पु० शमीधान्यभेदे । सूपप्रधाने । रसोत्तमे । भुक्तिप्रदे । श्यामन्दे ॥ मुद्गोरूक्षोलघुर्ग्राही कफपित्तहरो हिमः । स्वादुरल्पानिलोनेत्र्योज्वरघ्नोवनजस्तथा ॥ कृष्णामुद्गो महामुद्गोहरितः पीतकस्तथा । श्वेतोरक्तश्चतेषान्तुपूर्वं पूर्वोलघुः स्मृतः ॥ सुश्रुतेनपुनः प्रोक्तोहरितः प्रवरोगुणैः । चरकादिभिरप्युक्तएषएवगुणाधिकः ॥ मुद्गस्यफलमुद्ग । बिल्वादिभ्योण । तस्य फलपाकेतिलुपियुक्तवद्भाव ॥ यद्वा । मोदयति । मुद० । मुदिग्रोर्गग्गाविति गक् ॥

मुद्गपर्णी । स्त्री० वनमुद्गे । काकमुद्गायाम् । सहायाम् । सूर्प्यपर्ण्याम् ॥ मुद्गपर्णीहिमारूक्षातिक्ताखादुःशुक्रला । चक्षुष्याचतशोथघ्नीग्राहिणीज्वरदाहनुत् ॥ दोषत्रयहरीलघ्वीग्रहण्यर्शोतिसारहृत् ॥ मुद्ग पर्णमस्या । मुद्गशब्देनमुद्गपर्णसदृशलक्ष्यते । पाककर्णेतिङीष ॥

मुद्गभुक् । पु० घोटके ॥

मुद्गभोजी । पु० घोटके । अश्वे ।

मुद्गमोदक । पु० मुक्तामोदके ॥

मुद्गर । पु० लोष्टादिभेदने ॥ कर्मारवृक्षे ॥ मोगरा० इ० भा० प्र० पुष्पवृक्षविशेषे । मत्स्यसारे । समपये । चतिगर्भे । जनेष्टे । खनामख्यातप्रसिद्धे० अस्त्रविशेषे । द्रुघणे ॥ कोरके ॥ न० मल्लिकाप्रभेदे ॥ गिरति । गृनिगरणे । अच् । मुद्गोगरः ॥

मुद्गरक । पु० कर्मारवृक्षे । कमरख इतिभाषा ॥

मुद्गल । पु० गोत्रकारकेमुनिविशेषे ॥ इयंश्वराजपुत्रे ॥ न० रोहिषतृणे ॥

मुद्गवटक पु० । मूगबरा० इतिलोकप्रसिद्धे ॥ मुद्गानांवटकास्तक्रे मज्जिताः लघवोहिमाः । सस्कारजप्रभावेणत्रिदोषशमनाहिताः ॥

मुद्गवटिका । स्त्री० मु गौडी इ० लोकप्रसिद्धवटिकायाम् ॥ मुद्गानांवटिकाः स्वाद्व्यश्चितासाधितास्तथा । पथ्यारुच्यास्ततोलघ्व्योमुद्गसूपगुणाः स्मृताः ॥ तद्वत्० माषवटीवत् ॥

मुद्गार्द्रकवट । पु० वटकविशेषे । अदेवरा० इ० भा० ॥ आदावडा० इ० गौ० भा० ॥ मुद्गपिष्टाविरचितान् वटकांस्तैलपाचितान् । हस्तेनचूर्णयेत्सम्यक्तस्मिन्नूर्णे विनिक्षिपेत् ॥ भृष्टहिङ्ग्वार्द्रकसूक्ष्ममरिचजीरकंतथा । निम्बूरसयवानीभ्यां युक्तासर्वंविमिश्रयेत् ॥ मुद्गपिष्टीं पचेत्सम्यक्स्थाल्यामास्तारकोपरि । तस्यास्तुगोलकान्कुर्यात्तन्मध्ये पूरणं क्षिपेत् ॥ तैलेतानगोलकान्पक्त्वाक्वाथितायांनिमज्जयेत् । गोल-

का पाचकी प्रोक्तास्ते स्वादूकाव टाश्रपि ॥ मुद्राद्रंकवटारुच्या लघवोबलकारका । दीपना स्तर्पणापथ्या स्निग्धु दीर्ष षु पूजिता ॥

मुद्रा । स्त्री० प्रत्ययकारिण्याम् । छा प० इ० भाषाप्रसिद्धायाम् ॥ मोद तेऽनया । मुद० । स्फायितश्चीति रक् ॥ चिन्हे ॥ पञ्चविधलिप्यन्तर्गतलिपिविशेषे छापा अक्षर इति भा० प्र० ॥ यथोक्तं वाराहीतन्त्रे मुद्रालिपि शिल्पलिपिर्लिपिर्लेखनिसम्भवा । गुण्डिकाघुणसम्भूतालिपय पञ्चधास्मृता एताभिर्लिपिभिर्व्यासाधरित्रीशुभदास्त्विति ॥ मुण्डमालातन्त्रे पियथा । लेखन्या लिखितं विप्रैर्मुद्राभिरङ्कितं स्वयत् । शिल्पादिनिर्मितं तथक्षपा . ठ्य धार्यंश्च सर्वदा ॥ इ० ॥ लोकप्र सिद्धा०स्वर्ण रौप्यमुद्रकयो ॥ पु राणायुक्त्या०शरीरेधारणीयेभगव तश्चायुधादिचिह्ने ॥ क्षणायुधाङ्कितदेहगोपीचन्दनमृत्स्नया । प्रयागादिषु तीर्थेषु लगत्त्वाकिंकरिष्यति ॥ यद्दायस्यप्रपर्ष्यं तदेहशङ्खादिचिह्नितं । तदातदाजगत्सुमी तुष्टोहरतिपातकम् ॥ भवतेयस्यदेहेतु अहोरात्रं दिनेदिने । शङ्खच क्रगदापद्म लिखितसोऽच्युत . स्वयं ॥ नारायणायुधैर्युक्त कृष्णात्मा नकलौयुगे । कुरुतेपुण्यकर्माणिमेरुतुल्यानितस्यवै ॥ शङ्खादिनाङ्कितोभूत्वाश्राद्धं यः कुरुतेद्विजः । विधिहीनन्तुसम्पूर्णं पितॄणाञ्चगयासमम् यथाग्निर्दहतेकाष्ठं वायुनाप्रेरितोभृशम् । तथादहन्तिपापानि दृष्टाकृष्णायुधानिवै ॥ देवताप्रीति जनिकाङ्गुलिरचनायाम् ॥ मोदनात्सर्वदेवानाद्रावणात्पापसन्तते । तस्मात्मुद्रेतिसाख्याता सर्वकामार्थसाधनी ॥

मुद्राङ्कित । त्रि० मुद्रिते । मुद्रया चिह्निते । मोहरकियो० इ० भा० प्र० ॥

मुद्रालिपि । स्त्री० पञ्चधालिप्यन्तर्गतलिपिविशेषे । छापेकाअक्षर० इतिभाषा ॥

मुद्रिका । स्त्री० स्वर्णरूप्यादिनिर्मितमुद्रायाम् ।

मुद्रित । त्रि० अप्रफुल्ले । अकुचिते । निद्राणे । मीलिते । मुदा० इ० भा० ॥ मुद्राङ्किते ॥

मुधा । अ० व्यर्थे ॥ मुह्यति । मुह वैचित्त्ये । काप्रत्यय । पृषोदरादित्वात्हस्यधः ॥

मुनि । पुं० वशिष्ठादौ ॥ वाचयमे । मौनिनि ॥ ज्ञानातिशयवति ॥ मननशीले । विवेकिनि । समन्या

सिनि। परमार्थतत्त्वस्यमननान्मु निरितिशास्त्रकृताव्युत्पत्तेर्नेतरो जन। शास्त्रविदपितत्त्वज्ञानाभावात्। सदामननशीलोयोजीवन्मुक्तामुनि सहि। स्थितप्रज्ञादिभिशब्दैर्मोक्षशास्त्रेषुवर्ण्यते॥ दुःखेष्वनुद्विग्नमना सुखेषु विगतस्पृहः। वीतरागभयक्रोध स्थितधीर्मुनिरुच्यते॥ मौनान्नमुनिर्भवतिनारण्यवसनान्मुनि। स्वलक्षणन्तुयोवेदसमुनि श्रेष्ठउच्यते॥ अगस्त्ये॥ बुधे॥ मन्यते। मनज्ञाने। मनेरुच्चतीन्० उपधाया उत्वञ्च। किदित्यनुवृत्तेनाद्गुण॥ वङ्कसेने। अगस्त्यद्रुमे॥ अर्हति। पियाले किंशुके॥ दमनकवृक्षे॥ सप्ताङ्के॥

मुनिखर्जूरिका। स्त्री० खर्जूरीप्रभेदे॥

मुनिच्छद। पु० सप्तच्छदवृक्षे॥

मुनितरु। पु० वकवृक्षे

मुनिद्रुम। पु० वकपुष्पे। वङ्कसेने। अगस्तिया० इ० भा० प्र० वृक्षे॥ श्योनाकवृक्षे॥ मुनिसत्त्वकीद्रुम,। शाकपार्थिवादि॥

मुनिनिर्मित। पु० डिण्डिशे। डिडसी० टिडा० इ० प्र० फलशाके॥ मुनिनानिर्मित॥

मुनिपिप्पलम्। न० ताम्रे॥

मुनिपुत्र। पु० दमनकद्रुमे॥ ऋषिसुते॥

मुनिपुत्रक। पु० भद्रनामनि। खञ्जने॥

मुनिपुष्प। पु० अगस्तिद्रुमे॥ न० अगस्त्यपुष्पे।

मुनिपूग। पु० रामपूगे। कामीने॥

मुनिभेषजम्। न० आगस्त्यहरीतक्याम्। अगस्तिपथ्यायाम्॥ लङ्घने॥

मुनिव्रत। त्रि० उपशान्ते॥ मुनीनांव्रतमस्य॥

मुनिसुव्रत। पु० सुव्रताख्येवुद्धभेदे॥

मुनिस्थानम। न० आश्रमे॥

मुनीन्द्र। पु० श्रीघने। वुद्धे। जिने॥ मुनिष्विन्द्र श्रेष्ठ॥

मुन्यन्नम्। न० नीवारादौ॥ मुनेर्वानप्रस्थस्य अन्नम्॥

मुमुक्षु। पु० यतौ। ससारान्यिभेदनैकतप्रयत्ने। साधनचतुष्टयसम्पन्ने॥ यथा। काव्यनाटकतर्कादीनभ्यस्यतिनिरन्तरम्। विजिगीषुर्यातद्वन्मुमुक्षु स्वविचारयेदिति॥

मुमुक्षुता। स्त्री० मोक्षेच्छायाम्॥ ससारवन्धनिर्मुक्ति कथस्यान्मेकथाविधे। इतियासुदृढावुद्धिर्

त्व्यासामुमुक्षुता ॥ मुमुक्षोर्भाव तल् ॥

मुमुक्षुत्वम् । न० मुमुक्षुतायाम् ॥ वैराग्यञ्चमुमुक्षुत्व तीव्र यस्यतुवि द्यते । तस्मिन्नेवार्थवन्त स्यु फलवन्त शमादय ॥ मोक्षेच्छा मोक्षविषयेच्छा० तद्वत्त्वम मुमुक्षु त्व । भावेतल्व ॥

मुमुक्षान । पु० मेघे ।

मुमुषिष । त्रि० चौरे ।

मुमूर्षु । त्रि० आसन्नमृत्यौ । म र्तुमिच्छो । सन्नन्तात्मृङ , सना श सभिक्षउ ॥

मुर पु० दैत्यविशेषे । मुरति । मुरस वेष्टने । इगुपधत्वात्क ॥ न० वेष्टने ॥

मुरज । पु० मृदङ्गे ॥ मुरयम् । मु र० । तुदादि । घञर्थेकविधान मितिक । मुर वेष्टन जातमस्य ॥

मुरजफल । पुं० पनसवृक्षे ॥ मुरज सदृशानिफलानियस्यस ॥

मुरजबन्ध । पु० चित्रकाव्यविशेषे ॥

मुरण्ड । पुं० लम्पाकदेशे ॥ तद्देश स्थे तुमुरण्डा ॥

मुरन्दला । स्त्री० मुरलानद्याम् ॥

मुरमर्द्दन । पु० विष्णौ ॥

मुररिपु । पं० विष्णौ ॥ मुरस्यरि पु ॥

मुरला । स्त्री० मुरन्दलायांसरिति ॥

मुरली । स्त्री० वशीवाद्ये । वंशिकाया-म् ॥ इतिशब्दरत्नावली ॥

मुरलीधर । पु० श्रीकृष्णे ॥

मुरहा । पुं० केशवे । विष्णौ ॥

मुरा । स्त्री० स्वनामाप्रसिद्धे गन्धद्रव्ये । तालपर्ण्याम् । गन्धकुट्याम् । मुरातिक्ताहिमास्वाद्वीलघ्वीपित्तानि लापहा । ज्वरास्रगभूतरक्षोघ्नीकुष्ठ कासविनाशिनी । मुरति । मुर० । इगुपधत्वात्क टाप् ।

मुरारि । पु० श्रीकृष्णे ॥ मुरस्यअ-रि । मुर क्लेशचसन्तापेकर्मभो गेअकर्मिणाम् । दैत्यभेदेप्यरिस्ते-षामुरारिस्तेनकीर्त्तित ॥

मुरु । पु० लोहविशेषे ॥

मुर्मिणी । स्त्री० अङ्गारधान्याम् ॥

मुर्मुर । पु० तुषवह्नौ ॥ मन्मथे ॥ रविवाजिनि ॥

मुलतान । पुं० देशविशेषे ॥ कार तीयासमारभ्यहिङ्गुलाजान्तक शि वे । मुलतानदेशोदेविशिमचार्मेच्छ परायण ।

मुशटी । स्त्री० सितकङ्गन्याम् ॥

मुशल । पु० न० मुसले । मुशत्यख मेनवा । मुसखण्डने । उज्ज्वलदत्ता दयोमुतालव्यमध्यमाहुस्ततोत्वषादि त्वात्वत्व ॥

मुशलिका । स्त्री० पल्याम् ॥ इतिह लायुध ॥

मुशली । स्त्री० पल्ल्याम् ॥ तालमूल्याम् ॥ इ० राजनिर्घण्ट ॥

मुषल । पु० न० मुसले ॥ मुषत्यनेन । मुषखण्डने० इतिधातोर्वृ न्त्यान्तेषुमूर्द्धन्यान्तेषुचवोपदेशाच्चेयादिभि पठितत्वात्कल ॥

मुषा । स्त्री० मूषायाम् ॥ मुष्णाति । मुषस्तेये । भिदाद्यङ् । टाप् ॥

मुषित । त्रि० वञ्चिते ॥ हृते ॥ खण्डिते ॥ मुष्यतेस्म । मुषस्तेये । क्त ॥ नमुषिताखियप्रेक्षेत । चमुषितेवमुषिताचौरैरितवर्त्तव० नमनेत्यर्थ इतिव्याख्येयम् ॥

मुष्क । पु० अण्डकोषे । वृषणे ॥ मुष्णातिरेत । मुष० । सृवृभूशुषिमुषिभ्य कक् ॥ सङ्घाते ॥ मोचकवृक्षे । मुष्कके ॥ मुष्कहस्तद्विविध श्वेतलक्षणप्रभेदत ॥ तस्करे ॥ मासले ॥

मुष्कक । पु० घण्टापाटली । गोलीढे । मुष्के । भाटले । मोचे ॥ मष्कक कटुकस्तिक्तोग्राहीमुष्णा कफवातहृत् । विषमेदोगुल्मकण्डू वस्तिरुक्कृमिशुक्रनुत् ॥ मुष्णाति रोगम् । मुष कक्वन्तात्० स्वार्थेकन् ॥

मुष्कर । पु० समुष्के । प्रलम्बाण्डे ॥ मुष्कोण्ड । सोस्यास्ति । अष सुषीतिर ॥

मुष्कशून्य । पु० वृषणरहिते । षण्ढे । पण्डे । स्त्रीस्वभावे । महल्लिके । राज्ञोन्त पुररक्षके । खोजा० भाषा ॥

मुष्ट । त्रि० चोरिते ॥ मुषि क्त ॥

मुष्टि । पु० स्त्री० पलपरिमाणे । चारतोला इतिभाषा ॥ बद्धपाणौ । मुट्ठी० इ० भा० । अङ्गुलिसन्निवेशोमुष्टि ॥ यथा । घासमुष्टि परगवेसाह्न्दद्याच्चय सदा । अक्रत्वाक्षयमाहार स्वर्गलोकसगच्छतीतिश्रीमहाभारतम् ॥ त्सरौ । मूठ० इतिभाषा ॥ धान्यमानभेदे । कुञ्च्यष्टभागे । छटाक० इ०भा० । मोषणे । सङ्कोचने । मुष्यतेनया । मुष० । स्त्रियाक्तिन् ॥ यद्वा । मुष्णाति । क्तिच् ॥ प्रहारविशेषे । मुक्कोइतिभाषा ॥ पथिक्षुधार्त्तस्य तिलादीनामुष्टिग्रहणे चौर्याभावो यथा । तिलमुद्गयवादीनामुष्टिर्ग्राह्यापथिस्थितै । क्षुधार्त्तैर्नान्यथा विप्रविधिविज्ञैरितिस्थिति ॥

मुष्टिक । पु० कंसासुरस्यमल्लविशेषे ॥ स्वर्णकारे ॥

मुष्टिकान्तक । पु० बलदेवे ॥ मुष्टिकस्यअन्तक ॥

मुष्टिद्यूतम् । न० चुङ्गके । द्यूतप्रभेदे ॥

मुष्टिन्धय । पु० बालके ॥ मुष्टि ध

यति । धेट् पाने । नाडीमुष्टी श्वेति० खश् । मुम् ॥

मुष्टिबन्ध । पु० सङ्ग्रहे । मुष्टिबन्धनक्रियायाम् ॥ षष्ठीसमासमुष्टिबन्ध ॥ मुष्टेर्बन्ध ॥ मुष्टिनाबन्धोदृढग्रहणं वा ॥

मुसल । पु० न० अयोग्रे । कण्डनीयदण्डे । मूसर० मूसल० हू० भा० ॥ मुस्यत्यनेनवा । मुसखण्डने । वृषादिभ्यश्चेतिकल ॥

मुसली । पु० हलिनि । बलदेवे ॥ मुसलमस्त्यस्य । अतइनिठनाविति ॥ यथोक्तं विष्णुपुराणे जरासन्धयुद्धोद्योगे । हलञ्चबलभद्रस्य गगनाद्गागतं ज्वलत् । मनसोभिमतं विप्रसौनन्दं मुसलं तथेति ॥

मुसली । स्त्री० तालमूल्याम् ॥ तालमूलीतुविद्वद्भिर्मुसलीतिनिगद्यते ॥ मुसलीचद्विधाप्रोक्ताश्वेताचापरसञ्चका । श्वेतास्वल्पगुणोपेता अपराचरसायनी ॥ मुसलीमधुरा वृष्यावीर्योष्णावृंहणीगुरुः । तिक्ता रसायनीहन्तिगुदजान्यनिलं तथा ॥ आखुपर्ण्याम् ॥ गृहगोधिकायाम् ॥ मुस्यति० मुसतिस शय वा । मुस० । वृषादिभ्यश्चिदिकल । जातेरितिगौरादित्वाद्वाङीष् ॥

मुसलीय । त्रि० मुसल्ये ॥ मुसलायहित । विभाषाहविरपूपादिभ्यइतिपक्षेछः ॥

मुसल्य । त्रि० मुसलेनवध्ये ॥ दण्डादिभ्योयत ॥ मुसलीये । मुसलायहित । अपूपादित्वात्पक्षेयत् ॥

मुस्त । पु० न० मुस्तके । मोथा० हू० भा० ॥

मुस्तक । पु० न० मुस्ते । कुरुविन्दे । मेघनामनि । मुस्तायाम् । मोथा० हू० भा० ॥ मुस्तं कटु हिमं ग्राहितिक्तं दीपनपाचनम् । कषायं कफपित्तास्रतृड्ज्वरारुचिजन्तुहृत् ॥ अनूपदेशेयज्जातं मुस्तकंतत्प्रशस्यते । तत्रापिमुनिभिः प्रोक्तं वरं नागरमुस्तकम् ॥ मुस्तसङ्घाते । चु० । ण्वुल् ॥

मुस्ता । स्त्री० मुस्तके । मोथाख्यतृणे ॥ मुस्तयति । मुस्त० अच् टाप् ॥

मुस्ताद । पु० शूकरे ॥ मुस्तामत्ति । अद० । कर्मण्यण् ॥

मुस्ताभम् । न० मुस्तकविशेषे । कुटन्नटे । नागरमोथा० हू० भा० ॥

मस्तु । पु० मुष्टौ ॥

मुस्रम् । न० अश्रुणि ॥ मुस्यति । मुस० । मुसेरक्बाहुलकात् ॥ मुस्रे ॥

मुहिर । पु० कामे ॥ मूर्खे ॥ मुह्यति । मुहवैचित्त्ये । इषिमदि

मुदीयादिर्नामानन्ज ।

मुहुर्भाषा । स्त्री० पुनः पुनः कथने । अनुलापे ॥ मुहुर्भाषणम् । भाष ॰ खञ ॥

मुहुः । अ० पौनःपुन्ये । मोहनम् । मुह ॰ । मुहे किच्चेत्युसि ॥ पुनरर्थे ॥

मुहूर्त । पु० न० द्वादशक्षणात्मके काले ॥ त्रिंशत्कलात्मके काले ॥ द्वदण्डात्मके काले ॥ मुहूर्त्तं घटिकाद्वयमित्युक्तः ॥ अचिपक्ष्मपरिक्षेपो निमेष परिकीर्त्तित । द्वौ निमेषौ त्रुटिर्नाम द्वे त्रुटी तु लव स्मृत ॥ लौ लवौ क्षण इत्युक्त का ष्ठा प्रोक्ता दशक्षणा । त्रिंशत्काष्ठा कला प्रोक्ता कलात्रिंशन्मुहूर्त्तक ॥ पुराणोक्तलक्षणान्तु । रौद्रः श्वेत स्तथा मैत्रस्तत सारभट स्मृत ॥ सावित्रो वैश्वदेवश्च गान्धर्वः कुतपस्तथा । रोहिणस्तिलकश्चैव विजयो निर्ऋतिस्तथा ॥ स वरो वरुण श्चैवभग पञ्चदश स्मृत ॥ इति दिनपञ्चदशभागैकभागे ॥ यथा । प्रात कालो मुहूर्तांस्त्रीन्सङ्गव स्तावदेव तु । मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णस्तत परम् ॥ सायाह्नस्त्रिमुहूर्त्त स्याच्छ्राद्ध तत्र न का रयेत् । राक्षसीनामसा वेला गर्हिता सर्वकर्मसु ॥ हूर्च्छति । हूर्च्छा कौटिल्ये । अस्माल्लिङ्चो मोह श्चिकृञिति निर्दिशात्मुहूर्त्तशब्दो निष्पन्न ॥ अल्पकाले ॥ दिनमुहूर्त्तविशेषे । लक्षणयातदुपलक्षिते काले ॥

मुहिर । त्रि० मूर्खे ॥ मुह्यति । मुह० । मूलेरादयश्चेति साधु ॥

मुह्यमान । त्रि० अनेकानर्थप्रकारै रविवेकतया विक्षिप्तचित्ततया चिन्तामापद्यमाने ॥

मू । स्त्री० बन्धने ॥

मूक । पु० जलशये । मत्स्ये ॥ दैन्ये ॥ त्रि० अवाचि । वर्णानुच्चारके ॥ दीने ॥ मूमितिकायति । कै ० । आतोनुपेतिक ।

मूढ । त्रि० तन्द्रिते ॥ बाले । जड ॥ मूर्खे । यथाजाते ॥ स्वाज्ञानकार्यविपर्ययमोहव्याप्ते ॥ इदम र्थसाधनमिदमनर्थसाधनमितिविवेकशून्ये । अविचारके । अविवेकिनि । अनात्मविदि । तन्द्रादिग्रस्तचित्ते । तमसाच्छन्ने । मोहयुक्ते ॥ चित्तस्यद्वितीयायाम्भूमौ ॥ मुह्यतिस्म । मुह० । गत्यर्थेतिक्त ॥ आकाशादिषु स्थलेषु केचित्तम प्रधानतया मूढा मोहप्रकाशका विषया : गुरुत्व केचिद्विशेषास्ते मूढा कथ्यन्ते ॥

मूढग्राह । पु० अविवेकातिशय

क्लेदुरायहे ॥ याहोयहणम् । मूढ।जायाह ॥

मूढता । स्त्री० अकार्यपरिज्ञानत्वे ॥ अविवेकतायाम् ॥ यथा । यान द्वितीयानगतस्यदेहोदेहेपिचान्य पुरुषोनिविष्ट । ममत्वमुव्या नतथा यथाऽस्मद्देहेऽतिमात्र वतमूढतैषेति ॥

मूढदृक् । त्रि० देहमानिनि । देहमात्मत्वेनाभिमन्यमाने ॥

मूढयोनि । पुं० पश्चादी ॥

मूढा । स्त्री० तामस्यामनसोहस्ती ॥

मूत । त्रि० बद्धे ॥ मूयतेस्म । मूङ् बन्धने । क्त ॥ आलानपाशे ॥

मूत्रम् । न० प्रस्रावे । मूत० पिसाव० हृ० भा० ॥ मूत्र्यते । मूत्रप्रस्रवणे । घञ् ॥ मूत्रमित्याहुरुदकवस्तोस्य जिलनिर्गतम् ॥ यद्वा । मुच्यतेयत् । मुचलृ० । सिविमुच्योष्टेरू चेतिष्ट्रन् ॥ अथास्यगुणा । गोमूत्र कटुतीक्ष्णोष्ण क्षार तिक्त कषायकम् । लघ्वग्निदीपन मेध्य पित्तकृत्कफवातहृत् ॥ शूलगुल्मोदरानाहकण्डूक्षिमुखरोगजित् । किलासगदवातामवस्तिरुक्कुष्ठनाशनम् ॥ कासश्वासापह शोथकामलापाण्डुरोगहृत् । कण्डूकिलासगदशूलमुखाक्षिरोगान्गुल्मातिसारमरुदामयमूत्ररोधान् । कास सकुष्ठजठरक्रिमि पाण्डुरोगान् गोमूत्रमेकमपिपीतमपाकरोति ॥ सर्वेष्वपिचमूत्रेषु गोमूत्र गुणतोधिकम् । अतोविशेषात्कथनेमूत्र गोमूत्रमुच्यते ॥ प्लीहोदरश्वासकासशोथवर्चोग्रहापहम । शूलगुल्मरुजानाह कामलापाण्डुरोगनुत् ॥ कषाय तिक्ततीक्ष्णञ्चपूरणात्कर्णशूलहृत ॥ नरमूत्र गर हन्तिसेवित तद्रसायनम् । रक्तपामाहर तीक्ष्ण सक्षारलवण स्मृतम ॥ गोजाविमहिषीणान्तुस्त्रीणामूत्र प्रशस्यते । खरोष्ट्रेभनराश्वानापुसामूत्र हित मतम् ॥ अथमूत्रपरीक्षा । वातेनपाण्डुर मूत्र रक्तनीलञ्चपित्तत । रक्तमेवभवेद्रक्तादू धवलफेनिलकफाद्दिति ॥

मूत्रकृच्छ्रम् । न० प्रस्रावघटितरोगविशेषे । मूत्ररोधे । अश्मर्याम् । छाक्के ।। मूत्रकृच्छ्रमत्र ॥ अथास्यचिकित्सा । त्रिकण्टकारग्वधदर्भकाशयवासधात्रीगिरिभेदपथ्या । निघ्नन्तिपीतामधुनाश्मरीञ्चसमीपस्थ्योरपिमूत्रकृच्छ्रम् ॥ त्रिकण्टकादिक्काथ ॥ १ ॥ एलाश्मभेदकशिलाजतुगोक्षुराणामेर्वारुबीजलवणोत्तमकुङ्कुमानाम् । चूर्णानितण्डुलजलेलुलितानिपीत्वाप्रत्यग्रमृत्युरपिजीवतिमूत्रकृच्छ्री ॥ एलादिचूर्णम् ॥ २ ॥ अयोरज

सूक्ष्मपिष्टं मधुना सह योजितम् । मूत्रकृच्छ्रं निहन्त्याशु सलीढं दिवसत्रयम् ॥ ३ ॥ गुडेन मिश्रितं क्षीरं कटुष्णं कामतः पिबेत् । मूत्रकृच्छ्रेषु सर्वेषु शर्करायाश्च निश्चयः ॥ ४ ॥ धात्रीरसं चेक्षुरसं पिबेद्वा कृच्छ्रे सरक्ते मधुना विमिश्रम् । शल्याभिघातोत्थितमूत्रकृच्छ्रे कार्या क्रिया मारुतकृच्छ्रतुल्या ॥ ५ ॥ क्वाथो गोक्षुरबीजस्य यवक्षारसमन्वितः । पीतः प्रशमयत्येव कृच्छ्रं विड्भारणोत्थितम् ॥ ६ ॥ त्रिफलाया सुपिष्टाया कल्कं कोलसमन्वितम् । वारिणा लवणीकृत्य पिबेन्मूत्ररुजापहम् ॥ कोलं बदरम् ॥ ७ ॥ गुडमामलकं वृष्यं श्रमघ्नं तर्पणं प्रियम् । पित्तासृग्दाहशूलघ्नं मूत्रकृच्छ्रहरं परम् ॥ ८ ॥ सपादशाणतुलितो यवक्षारः सितायुतः । भक्षितो नाशयत्येव मूत्रकृच्छ्रं न संशयः ॥ ९ ॥ द्राक्षासितोपलाकल्कं पीतं काञ्जिमितो नरैः ॥ मस्तुना पलमात्रेण मूत्रकृच्छ्रं व्यपोहति ॥ १० ॥ समूलगोक्षुरक्वाथः सितामाक्षिकसंयुतः । नाशयेन्मूत्रकृच्छ्राणि तथैवोष्णसमीरणम् ॥ उष्णसमीरणम् उष्णवातम् मूत्राघातविशेषम् ॥ इति भावप्रकाशः ॥

मूत्रदोष । पु० प्रमेहे ॥

मूत्रनिरोध । पु० मूत्रप्रतिबन्धकरोगविशेषे ॥ यथा । पिष्टं वै मालतीमूलं शीष्मकाले समाहरेत् । सन्दितं छागदुग्धेन पीतं शर्करयान्वितम् । हरेन्मूत्रनिरोधं स्वहरेद्वैणाखण्डशर्करा ॥

मूत्रपतन । पु० गन्धमार्जारे ॥

मूत्रपुटम् । न० नाभेरधोभागे । मूत्राशये ॥

मूत्रफला । स्त्री० कर्कट्याम् ॥ त्रपुष्याम् ॥

मूत्रलम् । न० त्रपुषे ॥ त्रि० मूत्रवर्द्धके ॥

मूत्रला । स्त्री० कर्कट्याम् ॥ वालुक्याम् ॥

मूत्राघात पु० प्रस्रावरोधकरोगविशेषे ॥ प्रायो मूत्रविघाताद्यैर्वातकुण्डलिकादयः । जायन्ते कुपितैर्दोषैर्मूत्राघातास्त्रयोदश ॥ मूत्रविघाताद्यैरित्याद्यशब्देन पुरीषशुक्रादिवेगविधारणादीनां रूक्षाशनादीनाञ्च ग्रहणम् । मूत्रविघाताद्यैः कुपितैर्दोषैरित्यन्वयः । ननु मूत्रकृच्छ्रमूत्रघातयोः को भेदः । उच्यते । मूत्रकृच्छ्रे कृच्छ्रमधिकं विबन्धोऽल्पः । मूत्राघाते तु विबन्धो बलवान् कृच्छ्रमल्पमित्यनयोर्भेदः ॥ अस्य चिकित्सा यथा । नलकुशकाशेक्षुवलाक्वाथं प्रातः सुशीतलं ससितम् । पिबतो नश्यति नियतं मूत्रग्रहस्त्वचाचकवि ॥ कवि शुक्रं । कर्पूर-

जलायुक्ताबलवर्तिं शनैः शनैः ।
मेढ्रमार्गान्तरेन्यस्तां मूत्राघातव्यपो
हति ॥ धान्यगोक्षुरक क्वाथ क
ल्कसिद्धं हितघृतम् । मूत्राघाते-
मूत्रकृच्छ्रे शुक्रदोषेचदारुणे ॥ धान्य
गोक्षुरक घृतम् ॥ मूत्रकृच्छ्रेश्मरी
रोगेभेषज यत्प्रकीर्तितम् । मूत्राघा
तेषु सर्वेषुतत्कुर्याद्भिषक्कालवित् ॥

मूत्रातिसार । पु॰ प्रस्रावातिसरण
रोगे ॥ तस्यौषधयथा । बलामूल-
त्वचश्चूर्णंपीतसक्षीरशर्करम् । मू
त्रातिसार हरतिदृष्टमेतन्नसंशयङ्-
ति ॥

मूत्रातीत । पु॰ मूत्ररोगविशेषे ॥
यथाहुः । चिर धारयतोमूत्रत्वरया
नप्रवर्त्तते । मेहमानस्यमन्द वामू-
त्रातीत सउच्यते ॥ इति ॥

मूत्राशय । पु॰ वस्तौ । मूत्र
पुटे ॥

मूत्राशयपुट । पु॰ रस्याम् । मू-
त्रपुटे ॥

मूत्रित । त्रि॰ कृतमूत्रोत्सर्गे । मी
ढे ॥ मूत्र्यतेस्म । मूत्र॰ । क्त ॥

मूर्ख । पु॰ पुरीषमे । माषे ॥ गाय
त्रीरहिते । सार्थगायत्रीरहिते ॥
त्रि॰ अज्ञे । वैधये । बालिशे ॥
शास्त्रज्ञानशून्ये ॥ शून्यवादिनि ॥
देहात्मवादिनि अधीत्यवेदशास्त्रा
णिससारेरागिणश्चये । तेभ्य प



रोनमूर्खोस्तिगधर्मं श्वाजशूकरैः
॥ समइतिशेष । मानुष्य दुर्लभ
प्राप्यवेदशास्त्राण्यधीत्यच । बध्यते
यदिस सारेकोविविच्येतमानव ॥
मुह्यति । मुह॰ । मुह खोमूर्च
मूर्खोवपाप्रवासीसतिनिजविभवे
सज्ञयोनास्तिगेहेनानाधान्यौषधी
नासतिपितरिप्टेनार्जितायेनविद्या
। भार्यात्यक्त्वासुरूपारतिमिहकु
रुतेभर्तमत्याचदास्यावाण्यावैरा
भिलाषीकुमतिजनरुचिर्वर्जिराज
न्यगोयम् ॥ वाण्याम् ॰ गोरवा
भाषायाम उत्कृष्टपुरुषार्थलाभे
सम्भवत्यधम कामयमानोमूर्ख
॥ मूर्खसहस्र योगोविषादपिसु
दुर्जर । विज्ञनसहस्र योग सुधा
रससम मत ॥ अत्रमूर्खनि
न्दादेवीभागवतेद्रष्टव्या ।

मूर्खता । स्त्री॰ मूर्खत्वे ॥ मूर्खस्य
भाव । तस्यभावस्त्वतलाविति
त्ल् ॥

मूर्खत्वम् । न॰ मूर्खतायाम् । अ
ज्ञत्वे । मूर्खपन॰ इ॰ भा॰ ॥
मूर्खत्व सुलभ भजस्वकुमत मूर्खस्य
चाष्टौगुणानिश्चिन्तोबहुभोजकोति
मुखरोरात्रि दिवास्वप्नभाक् । कार्या
कार्यविचारणादिरहितोमानापमा
नेसमोदत्त्वासर्वजनस्यमूर्ध्निचर
णोमूर्खश्चिरम् जीवतु ॥

मूर्च्छनम् । न० मूर्च्छाशम् ॥ मूर्च्छापित्ततम प्राया ।

मूर्च्छना स्त्री० गीताङ्गविशेषे । ग्रामस्यसप्तमभागे ॥ चतुर्द्दशविधा याम् । षड्जादिस्वरस पूर्णतायाम् । तदुक्तं शाण्डिल्येन । यत्रैव स्वरा पूर्णामूर्च्छनास्विस्तु दाहृतेति ॥ अन्यत्रमूर्च्छनालक्षणं यथा । क्रमात्स्वराणासप्तानामारोहश्चावरोहणम् । सामूर्च्छेत्युच्यते ग्रामस्थाएता सप्तसप्त च । ग्रामत्रयेपिप्रत्येकसप्तसप्ततुमूर्च्छना० इत्येकविंशतिमूर्च्छनाभवति ।

मूर्च्छा । स्त्री० कश्मले । मोहे ॥ स च्छावहासुनाडीषु पिहितासुनिलादिभि । तमोभ्युपैतिसहसासुखदु खव्यपोहकृत् ॥ सुखदु खव्यपोहाच्चनर पततिकाष्ठवत् । मोहोमूर्च्छेतितांप्राहु षड्विधा साप्रकीर्त्तिता ॥ मूर्च्छनम् । मूर्च्छामोहसमुच्छ्राययो । गुरो श्चहलइत्य । उपधायाश्चेतिदीर्घ । टाप् ॥ इन्द्रियै सहमनसउपरमोमूर्च्छेतिव्याख्यातार ॥

मूर्च्छाय । पु० मूर्च्छाधाम् ॥

मूर्च्छाल । त्रि० मोहयुक्ते । मूर्च्छिते ॥ मूर्च्छास्यास्ति । सिध्मादिषु० क्षुद्रजन्तूपतापयोश्चेतिपठिताच्च । प्राणिस्थादातइतिनभवति० प्राप्यङ्गादेवेतिव्याख्यानात् ॥

मूर्च्छित । त्रि० मूर्त्ते । मूर्च्छायुक्ते । मूर्च्छिते । विचेतने ॥ सोच्छ्रये ॥ मूढे ॥ इद्धे ॥ मूर्च्छितस्म । मूर्च्छा० । गत्यर्थेतिक्त ॥ मूर्च्छासञ्जाताअथवा । तारकादिस्त्वादितच् ॥

मूर्त्त । त्रि० मूर्च्छाले । मूर्च्छिते ॥ कठिने ॥ मूर्त्तिमति । सन्निवेशोनेवद्वव्यायस्यतन्मूर्त्तमुच्यते । चित्यस्त्वग्निवयमूर्त्तममूर्त्तंत्वितरद्वयम् ॥ मूर्च्छतिस्म । मूर्च्छा० । अकर्मकत्वात्क्त । राल्लोप । नध्याख्येतिनत्वं न ॥ न्यायमते० पृथिवी० जल० तेज ० वायु मनश्च । एषागुणा रूप० रस० गन्ध स्पर्श ० परत्वम्० अपरत्वम्० गुरुत्वम् स्नेह ० वेगश्च मूर्त्तामूर्त्तसाधारणगुणा. । सङ्ख्या० परिमिति ० पृथक्त्वम्० संयोग ० विभागश्च इतिभापापरिच्छेद ० ॥

मूर्त्तिवत् । त्रि० आगमिके ॥ त्रिशूलधारीमहेश्वर शङ्खचक्रादिधारीविष्णुर्वापरमार्थोभवतीत्यागमिका कल्पयन्ति । तच्चतेषाकल्पनम्० भ्रान्तिमात्रम् अस्मदादिशरीरवत्तस्यापिशरीरस्वपाप्वभो

तिकत्वातलीलाविग्रहकल्पनञ्च ० दिग्रहाभावे लीलायोगादयुक्तमेव ॥

मूर्त्ति । स्त्री० काठिन्ये ॥ प्रतिमायाम् । असर्वगतद्रव्यपरिमाणे ॥ शिवस्याष्टमूर्त्तयो यथा । सर्वं क्षिति समुद्दिष्टा भवो जलमुदाहृता । रुद्रोऽग्निरुग्रो वायुः स्यात् भीम आकाश शब्दिता ॥ पशोः पतिर्यजमानो महादेव सुधाकरः । ईशानः सूर्य इत्येता मूर्त्तयोऽष्टौ प्रकीर्त्तिताः ॥ मूर्त्तिर्हि धर्मस्य पत्नी । यथा । मूर्त्तिश्च धर्मपत्नी सा कान्तिरूपा मनोहरा । कान्तिरूपा शोभारूपा । परमात्मा च विश्वौघो निराधारो यया विना ॥ शोभाविना परात्मापि निराधारो निरर्थक इत्यर्थः ॥ सर्वं च शोभारूपा च लक्ष्मीर्मूर्त्तिमती सती । श्रीरूपा मूर्त्तिरूपा च मान्या धन्याति पूजितेति भागवते ९ स्कन्धे १ ध्याय ॥ काये । देहे । जरायुजाण्डजोद्भिज्जादिभेदेन विलक्षणा विविधसंस्थाना सुतनुषु ॥ मूर्च्छति० मूर्च्छयतेर्वा । मूर्च्छा० । क्तिन् । राल्लोपः ॥ रूपे ॥ स्वभावे ॥ लग्ने ॥

मूर्त्तिमान् । त्रि० कठिने । मूर्त्तिविशिष्टे ॥ मूर्त्तिः काठिन्यमस्यास्ति । तदस्याऽस्त्यस्मिन्निति मतुप् ॥ स्त्रियाम्० मूर्त्तिमती । उगित्त्वान्ङीप् ॥ न० शरीरे ॥

मूर्त्युपचय । पु० स्थौल्ये ॥

मूर्द्धगा । पु० क्षत्रिये ॥

मूर्द्धकर्परी । स्त्री० जलछायायाम् ॥

मूर्द्धखोलम् । न० छत्रे ॥

मूर्द्धज । पु० केशे । त्रि० मूर्द्धिजाते ॥

मूर्द्धतैलम् । न० तैलविशेषे ॥ अभ्यङ्ग परिषेकश्च पिचुर्बस्तिरिति क्रमात् । मूर्द्धतैलं चतुर्धा स्याद्बलवत् तद्यथोत्तरं ॥

मूर्द्धा । पु० उत्तमाङ्गे । शिरसि । मस्तके ॥ छाया कारे शिरोभिस्तु नृपानिम्नशिरा वनी । चिपिटैस्तु पितुर्हत्यु शंशाख्या परिमण्डले घटमूर्द्धा पापकृच्चिर्धनाढ्यो परिकीर्त्तित ॥ मुह्यत्यस्मिन्नाहते । मुह० । श्वन्नुक्षन्निति० मुहे कनिन्० निपातनादुपधादीर्घो धोऽन्तादेशो रमागमश्च ॥

मूर्द्धन्य । त्रि० मूर्द्धनिभवे ॥ शरीरावयवाच्चेति यत् । ये चाभावकर्मणोरिति प्रकृतिभावान्नस्तद्धित इति० टिलोपाभाव ॥

मूर्द्धपुष्प । पु० शिरीषवृक्षे ॥

मूर्द्धरस । पु० भक्तफेने ॥

मूर्द्धवेष्टनम् । न० उष्णीषे ॥

मूर्द्धाभिषिक्त । पु० भूपाले । राजनि ॥ क्षत्रिये । राजन्ये । बाहुजे ॥

मूर्द्धि॰ अभिषिच्यतेस्म। विवक्ष

र्थे। क्त। राज्यदासमये॰ मू

र्द्धन्यभिषिच्यते॰ तत्प्रभवत्त्वात्स

र्वापित्वत्रियोस्मूर्द्धाभिषिक्तउच्यते।

क्षत्रिये॥ प्रधाने॥ मूर्द्धन्यभि-

षिक्त। वर्णसङ्करजातिविशेषे

विप्रात्क्षत्रियायामजाते॥

मूर्धावसिक्त। पु॰ ब्राह्मणात्परि

णीतक्षत्रियायामुत्पन्ने॥ अस्त्र-

लिप्सु। हस्त्यश्वरथशिक्षाचवस्त्रा

धारणं तथा। मूर्द्धावसिक्तस्य

वृत्तिः प्रोक्ताभगसराभुभा॥

मूर्वा। स्त्री॰ लताविशेषे। देव्याम्।

मधुरसायाम्। मोरटायाम्। सुर

स्त्र॰ द्र॰ भा॰ प्र॰। धनुर्गुणोप

युक्ता॰ सुरगा॰ द्र॰ गौ॰ भा॰

प्र॰ मूर्वासरागुरुः स्वादुस्तिक्ता

पित्तास्रमेहनुत्। त्रिदोषतृष्णाहृ

द्रोगकण्डूकुष्ठज्वरापहा। मूर्वति

। मूर्वाबन्धने। अच्।

मूर्विका। स्त्री॰ मूर्वायाम्॥ मूर्वैव

। स्वार्थेकन्॥

मूलम्। न॰ शिफायाम्॥ अर्द्ध।

अङ्घ्रिनामके। जड॰ द्र॰ भा॰

॥ मूलमात्र॥ यथा। अर्थस्यमूल

निकृतिः क्षमाचक्षामस्यमूलस्व

पुर्व्वयस्य। धर्मस्यत्यागादिदयादमस्य

मोक्षस्य सर्वोपरमः क्रियाश्च॥

आद्ये। प्रथमे॥ यथा। मूलप्रकृ

ति.। मूलवित्ते॥ भे॥ निकुञ्जे

॥ निजे॥ चरणे॥ टीकाईग्रन्थे

॥ गुरणे॥ पिप्पलीमूले॥ पुष्कर

मूले॥ विशेषमूलस्थान्वेषणे निर्ण

योयथा। नदीनामग्निहोत्राणामभा

रतस्यकुलस्यच। मूलान्वेषणेनकर्त्त

व्योमूलाद्दोषोनहीयते॥ पु॰ न॰

अन्तिके। पार्श्वे। नक्षत्रविशेषे॥

यथा। हस्तास्वातिश्रवणाश्लेषेम्य

गशिरोनपुंसिस्यात्। पुंसिपुनर्व

सुपुष्योमूलन्त्वस्त्रीस्त्रियाशेषा॥

निर्ऋतिदेवताकेनक्षत्रे॥ अस्मि

न्जातस्यफलं यथा। मूलविरुद्धा

वयवं समूलकुलदहनं वदन्तितज्

ज्ञाः। चेद्व्यत्ययात पुरुषाविशेषा

त्सौभाग्यमायुश्चकुलानुवृद्धिः॥

मूलमञ्चे॥ मूलति। मूलप्रतिष्ठा

याम् मूलरोहणे वा। इगुपधे लि

क॥ भवते। मूड्बन्धने। मूश

कश्विस्य क्त॥

मूलक। पु॰ स्थावरविषप्रभेदे॥

मूलकम्। न॰ मूलविशेषे। राजालु

के। महाकन्दे। हस्तिदन्तके।

मूली॰ इतिभाषाप्रसिद्धे कन्दे॥

अस्यगुणा। मूलकद्विविधं प्रोक्तं

तत्रैकं लघुमूलकम्। शालामर्क

टकं विस्रं शालेयं मरुसम्भवम्॥

चाणक्यमूलकं तीक्ष्णं तथामूलक

पोतिका। नेपालमूलकं चान्यत्

गोमेषश्वनिताधमुर्युकघटास्तथा। मूलत्रिकोणभवनान्याहुः सूर्यादितः क्रमात् ॥ एतेराशय क्रमात् सूर्यादीनां मूलत्रिकोणभवनान्याहुः। यथा। सिंहः सूर्यस्य मूलत्रिकोणभवनम्। एवमेषश्चन्द्रस्य॰मेष॰ कुजस्य॰कन्याबुधस्य॰धनुर्गुरोः तुलाशुक्रस्य॰कुम्भः शनेरिति ॥

मूलत्रिकोणांश । पु॰ रव्यादीनांत्रिकोणभागे ॥ य॰। खयुग्मभार्कदिक्पालदिक्पञ्चदशविंशति। मूलत्रिकोणभागा स्युः सूर्यादीनां यथाक्रमात्। यथा। सिंहराशौसूर्यस्यविंशत्यंशा मूलत्रिकोणभागा स्युः। एवं चन्द्रस्य वृषे त्र्यंशा तुङ्गांशत्रयादूर्ध्वं सप्तविंशत्यंशा कुजस्य मेषे द्वादशांशा बुधस्य कन्यायां तुङ्गपञ्चदशांशादूर्ध्वं दशांशा पञ्चविंशत्यंशाः पर्यन्तम्॰गुरोर्धनुषि दशांशा शुक्रस्य तुलायां पञ्चदशांशा शनेः कुम्भे विंशत्यंशा मूलत्रिकोणभागा स्युरिति ॥

मूलदेव । पु॰ मूलभद्रे। कंसासुरे।

मूलद्रव्यम्। न॰ मूलधने ॥

मूलधनम्। न॰ वणिजां मूलवित्ते। नीव्याम्। परिपणे। पुंजी॰इ॰भा॰ ॥ मूलमुतवनम् ॥

मूलनगरम्। न॰ राजधान्याम् ॥

मूलपर्णी। स्त्री॰ मण्डूकपर्ण्याम् ॥

मूलपुष्करम्। न॰ पुष्करमूले ॥

मूलपोती। स्त्री॰ शाकप्रभेदे। क्षुद्रवल्ल्याम्। क्षुद्रपोतिकायाम् ॥

मूलप्रकृति। स्त्री॰ आद्यायां शक्तौ। प्रधाने ॥ प्रकृति प्रधानम्। मूलस्यामौ प्रकृतिश्चेति विग्रहः। विश्वस्याद्यं कलापश्यसामूलम्॰तस्याम्लान्तरमस्ति अनवस्थाप्रसङ्गात्। अथानवस्थायामस्तिप्रमाणम् ॥

मूलफलद। पु॰ पनसे। कण्टकिफले ॥ मूले॰फलं ददाति। इदाद्र्॰। क ॥

मूलबन्ध। पु॰ राजयोगाङ्गविशेषे ॥ यन्मूलं सर्वभूतानां यन्मूलं चित्तबन्धनम्। मूलबन्धः सदा सेव्यो योग्योऽसौ राजयोगिनाम् ॥

मूलभद्र। पु॰ कंसासुरे ॥

मूलरस। पु॰ मोरटलतायाम् ॥

मूलविभुज। पुं॰ रथे ॥ मूलानि विभुजति। भुजोऽकौटिल्ये। मूलविभुजादित्वात् क ॥

मूलशाक। पुं॰ स्थितिहन्तौ ॥

मूला। स्त्री॰ शतावर्याम् ॥ मूलभे ॥

मूलाधार:। पुं॰ गुह्यलिङ्गयोर्मध्ये कुलिङ्गयमितस्थाने। शरीरस्थषट्चक्रानाडीनां मूलस्थाने ॥ मूलमाधारषट्कं नाम मूलाधारं तद्विदुरिति देवीगीतोक्तेः ॥

मूढाविद्या । स्त्री॰ अनाद्यविवेके ॥ अयजीवोनकूटस्थ ।वधिनस्तिकदाचन । अनादिरविवेकोयमूढाविद्येतिगम्यताम् ॥

मूलाह्वयम् । न॰ मूलके ॥

मूली । पु॰ वृक्षे ॥

मूली । स्त्री॰ ज्येष्ठाम् ॥

मूलेर । पुं॰ जटायाम् ॥ मूलति । मूल॰ । मूलेरादयश्चेति साधु ॥

मूल्यम् । न॰ अवक्रये । वस्ने । मोल॰ निरख॰ ह॰ भा॰ दर॰ दाम॰ इतिसाधारणजनभाषा ॥ भृत्यायाम् । वेतने । मज्ञीना॰ भाड़ा॰ ह॰ भा॰ ॥ मूलेनआनाम्यम्॰मूलेनसमया । नौवयोधर्मेत्यादिनायत् चि॰ मूलतउत्पाटनयोग्येमुद्गादौ ॥ मूलमावर्हयिष्यः । मूलमस्यावर्हीतियत् ॥

मूष । पुं॰ मूषिके ॥ तैजसावर्त्तन्या ॥

मूषक । पुं॰ मूषिके ॥ मूषति । मूषस्तेयेद्दीर्घोपधोप्यस्ति । भ्वादि । वहुलस न्यायाक्वुन्वा ॥

मूषककर्णी । स्त्री॰ आखुपर्ण्याम् ॥

मूषकमारी । स्त्री॰ सुतश्रेण्याम् ॥

मूषका । स्त्री॰ मूषिकायाम् ॥

मूषिकाराति । पुं॰ ओतौ । विडाले ॥

मूषली । स्त्री॰ पन्नगा ॥

मूषा । स्त्री॰ स्वर्णाद्यावर्त्तनपात्रे । तैजसावर्त्तन्याम् ॥ देवताडे ॥ अन्त शुषिरायान्तत्प्रतिमायाम् ॥ मूषति । मूष॰ । इगुपधेतिक ॥ गवाक्षे ॥ यथा । एकद्वित्र्यादि मूषावहनमितिमस्तोब्रूहिमेभूमिभर्त्तुर्हर्म्येरम्येत्वमूर्षे चतुरविरचिते ग्रन्थशालाविशाले । इत्यादिलीलावत्याञ्छ्रीव्यवहार ॥

मूषाकर्णी । स्त्री॰ आखुपर्ण्याम् ॥

मूषातुत्थम् । न॰ काश्मीले । वितुन्नके । हेमतुत्थे ॥

मूषिक । पु॰ उन्दुरौ । आखौ ॥ अस्यमांसगुणा । अपिनकुलशल्यगोधामूषिकमुख्याविशेषया कथिता । श्वासानिलकासहरतन्मांसपित्तदाहकारम् ॥ अन्येविशेषयायेषु क्रौञ्चिडौन्दुरुकादय । गर्हितवन्मांसस्तम्बगौरवदुर्जरम् ॥ अपिच । मूषकोमधुर स्निग्धो-व्यवायीवलवर्धन ॥ पारिभाषिकोयथा । विभवेसतिमैवलिनद्दातिजुहोतिच । तमाहुराखुतस्यान्नभुक्त्वाकृच्छ्रेणशुध्यति ॥ सुष्णाति । सुष॰ । मुषदीर्घश्चेतिकिकन् ॥

मूषिकपर्णी । स्त्री॰ जलद्रवविशेषे । चित्रायाम् । उपचित्रायाम् । न्यग्रोध्याम् । मूषाकर्णीतिख्याता

याम् । द्रूरद्राक्कानीपामा०द्रू०गी० दे०भा० ॥ मूषिकपर्णमस्याः मूषिककर्णाकारपर्णत्वात् । पाककर्णेतिङीष् ॥

मूषिका । स्त्री० मूषिकपर्ण्याम् ॥ मूषकस्त्रियाम् ॥ अजादित्वाट्टाप ॥ मूषायाम् ॥

मूषिकाङ्क । पु० गणेशे ॥

मूषिकाञ्चन । पु० विघ्नहारिणि । गणेशे ॥

मूषिकार । पु० आखौ । उन्दुरौ ॥ मूषिकायाः पुमान् । आरक्पुसी स्थारक्

मूषिकाराति । पु० बिडाले ॥

मूषिकाह्वया । स्त्री० सुतश्रेण्याम् ॥ मूषिकपर्ण्याम् ॥

मूषित । त्रि० मुषिते । चोरिते । मूष्यतेस्म । मूषस्तेये । क्तः ॥

मूषिपर्णिका । स्त्री० मूषिकपर्ण्याम् ।

मूषी । स्त्री स्वर्णाद्यावर्त्तनभाण्डे । स्वर्णादिद्रवीकरणपात्रे । मूषायाम् ॥

मूषीक । पुं० उन्दुरौ । मूषिके ॥

मूषीककर्णी । स्त्री० मूषिकपर्ण्याम् ॥

मूषीका । स्त्री० उन्दुरौ ।

मृकण्ड । पु० मृकण्डुमुनौ ॥ अयमदन्तोमृगव्यादयस्चेतिसूत्रे०उज्ज्वलदत्तग्रन्थे स्पष्टः ॥ मृकण्डस्यमुनेस्तीर्थंतद्याख्यामतिनिर्मलमितिस्कान्दोक्तेश्च ॥

मृकण्डु । पुं० मृकण्डमुनौ

मृग । पुं० आरण्यपशुमात्रे । करिविशेषे ॥ मृगशिरोनक्षत्र ॥ यथा मृगेगत्वाशिवेश्चित्वाऽदितौगच्छन्जयेद्रिपूनिति ॥ एकदेशप्रयोगात् ॥ अन्वेषणे ॥याञ्चायाम् ॥ मार्गशीर्षमासे ॥ यज्ञविशेषे ॥ मृगनाभौ ॥ मकरराशौ ॥ मृगयायाम् ॥ स्वनामप्रसिद्धे पशुविशेषे । कुरङ्गे । वातायौ । हरिणे । अजिनयोनौ ॥ अस्यमांसप्रकारगुणाः । मार्गमांसबहुशकलितं खिन्नमीषच्चतोयेतप्तस्वे हैलरणसहितेपाचितं शब्दमुच्चैः । सान्द्रं सार्द्रलवणसहितं दाडिमेनातियुक्तं स्वादन् स्वादन्कलयतिशिरश्चन्द्रचूडोपिनूनम् ॥ एषां मांस हिमं ग्राहिरुच्यं दोषत्रयापहम् । षड्रसबलदंपथ्यं हृद्यं लघु ज्वरापहम् ॥ मृग्यते । मृगअन्वेषणे । अदन्त । घञ् । मृगोनवविधोयथा । सम्बरोरोहितोन्यङ्कुः कुरङ्गः सुहृगोकरः । एणश्चहरिणश्चेतिमृगा नवविधामताः ॥ पाठान्तरयथा । रुरुरोहितोन्यङ्कु सम्बरोवभुणोकरः । अशोचहरिणश्चेतिमृगा नवविधामता ॥ हारिणश्चापिविज्ञेय पञ्चभेदोत्र भैरवः । कृष्ण खड्गोकरश्चैवपृषतश्च मृगस्तथा ॥ एतेबलिप्रदानेषुचकर्म

द्दानेचकीर्त्तिता ॥ इतिकालिका पुराणे ६७ अध्याय अथमृगपरी चा मृगनाभिसमादातुकौतुका र्थंतथापुन । मृगा योध्यामहो- न्द्राणांतेषा-च्चामिलचणम् ॥ पृ थिव्यब्वायुगगनतेजोधिकास्तुपञ्च धा भिद्यन्ते नै रुभे दास्तु ममस्तामृग जातय ॥ तद्यथा । येगन्धिन श्री णशरीरकर्णास्ते पार्थिवागन्धमृगा प्रदिष्टा । सर्वाङ्गमेषासुरभिप्रका म पुण्येप्रदेशेप्रभवन्तितेतु । येवैधि शालागुरुदीर्घशृङ्गाश्चमांसलाश्लो क्ष्णखुर देशा । आप्यास्तुतेवैप्रसर न्तिभूरिसर्वत्रदेशेप्रभवन्तिचैव ॥ धा वन्तियेवातमिवान्तरीचेदीर्घास्तुते- वातमृगा प्रदिष्टा । तेयत्रयत्रै वभवन्तिशक्तास्तत्रैवमर्वाणिशुभा- निसन्ति ॥ लघुप्रमाणालघुवीर्यस- त्त्वानिर्गन्धदेहाश्छगलप्रमाणा । तेगागनावेगकरानराणास्पृश्यानते नापिनिरीक्षणीया ॥ येरुक्षवर्णा गुरुदीर्घशृङ्गा क्रुद्धाभृश यान्ति चवायुवेगा । तैक्ष्णसारा खलु तैजसास्तुपुण्यप्रदेशेप्रभवन्तितेतु ॥ भोजोप्याह । पार्थिवादिमृग सर्व श्चतुर्जातिर्भवेत्पृथक् । सुशृङ्गास्त नुलोमानोब्राह्मणामृगजातय । क्रुद्धा पञ्चरिशृङ्गाश्चक्षत्रिया खरलोमशा । आवर्त्तशृङ्गास्तनवो

हरिणावैश्यजातय कुशृङ्गावाप्य शृङ्गावाशूद्रा खरतनूरुहा । अथवा नायेगुणादोषा सर्वे याहरिणेष्व पि ॥ तथापिदोषा पञ्चामीवच्च न्ते हरिणाश्रया । नेत्रयोरन्तरेय स्यलोमावर्त्ता सपाण्डुरत् ॥ विष मोविकृतौशृङ्गोयस्यसद्य मनाशन । आवर्त्त पृष्ठतोयस्यस्थानाभिम भिविन्दति ॥ पश्चार्द्धे यस्यवावर्त्त स्तौस्याज्यौभयकारकौ । वर्णनेत्र पदादीनावैकृताञ्जननाशन ॥ गा र्ग्यं । दोषवन्मृगजातीनाविज्ञा तौनामथापिवा। दर्शनात्स्पर्शना त्त्वैयगन्धादानाश्चपोषणात् ॥ भवे युर्विपद सर्वास्तथाचैवाद्यपोष णात् ॥ शक्रोपि । हरिणपोषणतो धरणीभुजानहिभवेन्मरुदुद्भवपीड नम् । नपविवर्द्धिरुजारिपुजंभयत स्तत हरिण गणिनमृप ॥ इतिमृग परीक्षा युक्तिकल्पतरौ ॥ चतुर्विध पुरुषेषुपुरुषविशेषे ॥ तल्लक्षण यथा । वदतिमधुरवाणींदीर्घनेत्रो ऽतिभीरुश्चपलमतिसुदेह शीघ्रवे गोमृगोयम् ॥ शशकेपद्मिनीतुष्टा मृगेतुष्टाचचित्रिणी । वृषभे शङ्खिनी तुष्टाहयेतुष्टाचहस्तिनी ॥ पद्मिनी शशयोर्योनिमेढ्रकौचतुरङ्गुलौ । चित्रिणीमृगयोर्योनिमेढ्रकौचतथा विधौ ॥ इ० रतिमञ्जरी ॥

मृगगामिनी । स्त्री० विडङ्गे ॥ मृगस इवगमनशीलायाम् ॥
मृगचर्म्मजम् । न० जवादिनामकग न्धद्रव्ये ॥ चि० मृगचर्मजाते ॥
मृगचेटक । पु० खट्टासे ॥
मृगचेष्टितम् । न० मृगेङ्गिते ॥ तद्यथा । सीमागतावन्यमृगारुवन्तस्थितावजन्तोयसमापतन्तं । सम् प्रत्यतीते ष्वभयानिदीप्ता कुर्वन्ति शून्य परितोभ्रमन्त ॥ दीप्ता भयकुर्वन्तिआवेदयन्तीतिसर्वत्रान्वयोवोध्य ॥ तेग्राम्यसत्त्वैरनुवाच्यमानाभयायरोधायभवन्तिवन्या । द्वाभ्यामपिप्रत्यनुवाशितास्ते वन्दिग्रहायैवमृगारुवन्ति ॥ वन्येसत्त्वे द्वारसस्थे पुरस्थरोधोवाच्य स प्रविष्टे विनाश । सूतेमृत्यु स्याश्रयसस्थितेचगेहयातिबन्धनसप्रदिष्टम् ॥
मृगजन्तु पु० मृगापत्ये ॥
मृगजालिका । स्त्री० वागुरायाम् ॥
मृगजीवन । पु० व्याधे ॥ मृगाजीवनमस्य ॥
मृगणा । स्त्री० अपहृतद्रव्यान्वेषणे ॥ मृग० । ण्यास तियुच् ॥
मृगतट् । स्त्री० मृगतृष्णायाम् ॥
मृगतृषा । स्त्री० मरीचिकायाम् ॥ मृगाणांतृषाअस्यस्याम् । अर्श आद्यच् । टाप् ॥
मृगतृष्णा । स्त्री० मरीचिकायाम् ॥ ग्रीष्मे मरुदेशेसिकतासूर्यकरभ्रमप्रतिकल्पितादूरस्थानांजलमितिबुद्धिविषयास्तामृगतृष्णाअस्यस्याम् अर्श आद्यच् । टाप् ॥
मृगतृष्णिका । स्त्री० मृगतृष्णायाम् ॥ मृगतृष्णैव । स्वार्थेकन् ॥ वैचित्तचिन्मयचर चरणौमुरारेपार गमिष्यसियतोभवसागरस्य । पुत्रा कलत्रमितरेसुहृद सहाया सर्वविलोकयसखे मृगतृष्णिकाभम् ॥
मृगदंशक । पु० कुक्कुरे ॥ मृगान्दशति । दंश दशने । कर्म्मण्यण् । क ॥
मृगधूर्त्तक । पु० गोमायौ । शृगाले ॥ मृगेषुधूर्त्तइव । सञ्ज्ञायाकन् ॥
मृगनाभि । पु० कस्तूर्याम् ॥ मृगस्य नाभि ॥
मृगनाभिजा । स्त्री० कस्तूर्याम् ॥
मृगनेत्रा । स्त्री० रात्रिविशेषे ॥ त्वयापुत्रकनाधीतमृगनेत्रासुरात्रिषु तेनत्व विदुषामध्ये पङ्के गौरिवसीदसि । मृगोनक्षत्रविशेषोनेताय स्या । नेतुर्नक्षत्रे ऽब्वक्तव्य ॥ योषित्प्रभेदे । मृगलोचनायाम् ॥ मृगस्यनेत्रे इवनेत्रे चक्षुषी यस्या ॥
मृगपति । पु० मृगेन्द्रे । सिंहे ॥
मृगपिप्लु । पुं० पक्षजे । चन्द्रे । हि

माशौ ॥
मृगप्रियम् । न० पर्वततृणे ॥
मृगवधाजीव । पु० व्याधे ॥ मृगवध आजीवोयस्यस ॥ मृगवधेनाजी- वतित्रा । जीव० । इगुपधेतिक ॥
मृगबन्धनी । स्त्री० मृगबन्धनार्थंजा लविशेषे । खावलृ० इ० पर्वत भा० ॥ वागुरायाम् ॥ मृगोबध्यते ऽनया । बन्धबन्धने । करणेल्युट् । ङीप् ।
मृगभक्ष्या । स्त्री० जटामांस्याम् ॥
मृगमद पु० कस्तूर्याम् ॥ मृगस्य- मद ॥
मृगमदवासा । स्त्री० कस्तूरीमल्लिका याम् ॥
मृगमातृक । पु० मृगविशेषे ॥ ख- ल्प पृथूदरोच्चैश्च. शरभोमृगमा तृक ' । गुणे शशेनसदृशोगदितो मृगयमातृक ॥
मृगया स्त्री० आखेटने । मृगव्ये । आ खेटे । खेटे । हेडा० इ० भा० ॥ अवल स्वकुलाशिनोभ्रषान्निजनीडद्रुम पीडिन खगान् । अनवद्यतृणा र्दिनोमृगान्मृगयाघायनभूभृताम्प्र ताम् ॥ इतिश्रीहर्ष ॥ मृग्यन्ते मृगाअस्याम् । मृग० । पु० अद न्त । परिचर्य्यापरिसर्यामृगयाऽटा व्यानामुपसङ्ख्यानमितिसाधु ॥
मृगयु । पु व्याधे । लुब्धके । हे

ङिया० इ० भा० प्र० । मासवि क्रयार्थंमृगादिपशुहन्तरि ॥ मृगा न् वधार्थंयाति । या० । मृगय्वा दित्वात्कु ॥ गोमायौ । शृगाले ॥ परमेष्ठिनि ॥
मृगरसा । स्त्री० सहदेव्याम् ।
मृगराट् । पु० सिंहे । मृगेषुराज ते । राजृ० । क्विप् ॥
मृगराज . पु० सिंहे ॥ मृगाणांरा जा । राजाह सखिभ्यष्टच् ॥
मृगराटिका । स्त्री० जीवन्त्याम् ॥
मृगरिपु । पु० सिंहे ॥ मृगाणांरि पु ॥
मृगरोमजम । न० राङ्कवे । मृगरो मजेवस्त्रे ॥
मृगलाञ्छन । पु० चन्द्रे । शशिनि ॥ मृगोलाञ्छनं यस्य ॥
मृगवल्लभ । पु० कुन्दुरुतृणे ॥
मृगवाहन . । पु० वायौ ॥ मृगोवाह न यस्य ॥
मृगव्यम । न० मृगयायाम् ॥ मृगा व्यंयन्त ऽत्र । व्यधगतौ । अन्येष्वपी तिड ।
मृगशिरा । स्त्री० पञ्चमनक्षत्रे ॥ मृ ग शिरोऽस्य ॥
मृगशिर । न० मृगशीर्षे । पञ्चमे नक्षत्रे ॥ अत्रजातस्यफलम् । शरा सनाभ्यासरतोविनीत. सदानुरक्तो गुणिनांगुणेषु । भक्तानुपक्ष इभरे

णपूर्णः सन्मार्गवर्त्तीमृगजन्मभागी ॥ आक्रान्त्यामृग शिरोऽस्य ॥

मृगशिरा । स्त्री० आग्रहायण्याम् ॥ मृगशिरसि ।

मृगशीर्षम् । न० मृगशिरसिनक्षत्रे ॥ आक्रान्त्यामृग शीर्षं यस्य ॥

मृगशीर्षा । स्त्री० मृगशिरोनक्षत्रे ॥

मृगा । स्त्री० सहदेवीलतायाम् ॥

मृगाक्षी । स्त्री० इन्द्रवारुण्याम् । विशालायाम् ॥ मृगनेत्रायाराक्षौ ॥ मृगलोचनायानार्याम् ॥ मृगस्य अक्षिणीइवअक्षिणीयस्या ॥

मृगाङ्क । पु० कलानिधौ हिमांशौ ॥ कर्पूरे ॥ वायौ ॥ मृगचिह्ने ॥ मृगोऽङ्कोयस्यस ॥ यथादर्पणप्राप्य परावृत्तानयनरश्मयोग्रीवास्थमेवमुखदर्पणगतमिवपश्यन्ति०एवं चन्द्र मण्डलप्राप्यपरावृत्तास्तेदूरत्वदोषात् ०पृथिवीमव्यक्तरूपामिवचन्द्रमण्ड लगतांपश्यन्ति०सएवचन्द्रे मृगचि ह्नमित्युपचर्यते० इतिव्याख्यातार ॥ यक्ष्मरोगस्यौषधविशेषे ॥ यथा। स्याद्रसेनसमहेममौक्तिकद्विगुणभवेत्। गन्धकस्तुसमस्तेनरस पादस्तुटङ्कण ॥ सर्वतद्गोलकंकृत्वा काञ्चिकेनविशोधयेत्। भाण्डेल वणपूर्णेयपचेद्यामचतुष्टयम् ॥ मृगाङ्कस ञ्ज्ञकोह्येयोरोगराजनिकृन्तन । अपिच । रसस्यभस्मनोहेम पिष्टीकृत्यप्रयोजयेत्। गुञ्जाचतुष्टयञ्चाज्यमरिचैर्भक्षयेन्नर ॥ इति मधुमती ॥

मृगाजीव । पु० व्याधे ॥

मृगाण्डजा । स्त्री० कस्तूर्याम् ॥

मृगादन । पु० तरक्षौ । तेंदुवावाघ ०तरख इ० भा० प्र० ॥ मृगमत्ति । अद० । ल्यु ॥

मृगादनी । स्त्री० इन्द्रवारुण्याम् । गवादन्याम् ॥ मृगैर्वारौ ॥ सहदेव्याम् ॥

मृगादि । पु० मार्गशीर्षे ॥

मृगादी । पु० सिंहे ॥ मृगानत्तुं शील यस्य । णिनि ॥

मृगाधिप । पु० सिंहे ॥

मृगान्तक । पु० चित्रव्याघ्रे। चीता ० इ० भा० ॥ मृगाणामन्तक ॥

मृगाराति । पु० मृगशत्रौ ॥ कुक्कुरे ॥ मृगस्यअराति ॥

मृगारि । पु० कण्ठीरवे । सिंहे ॥ शार्दूले । व्याघ्रे ॥ मृगस्यअरि ॥ कुक्कुरे ॥ रक्तशिग्रौ ॥

मृगावित् । पु० व्याधे ॥

मृगास्य । पु० मकरराशौ ॥ मृगस्य आस्यमिवआस्यं यस्य स ॥

मृगित । त्रि० अन्वेषिते । ढूंढा० इ० भा० ॥ मृग्यतेस्म । मृग० । क्त । इट् ॥

मृगी । स्त्री० वनिताविशेषे ॥ मृग

नार्यांस्त्रियाम् । मृगीणाजङ्गलोत्था नांछागीर्चीरगुण पय । ॥ कश्यपकन्यायाम् । पुलहभार्यायाम् । हरिणादिमृगाणामातरि ॥ मध्यात्ववित्प्रभेदे । रोमृगी० इतिलक्षणलक्षिते ॥ यथा । सामृगीलोचना । राधिकाश्रीपते ॥ हरिण्याम् ॥ सितोदरेपीतपृष्ठे वराटके ॥

मृगेक्षणा । स्त्री० मृगनेत्रायाम् ॥ मृगेर्वारौ ॥

मृगेन्द्र । पु० सिंहे ॥ नाभिषेको नसंस्कार सिंहस्यक्रियतेवने । विक्रमार्जितसत्त्वस्यस्वयमेवमृगेन्द्रता ॥ मृगाणामिन्द्र ॥ वर्णवृत्तान्तरे ॥ पयोधरधारिमृगेन्द्रमवेहि ॥ यथा । वृथाविलपानि ॥ मध्यलघोपञ्चमात्रापर्याये० ऽ । ऽ० ॥ यात्रायोगान्तरे ॥ लग्नेशुक्र शशीबन्धौ कर्मस्थानेगुरुर्यदा । मृगेन्द्रयोगो विख्यातोयातु सर्वार्थसाधक ॥

मृगेन्द्रचटक । पुं० श्येने ॥ चटकानामृगेन्द्र ॥ राजदन्तादि ॥

मृगेन्द्रमुखम् । न० अतिजगती १३ छदोभेदे ॥ भवतिमृगेन्द्रमुखनजौ जरौग ॥ यथा । गुरुभुजवीर्यभरहरि मदाम्बायुधिसमुपेत्यनदानवाजिजीवु । क्षुधितमृगेन्द्रमुखमृगाउपेत्यवानुखलविभ्रतिजीवनस्ययोगम् ॥

मृगेन्द्राशी । स्त्री० वासके ॥

मृगेर्वारु । स्त्री० श्वेतेन्द्रवारुण्याम् । मृगाद्याम् । श्वेतपुष्पायाम् । मरुजायाम् ॥

मृगेष्ट । पु० मुद्गरवृक्षे ॥

मृग्य । त्रि० अन्वेष्ये । मृगितव्ये ॥

मृज । पु० वाद्यविशेषे । मर्द्दले । दारुजे । मादल० इ० गौ० दे० भा० प्र० ॥

मृजा । स्त्री० मार्जनायाम् । प्रोञ्छनादिनाङ्गनिर्मलीकरणे । मार्जनम् । मृजूशुद्धौ । मृजूशौचालङ्करणयोश्चुरादिर्वा । भिदाद्यङ् ॥

मृज्य । त्रि० मार्ज्जनीये ॥

मृड । पु० शिवे ॥ मृडति । मृडसुखने । मृड्णातिवा । मृडचचात्चोदे । इगुपधत्वात्क ॥

मृडङ्कण । पु० बालके ॥ मृडति । मृड० । मृड । कीकच्कङ्कणाविति कङ्कण । प्रत्यय । ॥

मृडा । स्त्री० दुर्गायां ॥

मृडानी । स्त्री० चण्डिकायाम् । अम्बिकायाम् ॥ मृडस्यस्त्री । इन्द्रवरुणेतिङीषानुकौ ॥

मृडी । स्त्री० दुर्गायाम् ॥

मृडीक । पु० मृगे । हरिणे ॥ मृडति । मृड कीकच्कङ्कणाविति कीकच् ॥

मृणालम् । न० नलदे । उशीरे ॥ पु०

न० बसे । पद्मनाले ॥ मृणालशीतलवृष्यपित्तदाहास्रजिद्गुरु । दुर्जरस्वादुपाकस्तन्यानलकफप्रदम् ॥ सङ्ग्राहिमधुररूक्ष शालूकमपितद्गुणम् । विसाङ्कुरासन्द्रकलानुकाराविभाविता सैन्धवनिम्बुकाभ्याम् । विकीर्णखण्डीकृतशृङ्गवेराजलीपिवङ्क्ति लघुदीपयन्ति ॥ मृण्यते । मृणहि सायाम् । तमिविशिविडिन्मणीतिकालन् ॥

मृणालिनी । स्त्री० पद्मिन्याम् ॥ मृणालानिसन्त्यत्र । पुष्करादिभ्यो देशइतीनिः ॥

मृणाली । स्त्री० विसे । पद्मादिमूले ॥ अपचयविवक्षायाम्गौरादित्वान्ङीष् ॥ स्वल्पमृणालजातौ ॥

मृत । त्रि० परासौ । प्राप्तपञ्चत्वे । परेते । प्रेते । संस्थिते । प्रमीते । मरा० कू० भा० ॥ यथा । धर्म. प्रव्रजितस्तप प्रवसित सत्यस्वदूरेगतपृथ्वीमन्दफलाजना कपटिनो लौल्ये स्थिताब्राह्मणा । मर्त्याः स्त्रीवशगा स्त्रियश्चचपला नीचा जनाउन्नताहाकष्टखलुजीवितकलियुगेधन्यानरायेमृता . ॥ इतिगारुडे ११५ अध्याय ॥ न० मृत्यौ ॥ याचिते । मृतन्तुयाचित प्रोक्तमितिमनु ० । याचनवृत्तिर्हिमरणमिवदु . खजनकत्वान्मृतमुच्यते ॥ म्रियते स्म । मृङ्प्राणत्यागे । गत्यर्थेतिक्त . तनिमृङ्भ्याकिच्चेति तन्वा ॥

मृतकम् । न० शवे ॥ मरणाशौचे ॥ यथा । यदिस्यान्मृतकेसूतिर्मृतके चमृतिस्तथा । शेषणैवभवेच्छुद्धिरह शेषे द्विरात्रकम् ॥

मृतकल्प । त्रि० मृतप्राये ॥ ईषदूनोमृत । ईषदसमाप्ताविति कल्पप्प्रत्यय ॥

मृतकान्तक । पु० शृगाले ॥

मृतजीव । पु० तिलकवृक्षे ॥

मृतमत्त । पु० )

मृतमत्तक . । पु० ) शृगाले ॥

मृतवत्सा । स्त्री० अजीवत्सन्तानायाम् । मृतापत्यायाम् ॥

मृतसञ्जीवनी । स्त्री० मृतजीवनार्थिकायांविद्यायाम् ॥ गोरक्षदुग्धायाम् । मृत . सञ्जीव्यतेऽनया । जीव प्राणधारणे । ल्युट् । ङीप् ॥

मृतस्नात । त्रि० अपस्नाते । मृतमुद्दिश्यकृतस्नानेजने ॥ मृतेस्नात . । सप्तमीतिसमास ॥

मृतस्नानम् । न० अपस्नाने । मृतोद्देशेनस्नाने ॥

मृतस्त्रमोक्ता । पुं० राजर्षिविशेषे ॥

मृतामदम् । न० तुत्थे ॥

मृतालकम् । न० तुवरिकायाम् ॥ मृतमालयति । अलभूषणादौ ।

मंथ्यण् । स त्नायाकन् ॥
मृति । स्त्री० मरणे ॥ मृङ् प्राण त्यागे । स्त्रियांक्तिन् । मृति प्राणवियोग स्यान्नतुनाश सतोमत । मृङ् प्राणत्यागइत्युक्त स्वयनष्ट कथ त्यजेत ॥
मृत्कर । पु० कुम्भकारे ॥
मृत्कांस्यम् । न० शरावे ॥
मृत्किरा । स्त्री० जलजन्तुविशेषे । घुर्घुर्याम् ॥
मृत्क्षारम् । न० मूलके ॥
मृतखलिनी । स्त्री० सप्तलायाम् । चमकषायाम् ॥
मृत्तालम् । न० तुवरिकायाम् । सुराष्ट्रजमृत्तिकायाम् ॥ मृदिताल प्रतिष्ठाऽस्या ॥
मृत्तालकम् । न० मृत्ताले ॥ स्वार्थेकन् ॥
मृत्तिका । स्त्री० मृदि ॥ माटी० इ० भा० ॥ मृदेव । स्वार्थे० मृदस्तिकन् । प्रत्ययस्थादित्थं वसिष्ठ ० इकारोच्चारण प्रक्रियालाघवार्थम् । टापोलुक्यपिश्रवणार्थस्त । पञ्चभिर्म्मृत्तिकाभि क्रीत पञ्चमृत्तिक पट ॥
मृत्फली । स्त्री० कुष्ठौषधे ॥
मृत्यु । पु० मरणे । पञ्चतायाम् । निधने । शरीराद्यारम्भककर्मचयनिमित्त । सर्वमर्मच्छेदनरूपे० शरीरादिविच्छेदे ॥ सचसर्वेषाम्ब्रह्मादीनाकालप्राप्त्यावश्यमेवभवति । तथाहि । प्राप्तेकालेस्वयब्रह्मापरार्द्धद्वयसम्मिते । निधन यातितरसा जगत्कर्तास्वयप्रभु । चतुर्युगसहस्रेषुब्रह्मणोदिवसेकिल । पतन्तिभवनात्पञ्चनवचेन्द्रास्तथापुन तथैवद्विगुणेविष्णुमरणायोपकल्प्यते ॥ तथैवद्विगुणेकालेशङ्करशान्तिमेतिच ॥ काचिन्नामरणे मूढानिश्चलेदैवनिर्मिते । मही मही धराणाञ्चनाश सूर्य्यशशाङ्कयो ॥ जातस्यहिध्रुवोमृत्युध्रुवजन्ममृतस्यच । अध्रुवेस्मिन्शरीरेतुरक्षणीयवश स्थिरम् ॥ इतिश्रीदेवीभागवते ५ स्कन्धे ३१ ऽध्याय ॥ आसन्नमृत्युर्लोकोयध्रुवादीन्नहिपश्यति ॥ तथाहि । अरुन्धतींध्रुवञ्चैवविष्णोस्त्रीणिपदानिच । आसन्नमृत्युर्नोपश्येच्चतुर्थं मातृमण्डलम् ॥ अरुन्धतीभवेज्जिह्वाध्रुवोनासाग्रमुच्यते । विष्णो पदानिभ्रूमध्येनेत्रयोर्मातृमण्डलमितिकाशीखण्डे १२ अध्याय ॥ ससारे । अविद्याकामकर्मसमुदाये । स्वाभाविकेकर्मणि ॥ स्वाभाविकेज्ञाने ॥ संहारकारिणामध्ये विनाशकर्तौ भगवतोविभूतौ । यमे । वैवस्वते ॥ मरणम् । मृङ् । भृजिमृङ्भ्यां

युक्तयुकाविति त्यु॒क् ॥ योगवि शेषे ॥ यथा । रवावनुराधा० सोमे उत्तराषाढा० कुजेशतभिषा० बुधे अश्विनी० गुरौ मृगशीर्षम्० भृगौश्लेषा० शनौहस्तनक्षत्रेनम्त्युयोगं भवति ॥ लग्नादष्टमभवने ॥ यात्रायोगान्तरे ॥ चन्द्रोन्यश्चेच गावेकश्चे चेवाकविभास्करौ । मृत्युयोगोयमाख्यातो यातुर्मृत्युप्रदायक ॥

मृत्युजरे । स्त्री० द्वि०प्रज्वारस्थप्रियाप्रिययो ॥ यथा । कालकन्येमृत्युजरे प्रज्वारस्थप्रियाप्रिये । याभ्याजगत्समुच्छिन्नं विधाचानिर्मित विधौ ॥ जरामृत्योरपिकालादुत्पन्नत्वात्कन्यासदृशत्वात्कन्यात्वम् । तेमृत्युजरे कालस्यकन्येप्रज्वार-प्रकृष्टज्वरस्यप्रियाप्रियेपत्न्यौभवत । प्रियातोप्रियेऽतिशयितप्रियेद्वस्त्वर्थं ॥

मृत्युञ्जय । पु० कृत्तिवाससि । शिवे ॥ मृत्युकन्याजिताशश्वच्छिवेनगुरुणामम । नमृत्युनाजित शम्भु कल्पेकल्पेश्रुतौश्रुतम् ॥ मृत्युजयति । जिजये । स ञ्जायामृतृवृजिधारिसहितपिदम । इतिखच् । मुम् ॥ यात्रायोगान्तरे ॥ लाभेभौमोगुरुश्छिद्रे षष्ठस्थानेचभास्कर । मृत्युञ्जयसमा ख्योय सर्वशत्रुनिवर्हण ॥

मृत्युनाशक । पु० पारदे ॥ त्रि० मरणहर्त्तरि ॥

मृत्युपाश । पु० अधर्माज्ञानरागद्वेषादौ ॥

मृत्युपुष्प । पु० इक्षौ ॥

मृत्युफल । पु० महाकालफले ॥

मृत्युफली । स्त्री० कदल्याम् ॥

मृत्युभङ्गरक । पु० भवदति । प्रेतपटहे । मरणसमयवाद्ये ॥

मृत्युभृत्य । पु० रोगे ॥

मृत्युमान् । त्रि० मृते ॥

मृत्युवञ्चन । पु० शम्भौ ॥ श्रीफले । द्रोणकाके ॥

मृत्युवीज । पु० वंशे ॥

मृत्युसूति । स्त्री० कर्कट्याम् । सागमायाम् ॥ मृत्यवेसूति प्रसवो यस्या ॥ यथाकर्कटकीगर्भमाधत्तेमृत्युमात्मन ॥

मृत्सा । स्त्री० प्रशस्तमृदि ॥ प्रशस्तामृत् । सस्नौप्रशंसायामितिस । टाप् ॥ तुवरिकायाम् । तूवर० हि० भा० ॥ मृत्साऽस्त्यस्या अर्शआद्यच् । टाप् ॥

मृत्स्ना । स्त्री० प्रशस्तायामृत्तिकायाम् । मृत्सायाम् ॥ प्रशस्तामृत् । सस्नौप्रशंसायामितिस्न । टाप ॥ तुवर्याम् । आढक्याम् । अरहर तूवर० हि० भा० ॥

मृत्०ट् । स्त्री० मृत्तिकायाम् ॥ शौचे मृद्विशेषोयथाविष्णुपुराणे । वल्मीकमूषकोत्खातामृदमन्तर्जला तथा । शौचावशिष्ट गेहाच्चनाद्द्यात्लेपसम्भवाम ॥ अन्त प्राण्युपपन्नाच्चहलोत्खाताचपार्थिव । परित्यजेन् मृदस्त्वेता सकला शौचसाधनइति ॥ अन्त प्राण्युपन्मासकीटाम् ॥ मृदति० मृद्यतेवा । मृदचोदेसम्पदादित्वात्क्विप् । काच्याम् । तुवरिकायाम् ॥

मृदङ्कुर । पु० हारीतपक्षिणि ॥

मृदङ्ग । पु० स्वनामप्रसिद्धवाद्ये । मुरजे ॥ अथमृदङ्गादिविवरणम् । मर्द्दल खादिर श्रेष्ठोहीन स्यादन्यदारुज । रक्तचन्दनजो वाद्योगभीरध्वनिरुच्यके ॥ सार्द्ध-हस्तप्रमाणान्तुदैर्घ्यमस्यविधीयते । त्रयोदशाङ्गुलवाममथवाद्वादशाङ्गुलम् ॥ दक्षिणाञ्चभवेदेनमेकेनाऽङ्गुलेनवा । करणामक्वदनोमध्ये चैवपृथर्भवेत् । अणुमासीयोभवेद्धस्तस्तस्यैकरणा मतम् । मृत्तिकानिर्म्मितस्यैवमृदङ्ग परिकीर्त्तित ॥ पातयेत्खरलिवाद्यवादनार्थ स्वमर्द्दले । विभूतिगैरिकभक्त केन्दुकीनचसयुतम् ॥ यद्वाचिपीटकादैयकौविनीसत्त्वमिश्रितम् । सर्वमेकत्र पिष्ट तल्लेप खरलिरुच्यते ॥ वामास्येपूरिकाकृत्वालेप दद्यात्सदक्षिणे । एवमर्द्दलक प्रोक्त सर्ववाद्योत्तमोमत ॥ अस्यसयोगमासाद्यसर्ववाद्यस्तुशोभते । एतद्ङ्गवीजकाष्ठे दलमर्द्धाङ्गुलविदु ॥ इति । विशेष सङ्गीतशास्त्रे द्रष्टव्य ॥ पटहे ॥ घोषे ॥ वशे ॥ मृद्यते । मृद० । विडादिभ्य क्विदिष्यङ्गच् ॥ मृत्पङ्गमस्येतिवा ॥

मृदङ्गक । पु० मृदङ्गे ॥

मृदङ्गफल । पु० पनसवृक्षे ॥ मृदङ्गवफलान्यस्य ॥

मृदङ्गफलिनी । स्त्री० कोषातक्याम् ॥

मृदङ्गी । स्त्री० कोषातक्याम् । श्वेतघोषाइतिगौ०दे०भा० ॥

मृदर । पु० विषे ॥ त्रि०विलससति ॥ म्रियतेऽनेन०मृद्नातिवा । मृङ्मद०वा । कदरादयश्चेति० अरप्रत्ययान्तोनिपातित ॥ भये ॥

मृदा । स्त्री० मृत्तिकायाम् ॥

मृदाकर । पु० वज्रे ॥

मृदित । त्रि० अभिनष्टे । विनाशिते ॥ निष्पीडिते ॥ चूर्णीकृते ॥ मृद्यतेस्म । मृद० । क्त । इट् । क्ङितिचेतिनगुण ॥ क्षीणे ॥

मृदिनी । स्त्री० मृत्सायाम् ॥

मृदु । त्रि० कोमले ॥ अतीक्ष्णे ॥ मृदु सर्वत्रबाध्यते ॥ मृद्यते । मृद मर्द्दने । प्रथिमृदिभ्रस्जामितिकु सम्प्रसारणं च ॥ मृदुशब्दोमृदुत्व-गुणमुक्तातद्द्रव्यमभिधत्तेवृत्तिगुणव चनोमृदुशब्द । तेनस्त्रियाङीष-भावे०मृदु ॥ न० विशेषनवत्वा-द्दी ॥ यथा । चित्रेन्दुमित्रपौष्णा-श्वमृदुमैत्र तयाभृगु । तत्रगीता-म्बरक्रीडामित्रकार्यंचशोभनम् ॥ स्त्री०गृहकन्यायाम् ॥

मृदुकृष्णायसम् । न० सीसके ॥

मृदुगमना । स्त्री० हंस्याम् ॥ त्रि०म न्दगमने ॥

मृदुचर्मा । पु० भूर्ज्जवृक्षे । त्रि०को मलत्वग्विशिष्टे ॥

मृदुच्छद । पु० भूर्जे ।कुब्जरद्रुमे ॥ शीताले ॥ अक्षोटे ॥

मृदुता । स्त्री० मृदुत्वे ॥

मृदुताल पु० शीतालवृक्षे ॥

मृदुत्वक् । पु० भूर्जपत्रवृक्षे । मृद्वीत्व गस्य ॥

मृदुत्वच । पु० मृदुत्वचि । मृद्वी त्वचायस्यस ॥

मृदुत्वकम् । न० सुवर्णे ॥ वृत्तिशब्दच न्द्रिका ॥

मृदुपत्र । पु० नले॥न०कोमपलर्णे । त्रि०कोमलपर्णवति॥ मृदूनिपत्रा णियस्यस ॥

मृदुपत्री । स्त्री० चिल्लीशाके ॥

मृदुपर्वक । पु० वेत्रे ॥ त्रि० कोम लपर्ववति ॥

मृदुपुष्प । पु० शिरीषवृक्षे ॥ त्रि० कोमलकुसुमविशिष्टे । मृदूनिपु ष्पाणियस्यस ॥

मृदुफल । पु० मधुनारिकेले ॥ वि कङ्कते ॥ त्रि० कोमलफलवति ॥ मृदूनिफलानियस्यस ॥

मृदुरूप । पु० सात्त्विकराजसवृत्ति द्वये ॥

मृदुरेचनी । स्त्री० मार्कण्डिकायाम् ॥

मृदुल । त्रि० कोमले मृदुर्गुणोस्या स्ति । सिध्मादिभ्यश्चेतिलच् ॥ न० जले ॥

मृदुलोमक । पु० शशके॥ त्रि०को मलरोमविशिष्टे ॥

मृदूत्पलम् । न० नीलपद्मे ॥

मृद्वङ्गम् । न० वङ्गे ॥ कोमलावयवे । त्रि०तद्वति । मृदून्यङ्गानियस्य ॥ कर्मधारयोवा ॥

मृद्वी । स्त्री० कपिलद्राक्षायां ॥ कोम लाङ्ग्याम् ॥ मृदुशब्दोमृदुत्वगु णमुक्त्वा०मृदुत्वगुणयुक्त द्रव्यमभि धत्तेवृत्तिगुणवचनत्वेन०वोतोगुण-वचनादितिपाक्षिकोङीष् ॥

मृद्वीका । स्त्री० गोस्तन्याम् । द्राक्षा याम् । मुनक्का० हि० भा० ॥ मृ-द्नाति । मृदु० ।[ऋ]चीकादयश्चेति-

साधु ॥ कपिलद्राक्षायाम् ॥
मृधम् । न० युद्धे ॥ मर्द्धनम् । मृधु हिंसायाम् । बाहुलकात् भावे० घञर्थेवाक ।
मृन्मय । त्रि० मृदोविकारे । मयट् ॥ स्त्री० मृन्मयी ॥
मृन्मरु । पु० अश्मनि । पाषाणे ॥
मृषा । अ० वितथे । मिथ्या झूठ० इ० भा० ॥ मृष्यते । मृषुसहने । काप्रत्यय ॥
मृषाध्यायी । पु० वके ॥
मृषार्थकम् । न० आहते । अत्यन्ता सम्भवार्थवाक्ये ॥ यथा । एषवन्ध्यासुतोयातिखपुष्पकृतशेखर । कूर्मक्षीमतनुत्राण शशशृङ्गधनुर्द्धर ॥ इ० । मृषाऽर्थोयस्यतत् । कप् ।
मृषालक । पुं० आम्रवृक्षे ॥
मृषावाद । पु० मिथ्योदिते । मिथ्यावाक्ये । टट्टयाम ॥
मृषावादी त्रि० मिथ्यावादिनि । मृषोद्ये । मृषावादोस्यास्ति । इनि ॥ मिथ्याभियोक्तरि ।
मृषोद्य । त्रि० मिथ्यावादिनि ॥ राजसूयसूर्य मृषोद्ये त्यादिनामृषोपपदाद्वदे कर्म्मणिनित्य क्यब्निपातूत्यते ॥ न० मिथ्यावाक्ये ॥
मृष्ट त्रि० अपनीतमले । शोधिते ॥ मृज्यतेस्म । मंजूशुद्धौ । क्त. ॥ न० मरिचे ॥
मृष्टि । स्त्री० अन्नादे संस्कारविशेषे ।
मृष्टेरुक । पुं० वदान्ये । दानशीण्डे ॥ मिष्टाशिनि ॥ अतिथिद्विषि ॥
मेक । पुं० अजे । छागे ॥
मेकल । पु० ऋष्यन्तरे ॥ गिरिविशेषे ॥
मेकलकन्यका । स्त्री० नर्मदायासरिति । रेवायाम् ॥ मेकलस्यर्षे रद्रेर्वाकन्यका ॥
मेकलाद्रिजा स्त्री० सोमोद्भवायाम् । रेवायाम ॥ मेकलाद्रेर्जाता । जनी० । ड ॥
मेक्षणम् । न० यज्ञीयपात्रविशेषे ॥
मेखल । पु० मेकलपर्वते ॥
मेखलकन्यका स्त्री० रेवायाम् ॥
मेखला । स्त्री० खड्गबन्धे । खड्गादेश्चर्मादिनिर्मिते कटिबन्धने ॥ युद्धे हस्तात्पतनवारणायमणिबन्धे प्रक्षिप्यमाणे चर्म्मादौ ॥ स्त्रीकट्याभरणे । काञ्च्याम् ॥ रशनायाम् ॥ केचित्तु० एकयष्टिर्भवेत्काञ्चीमेखलात्वष्टयष्टिका । रशनाषोडशज्ञेयाकलाप पञ्चविंशक ॥ इतिपठन्ति० इत्यल्पभेदात्पर्यायता ॥ स्त्रीकट्याबन्धनग्रन्थने ॥ श्रोणिस्थाने ॥ शैलनितम्बे । उपनयनकाले

धारणीयमुञ्जनिर्मितसूत्रचये ॥ यथा । मौञ्जीत्रिवृत्समाश्लक्ष्णाकार्याविप्रस्यमेखला । क्षत्रियस्यतुमौर्वीज्यावैश्यस्यशणतान्तवी ॥ मुञ्जालाभेतुकर्त्तव्या कुशाश्मान्तकवल्वजैः । त्रिवृताग्रन्थिनैकेनत्रिभिःपञ्चभिरेववा ॥ इ०मनु ॥ होमकुण्डोपरिमृद्घटितवेष्टनविशेषे ॥ यथोक्तवशिष्ठपञ्चरात्रे । यावान्कुण्डस्यविस्तारः खननतावदिष्यते । इस्ते कैमेखलास्तिस्रोवेदाग्निःश्रयनाङ्गुला ॥ कुण्डेद्विहस्ते ताःक्रमेयारसवेदगुणाङ्गुला । चतुर्हस्ते तुकुण्डे तावसुतर्कयुगाङ्गुला ॥ मेखलाब्रह्मचारिमेखलावत्कुण्डवेष्टिताम् द्घटितातास्त्रखातदेशाद्बाह्ये एकाङ्गुलिकपक्षकण्ठपरिच्छ्योच्छ्रायेणविस्तारेणचैत्यादिक्रमेणवेदाद्यङ्गुला एतद्विपरीतास्त्वमासरोन्नाध्यवहारविरुद्धा ॥ पिङ्गलामतेपि । खातादेकाङ्गुलस्यस्तु मेखलानांविधिर्भवेदिति ॥ मखगतिलाति । ला० । आतइतिक । पृषोदरादि ॥ मालक्ष्मीम् ईखति ०माईखतिवा । माशब्दोनिषेधेईखगतौ । बाहुलकात् कलच् ॥ यद्वा । माईखलति । खलसञ्चयेसिद्धनेच । मूलविभुजादित्वात्क । प्रणितु०वृद्धिः स्यात् ॥ नर्मदा याम् ॥ प्रश्निपर्ण्या ॥

मेखलिक । पु० मेखलिनि ॥ मेखलास्यास्ति । ब्रीह्यादित्वाट्ठन् ॥

मेखली । पु० मेखलावति । मेखलिके । मेखलास्यास्ति । ब्रीह्यादित्वादिनि ॥

मेघ । न० अभ्रे । वारिवाहे । घने । जलदे । मेघास्त्रिविधास्तत्रवह्निजाधूमयोनय । निश्वासजास्तुजीमूतास्तेज्ञेयाजीवरूपिण ॥ यज्ञजास्तुघनाघोरा पुष्करावर्त्तकादय । इतिविशेषउक्त शब्दार्णवे ॥ मेहतिसिञ्चति । मिहसेचने । अच् । न्यङ्क्वादित्वात्कुत्वम् ॥ मुस्तायाम् ॥ राक्षसे ॥ सङ्गीतान्तर्गतरागविशेषे ॥ यथा । भैरवोथवसन्तश्चनटोनारायणस्तथा । श्रीरागोमेघरागश्चषडेतेपुरुषाह्वया ॥

मेघकफ । पु० करकायाम् ॥

मेघकाल । पु० वर्षर्त्तौ ॥

मेघचिन्तक । पु० चातकपक्षिणि ॥

मेघङ्कर । पु० मेघजनने ॥ मेघान्करोति । मेघर्त्तिभयेषु कृञ खच् प्रत्यय । अरुर्द्विषदितिमुम् ॥

मेघज । वि० मेघभववस्तुनि ॥

मेघजालम् । न० कालिकायाम् । मेघावली ॥

मेघजीवन । पु० चातके ॥ मेघेजीवनमस्य ॥

मेघज्योति । पु० इरम्मदे । वज्राग्नौ । मेघस्यज्योति ॥ अन्योन्यसङ्घट्टनेनमेघाग्नि स्त्यन्नचाद्दीयो ज्योतिरग्नि पततिस ॥

मेघडम्बर । पु० मेघगर्जने ॥ मेघस्यडम्बर ॥

मेघतिमिरम् । न० मेघाच्छन्नदिने ॥

मेघदीप । पु० विद्युति ॥

मेघध्वनि । पु० गर्ज्जिते । मेघनिर्घोषे ॥

मेघनाद । पु० वरुणे ॥ रावणात्मजे । इन्द्रजिति ॥ मेघस्यनादइवनादोयस्य ॥ मेघशब्दे ॥ पलाशवृक्षे । तण्डुलीयशाके ॥ इतिराजनिर्घण्ट ॥ मेघस्यनाद ॥

मेघनादजित् । पु० रामानुजे । लक्ष्मणे ॥ मेघनादमजैषीत् । जि० । सत्सूद्विषेतिक्विप् । तुक् ॥

मेघनादानुलासक । पु० मयूरे ॥

मेघनादानुलासी । पु० मयूरे ॥ मेघनादेनअनुलसति० तच्छील । लसश्लेषणक्रीडनयो । सुप्यजातावितिणिनि ॥

मेघनामा । पुं० मुस्तके ॥ मेघनामानिनामास्य ॥ आदिलघौपञ्चमाचकौ० ।ऽऽ॥

मेघनायक । पुं० आवर्त्तादौ ॥ यथा । त्रियुतेशाकवर्षेतुचतुर्भि .शोधितेक्रमात् । आवर्त्तश्चसिवर्त्त पुष्करोद्रोणमम्बुदम् ॥ फलयथा । आवर्त्तीनिर्ज्जलोमेघ स वर्त्तश्चबहूदक । पुष्करोदुष्करजलोद्रोण सस्यप्रपूरकइति ॥

मेघनिर्घोष । पु० स्तनिते । गर्ज्जिते ॥ मेघस्यनिर्घोष ॥

मेघपर्याय । पु० आदिलघौपञ्चमाचके० ।ऽऽ॥ मुस्तके ॥ मेघोमेघवाचक शब्द पर्यायोऽस्य ॥

मेघपुष्पम् । न० पिण्डाभ्रे । वर्षोपले ॥ अम्बुनि ॥ नदीजले ॥ पु० इन्द्रस्याश्वे ॥ कृष्णस्यघोटके ॥ मेघ इवपुष्यमिव ॥

मेघप्रसव । पु० जले ॥

मेघभव । त्रि० मेघोत्पन्नवस्तुनि ॥

मेघभूति । पु० वज्रे ॥

मेघमाल । पु० प्लक्षद्वीपस्थे गिरिविशेषे । रमागर्भजातकल्किदेवपुत्रे ॥

मेघमाला । स्त्री० कादम्बिन्याम् । मेघानांमाला ॥

मेघयोनि । पु० धूमे ॥

मेघराग । पु० रागविशेषे ॥ मेघसंज्ञकोराग ॥

मेघवर्णा । स्त्री० नीलीवृक्षे ॥ त्रि० घनसमानवर्णवति ॥

मेघवर्त्म । न० नभसि । गगने ॥

मेघवह्नि । पु० वज्राग्नौ । इरम्मदे ॥

मेघवाह । पु० इन्द्रे ॥ यथा । राजा त्वर्थान्समाहृत्यकुर्यादिन्द्रमहोत्सवम् । प्रगीतोमेघवाहस्तुमहतीं वृष्टिमावहेदितिदण्डनीति ॥
मेघवाहन । पु० इन्द्रे । तुरासाहि ।। मेघा महामेघागजरूपधारिणऐरावताद्योवाहनमस्य ॥ मेघान्वाहयतिचालयतिवा । ल्यु ॥ इन्द्रोहिमेघानाविश्यवर्षतीत्यागम ॥
मेघविस्फूर्जिता । स्त्री० अतिधृतिच्छन्द १९ प्रभेदे ॥ तल्लक्षणोदाहरणं यथा । रसर्त्वश्वैर्य्यौन्मौररगुरुयुतामेघविस्फूर्जितास्यात् ॥ यथा । कदम्बामोदाढ्याविपिनपवनाः केकिनः कान्तकेका ॥ विनिद्राः कन्दल्योदिशिदिशिमुदादर्दुराहृप्तनादाः । निशान्तस्थविद्युद्विलसिततलसन्मेघविस्फूर्जिताचेत् प्रियस्वाधीनोसौदनुजदलनोराज्यमस्मात्किमन्यत् ॥
मेघवेश्म । न० खे ॥
मेघसार । पु० चीनकर्पूरे ॥
मेघसुहृत् । पु० मयूरे ॥ मेघ सुहृदस्य ॥
मेघस्तनितोद्भव : । पुं० विकण्टक वृक्षे ॥
मेघाकाश । पुं० अभ्राकाशे ॥
मेघाख्यम् । न० मुस्तके ॥
मेघागम । पु० प्रावृषि । वर्षाकाले ॥ मेघस्यागमोयस्मिन् ॥ मेघस्यागमने ॥
मेघानन्दा । स्त्री० बलाकायाम् ॥
मेघानन्दी पु० मयूरे ॥
मेघान्त ॥ पु० शरदि ।। मेघानामन्तोयस्मिन् ॥
मेघास्त । पु शरद्यतौ ॥
मेघास्थि । न० करकायाम्
मेघाह्लदम् । न० आकाशे ॥
मेघोदर । पु० अर्हत्पितरि ॥
मेघ्य । त्रि० मेघभवे । दिगादित्वात्यत् ।।
मेचक । पु० मयूरस्यचन्द्रके ।। मेचकोवर्णोस्त्यस्य । अर्शआद्यच् ॥ श्यामलवर्णे । कृष्णे ॥ मेचक कृष्णनील स्यादतसीपुष्पसन्निभ । इतिशब्दार्णवेभेद । बर्हिकण्ठसमवर्णमेचकन्नुवतेबुधा इतिकाश्यमचतिमिश्रीभवतिवर्णान्तरेण । मच मुचिकल्कने । कृञादिभ्य संज्ञाया वुन् । पचिमच्योरित्त्वोपधाया इतीत्त्वे लघूपधगुण ।। धूमे ॥ मेघे ॥ शोभाञ्जने ॥ न० स्रोतोञ्जने ॥ अन्धकारे ।। नीलाञ्जने ॥ त्रि० श्यामलयुक्ते ॥
मेचकाभिधा । स्त्री० पातालगरुडीलतायाम ॥
मेटुला । स्त्री० आमलक्याम् ॥

मेठ । पुं० हस्तिपके । निषादिनि ॥

मेढ्र पु० मेहने । शिश्ने ॥ मेहन्त्यनेन । मिहसेचने । दाम्नीतिष्ट्रन् ॥ मेहतिवा ॥ मेषे ॥

मेढ्रशृङ्गी । स्त्री० मेषशृङ्गीवृक्षे ॥

मेण्ठ । पु० हस्तिपके ॥

मेण्ड । पु० मेठे । हस्तिपके ॥

मेण्ढ । पु० मेषे ॥

मेथि । पु० मेधिकाष्ठे । खलेवाल्याम् । खलेपशुबन्धनार्थकाष्ठे ॥ मेथ्यन्तेपशवोऽत्र । मेथृसङ्गमे । सर्वधातुभ्यइन् ॥

मेथिका । स्त्री० मेथिन्याम् । मेथ्याम् । गन्धबीजायाम् । मेथीतिप्रसिद्धशाके ॥ मेथिकावातशमनी श्लेष्मघ्नीज्वरनाशिनी । ततस्वल्पगुणावन्यावाजिनासातुपूजिता ॥ अपिच । मेथिकादीपनीरुच्यावद्धविट्‌क्रिमिशुक्रलुत् । रूक्षोष्णातत्फलंकासानिलश्लेष्मवमीन्जयेत् ॥

मेथिनी । स्त्री० मेथिकायाम् ॥

मेथी । स्त्री० मेथिकायाम् । गौरादित्वात्ङीष् । कृदिकारादितिवाङीष् ॥

मेद । पु० मेदसि । वपायाम् । शुक्रमांसस्नेहे ॥ अलम्बुषायाम् ॥ मेद्यति० । ञिमिदास्नेहने । घञ् ॥ वैदेहेननिषादभार्यायांजनिते० अन्त्यजविशेषे ॥

मेदपुच्छ । पु० दुम्बके । दुम्बा० दुम्बा० इ० भा० प्र० मेषविशेषे ॥ मेदपुच्छोद्भवमांसहृद्यवृष्यश्रमापहम् । पित्तश्लेष्मकरकिञ्चिद्वातव्याधिविनाशनाम्

मेदसारा । स्त्री० मेदायाम् ॥

मेदक । पु० जगले । सुराकल्के ॥ मेद्यतिञिमिदा० । क्वुनादिभ्यो वुन् ॥

मेदज । पु० भूमिजगुग्गुलौ ॥ त्रि० मेदोजवे ॥

मेद । न० शुक्रमांसप्रभवस्नेहविशेषे ॥ वपायाम् । वसायाम् ॥ मेदसस्वरूपयथा । यन्मांसस्वाग्निनापक्वतन्मेदइतिकथ्यते । तदतीवगुरुस्निग्धं तलकार्यंतिहृद्यम् ॥ स्थानयथा । मेदोहिसर्वभूतानामुदरेष्वस्थिषुस्थितम् अतएवोदरेवृद्धिःप्रायोमेदस्विनोभवेत् ॥ रोगविशेषे ॥ तन्निदानंयथा । अव्यायामदिवास्वप्नश्लेष्मलाहारसेविन । मधुरोन्नरसप्रायस्नेहान्मेदोविवर्द्धयेत् ॥ अन्नरस० आमद्रव अस्वस्थैवैगुण्ययथा । मेदसावृतमार्गत्वात्पुष्यन्त्यनेनधातव मेदस्युचीयतेतस्मादशक्तः सर्वकर्मसु ॥ मेद्यति । ञिमिदा० । असुन् ॥

मेदस्कृत् । न० मांसि ॥

मेदा । स्त्री० अष्टवर्गाङ्गौषधिविशेषे ।

मेदोद्भवायाम् । जीवन्त्याम् । श्रेष्ठायाम् ॥ मणिच्छिद्रायाम ॥ तद्गुण्यादियथा । गुलाकन्दोनखच्छेद्यो मेदोधातुमिवस्रवेत् । य सर्मदेतिविज्ञेयोजिज्ञासात्तपरैर्जनैः ॥ मेदायुग गुरुस्वादुर्वृष्य स्तन्यकफावहम् । बृंहण शीतल पित्तरक्त वातज्वरप्रणुत् ॥ मेदायुगम् ० मेदा महामेदे ॥ मेदामहामेदाख्याने घृतमूलीप्रचिपन्ति ॥

मेदिनी । स्त्री० काश्मर्याम् । मेदायाम् ॥ मह्याम् । भूमौ ॥ मेदमस्त्यस्याम् । मतद्धनि । मलघ्नोर्मे दकुष्ठक्रे तिशालिहोत्रेऽदन्तोपिमेदशब्दोस्ति ॥ यद्वा । मेद्यति । ञिमिदा० । ग्रह्यादित्वाण्णिनि ॥ मधुकैटभयोरासोन्मेदसैवपरिप्लुता । तेनेयमेदिनीदेवीप्रोच्यतेब्रह्मवादिभि ॥

मेदिनीद्रव । पु० पांशौ । धूलौ ॥

मेदुर । त्रि० सान्द्रस्निग्धे । अतिशयस्निग्धे ॥ मेदनशील '। ञिमिदा० । भञ्जभासमिदोघुरच् ।

मेदुरा । स्त्री० काकोल्याम् ॥

मेदोजम् । न० अस्थ्नि ॥

मेदोद्भवा । स्त्री० मेदायाम् ॥

मेदोम्र । पु० वर्णसङ्करजातिभेदे ॥

मेदोवती । स्त्री० मेदायाम् ॥

मेध । पु० यागे । क्रतौ ॥ मेधति । मेधृसङ्गमे ॥ पचाद्यच् ॥

मेधा । पु० मेधीभिधानेमुनिविशेषे ॥ वसिष्ठे ॥ स्वायम्भुवमनोपुत्रे ॥

मेधा । स्त्री० धारणावत्याबुद्धौ । अनेकग्रन्थार्थधारणशक्तौ ॥ अतीतानुस्मृतिमेधा तत्कालग्राहिणीमतिः । शुभाशुभविचारज्ञाप्रज्ञाधीरैरुदाहृता ॥ वृत्तिविशेष ॥ साचैयज्ञानस्य भार्या । यथा । ज्ञानस्यतिस्रोभार्यास्तुबुद्धिर्मेधाधृतिस्तथा । याभिर्विनाजगत्सर्वं मूढ मत्तसमंसदेति । मेधतेसङ्गच्छतेसर्वमस्याम् । मेधृ० । गुरोश्च त्त्य । टाप् ॥ मेधाकरमौषध यथा । शङ्खपुष्पी वचासोमाब्राह्मीब्रह्मसुवर्चला । अभयाचगुडूचीचअटरूषकवाकुची ॥ एतैरचसमैर्भागैर्घृत प्रस्थं विपाचयेत् । कण्टकार्यारस प्रस्थं बृहत्याचसमन्वितम् ॥ एतद्ब्राह्मीघृत नामस्मृतिमेधाकर परम् ॥ * ॥

मेधाकर । पु० मेधाजनकेगणविशेषे यथा । सतताध्ययनं तत्त्वज्ञानकथासदा श्रेष्ठानांतन्नशास्त्राणामवलोकनमेवच । सद्विजाचार्यसेवाच गणोमेधा कर स्मृत ॥

मेधाकृत स्त्री० सुनिषण्णके । सिता

वरशाकि । त्रि॰ मेधाकारके ॥
मेधाजित् । पु॰ कात्यायनमुनौ ।
मेधातिथि । पु॰ मुनिविशेषे । कण्व
ऋषेः पुत्रे ।
मेधारुद्र । पु॰ कालिदासे ॥
मेधावती । स्त्री॰ महाज्योतिष्मत्याम्
त्रि॰ मेधाविशिष्टायाम् ॥ मेधाना
न्॰ मेधावत्॰ द्र॰ पुनपुंसक
यो ॥
मेधाविक्रम् । न॰ तीर्थविशेषे ॥
मेधावी । पु॰ शुकपक्षिणि ॥ पण्डिते
॥ व्याडौ ॥ मदिरायाम् ॥ त्रि॰मे
धान्विते ॥ प्रज्ञातिशयवति । ऊहा
पोहसमर्थे ॥ शमदमसर्वकर्मोपरम
गुरूपसदनादिसंमवापिकाङ्गयुक्ते
नमननिदिध्यासनाख्यवेदान्तवा-
क्यविचारेणपरिनिष्पन्न वेदान्तम-
हावाक्यकरणकनिरस्तसमस्ताप्रामा
ण्याशङ्कचिदन्याविषयकमहब्र-
ह्मास्मीतिब्रह्मात्मैक्यज्ञानमेवमेधा
॰तयानित्य युक्ते ॰स्थितप्रज्ञे॰विप
श्चिति ॥ मेधास्यास्ति । अस्माया-
मेधास्रजोविनि ॥
मेधाविनी । स्त्री॰ब्रह्मणः पत्न्या
म् ब्राह्म्याम् ॥
मेधि । पु॰ खलेशाल्याम् । खलेपशु
बन्धनायारोपितेकाष्ठे ॥ पुंसिमेधि
खलेदारुन्यस्त यत्पशुबन्धने ॥ मे-
ध्यन्ति पशवोऽत्र । मेधृ॰ । इन् ॥

मेधिर । त्रि॰ मेधाविनि ॥
मेध्य । पु॰ यवे ॥ छागे ॥ खदिरे॥
त्रि॰पवित्रे । शुचौ । शुद्धे । यज्ञि
ये ॥ मेधनार्हम् । मेधृ॰ । ऋहलो
र्ण्यत् ॥ मेधायैहितोवा । उगवा-
दिभ्योयत् ॥ मेधामर्हतिवा । द-
ण्डादिभ्यायत् ॥ मेधइववा शा
खादिभ्योय ॥ ज्ञानेनमेध्यमखि
लममेध्य ज्ञानतोभवेत् । ब्रह्मज्ञा
नेसमुत्पन्नेमेध्यामेध्यनविद्यते ॥
मेध्या । स्त्री॰ रक्तवचायाम् ॥ रोच-
नायाम् ॥ केतक्याम् ॥ ज्योति-
ष्मत्याम् ॥ शङ्खपुष्प्याम् ॥ ब्रा
ह्म्याम् ॥ मेधायैहिता । यत् ।
टाप् ॥ योषिति । नायाम् ॥ सो
मः शौचं ददौस्त्रीणांगन्धर्वश्चशुभा
गिरम् । पावकः सर्वमेध्यत्वं मे
ध्यावैयोषितोह्यत ॥
मेनका । स्त्री॰ हिमालयस्यभार्याया-
म् । अपर्णामातरि ॥ स्वर्वेश्याया-
म् । शकुन्तलायाजनयित्र्याम् ॥
मेनकात्मजा । स्त्री॰ गिरिजायाम् ।
दुर्गायाम् ॥ मेनकाया आत्म-
जा ॥
मेनकापति । पु॰ हिमालये ॥
मेनकापुत्र । पुं॰ मैनाके ॥ मेनका
या पुत्र ॥
मेनकाप्राणेश । पु॰ हिमालये ॥
मेना । स्त्री॰ मेनकायाम् । हिमाद्रे

र्भायायाम् ॥

मेनाजा । स्त्री० पार्व्वत्याम् ॥

मेनाद । पु० केकिनि । मयूरे ॥ मार्जारे ॥ छगले । छागे ॥

मेनाधव । पु० उमागुरौ । हिमालये ॥

मेनासुत । पु० मैनाके ॥

मेय । त्रि० प्रमेये ॥ मानाधीनामेयसिद्धि ॥ मीयते । माङ् माने । अचोयत् । ईद्यति । गुण ॥ मातुपरिच्छेत्तु योग्योऽश ॥

मेयाभ । त्रि० मेयसमानाकारे ॥ मेघसमानाभेशाभायस्य ॥

मेरक । पु० विष्णो ॥ असुरभेदे

मेरु । पु० सुमेरौ । अत्युच्छ्रिताना शिखरिणामध्ये भगवतो विभूतौ । हेमाद्रौ । रत्नसानौ । सुरालये ॥ जम्बुद्वीप स्थितेनाभिस्तद्वृत्त लक्षयोजनम् । क्षाराब्धिनापरिवृतम् परिवृत्तमतावता ॥ तस्यमध्ये स्थित शैलराजराजोहिरण्मय । तिरस्कृताशुमज्ज्योतिर्मेरु सुरनिषेवित सषोडशसहस्राणिस्थितोविष्टोमहीतलात् । तदूनमुन्नतोऽत्र मूलेषोडशविस्तृत ॥ समेरुर्भूमेरन्त षोडशयोजनसहस्राणिप्रविष्ट . महीतलादारभ्यऊर्द्ध्व यावच्चतुरशीति योजनसहस्रोन्नति मूलेचषोडश सहस्रविस्तार । ऊर्द्ध्वतोद्व्यशराव
कृतिविस्ताराधिक्येनद्वै गुण्यम् । उक्तञ्चश्रीमत्स्यतन्त्रे । षोडशैकसहस्राणिबुधभागेप्ररोपित । तान्यस्यमूलेविस्तार स्यादूर्द्ध्व द्विगणस्तु स ॥ शरावाकृतिर्देविमेरुर्देवा . श्रयोद्रिराट् । इति । विष्णुपादान्तेर्ष्वस्यचतुर्व्विषुपर्वसु । नेमय कटकाकारानिर्गतादीप्तिमत्तरा ॥ एकादशसहस्रातुमनुसाहस्रकोपरा । नेमिर्यामस्तकोपान्तेलोकपालसमाश्रया ॥ चक्रवाटेतितामाहु सर्वरत्नप्रभावतीम् । अस्यमेरो सोच्छ्रायपादेनपञ्चविंशतिसहस्रात्मकेनान्तरयेणातेषु तथाविधेषु त्तरचतु ससहस्रविस्तृतेषु पर्वसुभागसन्धिषु-कटकाकारा सुष्ठु दीप्तास्तिस्रोनेमयोमेखलानिर्गता ० तदेवेषु-विषुस्थानेषुचतुर्ष्वित्यद्वर्शयति । एकादशसहस्रे स्यादिना० एकाचाद्वादशसहस्रप्रमाणा० द्वितीयामनुसाहस्रिकाचतुर्दशसहस्रा० चतुर्द्दशत्वोत्तेस्त० तृतीयाऽष्टादशसाहस्रविस्तृता । सानेमिर्यामस्तकसमीपेलोकपालाश्रयभूताचानेकरत्नप्रभाभासुराच० तांचक्रवाटोक्त्याआगमज्ञाआहु । एवञ्चप्रागुक्तचतुरशीतियोजनसहस्रोच्छ्रायस्यमेरो पर्वत्रयपञ्चसप्ततिसहस्रमानकम् । कटकत्रयस्तुनवसहस्रोन्नत

